# आमुखम्

यद्यपि शिक्षादिषु वेदाङ्गेषु ज्योतिःशास्त्रमप्यन्यतमम् इति नाविदितं विदुषाम्। तच्च वेदपुरुषस्य नयनमुच्यते। तदुक्तं मुण्डकश्रुतौ पाणिनीयशिक्षायां च—

'द्वे विद्ये वेदितव्ये परा चैवापरा च, तत्रापरा—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम् इति।'

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥ इति॥

अनधीतज्योतिःशास्त्रो वेदविषयेऽन्ध इव भवतीति शास्त्रकृतामभिप्रायः। वेदवाटिकारामणीयकं ज्योतिर्ज्ञानेन चक्षुष्मतैवानुभवितुं शक्यते, नान्येन, अत्रेदं किञ्चिदिव विविच्यते—एकत्र श्रुताविदमाम्नायते—

'कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।
त आ ववृत्रन् सदनाद् ऋतस्यादिद् घृतेन पृथिवी व्युद्यते।'

अथमस्यार्थः—सूर्यरश्मयो जलं धारयित्वा द्युलोकमायान्ति, ते कृष्णे नियाने=दक्षिणायने द्युलोकात् पर्यावृत्य मेघरूपेण मध्यममन्तरिक्षलोकं प्राप्नुवन्ति, यच्च ऋतस्य सदनम्=अपां गृहमित्युच्यते, ततो वृष्टिर्भवति। अथ कोऽसौ दक्षिणायनाख्यः कालो यत्र वृष्टिर्जायते? कश्चापरः कालः (उत्तरायणाख्य) यत्रासौ मरीचिमाली जलानि स्वमरीचिष्वाधत्ते? एतत् सर्वं ज्योतिषशास्त्रादेवावगन्तुं शक्यम्। अथायमपरो मन्त्रस्तत्रभवतां पाठकानां पुरस्तादुपस्थाप्यते—

'स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः।
स्वस्तिनस्तार्क्ष्योऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु॥'

अत्र मन्त्रे समस्तं खमण्डलं चतुर्दिगवस्थितैश्चतुर्भिर्नक्षत्रैश्चतुर्धा विभक्तमुपदिष्टम्। इन्द्रशब्देन चित्रानक्षत्रं गृह्यते, तैत्तिरीयशाखानुसारेण चित्रानक्षत्राधिपतिरिन्द्र एव। भारतस्य श्रीसाविदेशान्तरस्य च प्राचीनेषु नक्षत्रचित्रेषु चित्रानक्षत्रचित्रं लम्बकर्णोलूकाकारमुपलभ्यते, मन्ये तद् 'वृद्धश्रवाः' इतिमन्त्रोक्तेन्द्रविशेषणाधारेणैवोत्प्रेक्षितम्, अथवा चित्रानक्षत्रे ताराणां तादृशसन्निवेश एव तादृगाकृतिकल्पने मूलम्। कौशिक इतीन्द्रोलूकयोः समाना संज्ञा, 'निनाय बिभ्यद्दिवसानि कौशिकः' इति शिशुपालवधे माघकव्युक्तावपि कौशिकशब्देनोभयोः प्रतिपादनम् अस्ति। 'पूषा' इति पदेन रेवतीनक्षत्रमभिप्रेतम्। पूषैव तस्य देवता। देवतानामभिरपि नक्षत्रनिर्देश इति प्राचां पन्था अत्राप्यनुवर्तत एव। अन्तिमनक्षत्रत्वाद् अस्य विश्ववेदस्त्वं मन्त्रे प्रोक्तम्। तृतीयं नक्षत्रं श्रवणनामकं तार्क्ष्यशब्देनात्रोपक्षिप्तम्। नक्षत्रेषु बहूनि तारासमूहरूपाण्यपि भवन्ति, श्रवणायामपि सन्ति तिस्रस्ताराः, तिसृणां ताराणां समूहः सम्प्रसारणादिव्याकरणप्रक्रियया तृक्षइत्युच्यते। तिसृणामृचां समूहस्तृचमिति यथा। तृक्ष एव स्वार्थिकेनष्यञा तार्क्ष्यइति भवति। अपि च तार्क्ष्य इति गरुडस्यापि संज्ञा, अनया संज्ञयात्र गरुडध्वजो विष्णुः सङ्केत्यते। गरुडवाहनो गरुडध्वजश्च विष्णुरिति पुराणविदां प्रसिद्धिः। श्रवणनक्षत्राधिपश्च विष्णुरिति ज्योतिर्वित्सु प्रथते। अतोऽपि तार्क्ष्यशब्देन श्रवणखेट एवात्र मन्त्रद्रष्टुरभीप्सित इत्यत्र नास्ति सन्देहः। अरिष्टनेमिरितिविशेषणेन सूचितं यदिदं श्रवणनक्षत्रं मरीचिमालिनः क्रान्तिवृत्तस्यान्तिमां सीमामधितिष्ठतीति। चतुर्थं नक्षत्रमिह पुष्यनामकं बृहस्पतिशब्देनोल्लिखितम्। बृहस्पतिर्हि तस्य देवता। देवताभिधानैर्नक्षत्रोल्लेख इति ज्योतिर्विदां शैलीति पुरस्तादुक्तमेव। अज्यौतिषज्ञः कथमस्य मन्त्रस्यार्थं विदाकरोत्विति साधूक्तं विद्वद्भिर्यज्ज्योतिर्विज्ञानशून्यो वेदार्थविषये सर्वथान्ध एवेति।

किञ्च यथा बीजं काले समुप्तं सिक्तं च क्रमशस्तरुरूपतां धत्ते, यथाकालं पुष्प्यति फलति च तथैव लौकिकानि वैदिकानि च सर्वाण्यपि कर्माणि काले कृतान्येव फलानि प्रसवितुं प्रभवन्ति। अकालकृतं सर्वं विफलतामेति। कालज्ञानं च ज्योतिषज्ञानाधीनम्। 'कृत्तिकास्वग्नीन् आदधीत' इति वेदस्याज्ञा। 'कादच ताः कृत्तिकाः' इति पञ्चाङ्गविद एव जानीयुः, पञ्चाङ्गगणनायां च ज्योतिर्विद एव प्रभवः। 'देवतारामवाप्यादिप्रतिष्ठोदङ्मुखे रवौ' इति शास्त्रमुदङ्मुखे रवौ (उत्तरायणे) देवतादिप्रतिष्ठामनुशास्ति। कदा रविरुदङ्मुखो भवतीति तत्त्वतो ग्रहगणितज्ञ एवाववुध्यते। तदेवं ज्योतिर्ज्ञानं वेदार्थं कालादि जिज्ञासोर्नितान्तमपेक्षणीयमिति निर्विवादम्। चतुर्लक्षं ज्योतिषं शास्त्रमिति विदां प्रसिद्धिः। तच्च सिद्धान्त-संहिता-होराख्यैस्त्रिभिः स्कन्धैस्त्रिधा विभक्तमस्ति। तत्र सिद्धान्तस्कन्धे पाटीगणित—बीजगणित—रेखागणितादिकं सर्वविधं सिद्धान्तरूपं गणितं निरूपितं विद्यते। संहितास्कन्धे भूकम्पोल्कापातोपग्रह—वर्षणातिवर्षण-सुभिक्ष—दुर्भिक्षादियोगाः, स्वचक्र-परचक्रादिकं च प्रतिपादितम्। स्वर-शकुन-सामुद्रिक-शास्त्राणि चात्रैवान्तर्भवन्ति। होरास्कन्धे तु जातक-ताजिक-केरलीयप्रश्न-मुहूर्तादिकमन्तर्भवति।

तदेवमतिमहतोऽस्य परमोपयोगिनो ज्योतिःशास्त्रस्य पारिभाषिकाणां शब्दानां कोषो नाद्य यावत् केनचिल्लिखितः, लिखितोऽपि चेन्नाद्यापि विज्ञातः केनचिद् विज्ञातोऽपि चेन्नाद्यावधि प्राकाश्यमुपनीत इति विचार्य विदुषां तोषाय, ज्योतिःशास्त्राध्येतृणामुपकाराय, स्वान्तःसुखाय च ज्योतिर्महार्णवपारङ्गतेन, शास्त्रानुशीलनशीलेन, कोषशास्त्रतलावगाहिना, बिलालद्वानीरं जाह्नवीतीरमुपाश्रिते गढवालप्रदेशान्तर्गतग्राममण्डलमण्डनायिते खण्डनाम्नि ग्रामे निवसता, बडेथवालोपाह्वेन महाविदुषा मुकुन्ददैवज्ञेन विनिर्मितोऽयं ज्योतिषशब्दकोषो भारतशासनशिक्षामन्त्रालयदत्तद्रव्यसाहाय्येन मुद्रितः (प्रकाशितः) पाठकानां समक्षेसमुपस्थितो वर्तते। अनेकग्रन्थप्रणेतुरस्य शब्दकोषकृच्चक्रचूडामणेरेष द्वितीयो ग्रन्थः, यो भारतशासनशिक्षामन्त्रालयेन द्रव्यसाहाय्यं दत्वा प्रकाश्य च सम्मानितः।

अत्र ग्रन्थे पञ्चाङ्ग—काल—पर्वप्रभृतयः एकोनविंशतिवर्गाः सन्ति। तत्र दृष्ट्यादिपर्यायफलोदाहरणवर्गे दृष्टे स्थितश्च बहवः पर्यायाः सगृहीताः सन्ति। तत्प्रयोगोदाहरणान्यपि प्राञ्चितनतनोदाहृतानि। यौगिकशब्दानां योगार्थप्रदर्शनार्थं शब्दव्युत्पत्तिवर्गोऽप्यत्र निर्माय सन्निवेशितः। यच्छब्दसंबन्धेन यौगिकशब्दा निर्मितास्ते, तत्सम्बन्धिशब्दास्तत्पर्यायसमीप एव समुद्धृता द्रष्टव्याः। एकादिसंख्यावाचकशब्दानां पर्याया अपीतस्ततः समुद्धृत्य सन्निवेशिताः सन्ति।

आशासे ग्रन्थोऽयं, न केवलं ज्योतिर्विदां किन्तु, सर्वेषामपि संस्कृतवाङ्मयानुरागिणां रुचिकरो भवेत्। ज्योतिषशब्दकोषमिमम् उद्भाव्य ग्रन्थस्य ग्रन्थकृता सुरभारतीवाङ्मये चिरादनुवर्तमाना [1]न्यूनतैका परिहृतेति नातिरञ्जितं वचः।

अन्ते च ग्रन्थमधीत्य जातसंतोषः स्वान्तःसुखाय कोषलेखनप्रवृत्तस्य यदृच्छालाभसंतुष्टस्य ग्रन्थकर्तुर्विदुषः एकं प्रशस्तिपद्यं विलिख्य विरमति—

गङ्गौघमज्जननिरस्तसमस्त-कोषः जालोऽपि कोषरचनानिरतः सदा यः।
कस्तस्य चित्रचरितस्य मुकुन्दसूरेर्वक्तुं गुणान् सुतनुवाग्विभवः प्रभुः स्यात्॥

विदुषां वशंवदः
परमेश्वरानन्दः,
महामहोपाध्यायः विद्याभास्करः
केन्द्रसंस्कृतमण्डलस्य भूतपूर्वसदस्यः

1. कोषजालमिहान्नमयादिकोषसमूहः।

॥ श्री ॥

# आभार-प्रदर्शनम्


एतस्य ज्यौतिषशब्दकोषस्य प्रकाशनं भारतशासनदत्तद्रव्यसाहाय्येनैव शक्यसम्भवमभूदिति भारतशासनं प्रति सविनयं कृतज्ञतामात्मनः प्रकाशयामः ।

विद्यानुरागिणः शिक्षामन्त्रिणः डा० श्रीत्रिगुणसेनमहोदयाः, राज्यमन्त्रिप्रो०श्रीशेरसिंहमहोदयाः तथा राज्यमन्त्रिश्री भगवत झा आजादमहोदयाश्च, गढदेशजनपरमहितकारिणो विद्यानुरागिणः भारतशासनोपमन्त्रिणः श्रीभक्तदर्शनमहोदयाः, शिक्षामन्त्रालये संयुक्तसचिवास्पदमलङ्कुर्वन्तः श्री पी० डी० शुक्लामहाभागाः, तत्रैवोपसचिवपदे श्रीयुत् महाभागाः, तत्रैव असिस्टैन्ट ऐजूकेशनल एडवाइजर (संस्कृत) डाक्टर श्रीरामकरणशर्ममहाभागाः, डा० पद्मभूषणोपाधिसमलङ्कृताः श्रीसूर्यनारायणव्यासमहोदयाः, श्रीपण्डितवर्य्यमेदिनीधरडगवालराजज्योतिषिमहोदयाः, श्रीपण्डितशिवकुमारदीक्षितभृगुशास्त्रिमहोदयाः, तद्धर्म्मपत्नीश्रीमतीभृगुशास्त्रिणीमहाभागाश्च श्रीपण्डितवर्य्याः श्रीहरदेवशर्माणस्त्रिवेदिनोज्यौतिषाचार्य्यमहोदयाः, ज्योतिर्विदाचार्य्यचक्रधरजोशीमहाभागाः, श्रीपण्डितवर्य्यकिशोरीलालशर्माणोमहोदयाः, श्रीपण्डितवर्य्यकुशलानन्दध्यानीशास्त्रिमहोदयाः, श्री पं०जगद्रामशर्मवैद्यमैठाणीमहोदयाः, श्रीपण्डितचन्द्रशेखरशास्त्रिश्रोत्रीयमहोदयाः, मुद्रणालयाध्यक्षाऽस्माकं श्रीमती उज्ज्वला शर्मा विदुषी एम०ए० महोदयाः कविवर्य्याः श्रीबालकृष्णभट्टमहोदयाः, श्रीपण्डितभैरवदत्तकर्मभूमिसम्पादकमहोदयाश्च एतद् ग्रन्थप्रकाशनकर्मणि स्वसहानुभूति-वित्तसम्मत्यादिप्रदानेन अस्मान् बलवदुपकृतवन्तः इति तेषामपि धन्यवादपुरस्सरं वयमाभारिणः स्मः ।

श्रीश्रीधरप्रसादसाहित्याचार्य्येणापि एतत्पुस्तकानुक्रमणिकायाः पृष्ठाद्यङ्कलेखनकर्मणि अस्माकं साहाय्यं प्रतिपन्नमिति सोऽपिमहाभागोऽस्माभिः सादरमभिनन्द्यते धन्यवादैश्च पुरस्क्रियते। अन्ते च महामहोपाध्यायविरुदभाजः, श्रीपरमेश्वरानन्दशास्त्रिमहाभागान् प्रत्यपि वयं कृतज्ञतां वहामः, यैर्ग्रन्थमधीत्यास्य भूमिकालेखनक्लेशः सहर्षं सोढः ।

मुकुन्द आश्रम
गढवाल (उत्तरप्रदेश),
आषाढ शु० १५ शुक्रवार संवत २०२४ वि०

विदुषामशंवदो विनीतः
ग्रन्थ प्रणेता
मुकुन्दः ।

ज्योतिषशब्दकोषस्य सङ्केताक्षराणां विवरणम्—

अ० अकर्मक ।
अज० लिं० अजहल्लिङ्गो, नित्यलिङ्गो वा ।
अम० अमर—सिंह ।
अ० अव्यय अलिङ्ग निर्लिङ्गो वा ।
आत्म० आत्मनेपदी ।
आ० भ० आर्य्यभटीयम् ।
इ० इति० ग्रन्थकार ।
उ० प्र० उडुदायप्रदीप । (लघुपाराशरी)
उ० पु० उत्तमपुरुष ।
उ० भा० उदयभास्कर ।
उ० भ० उभयपदी ।
क० कु० करणकुतूहलम् ।
क० कश्यप ।
के० केतकीग्रहगणितम् ।
के० केशव ।
ग० गर्ग ।
गा० गार्गि ।
गि० ध० गिरिधर ।
ग्र० का० ग्रन्थकार । (मुकुन्द)
ग्र० अ० ग्रन्थान्तरम् ।
ग्र० ला० ग्रहलाघवम् ।
जा० प० जातकपद्धति ।
जा० पा० जातकपारिजातम् ।
जा० भ० जातकाभरणम् ।
जै० प० जैमिनीयपद्यामृतम् ।
ज्यो० भ० ज्योतिर्विदाभरणम् ।
ज्यो० त० ज्योतिस्तत्त्वम् ।
त्रि० पुंस्त्रीनपुंसकलिङ्ग त्रिलिङ्गो वा ।
दे० भा० देवीभागवतम् ।
द्वि० द्विकर्मक ।
न० नपुंसकलिङ्ग ।
न० ज० नरपतिजयचर्य्या ।
नी० क० नीलकण्ठी ।
प० क० पद्धतिकल्पवल्ली ।
प० प० परस्मैपदी ।
पु० पुंल्लिङ्ग ।
पुं० द्वि० पुंलिङ्गद्विवचनम् ।
पुं० ब० पुंलिङ्गबहुवचनम् ।
पुं० न० द्विलिङ्गता, पुंनपुंसकलिङ्ग ।
पु० स्त्री० द्विलिङ्गता, पुंस्त्रीलिङ्ग ।
प्र० पु० प्रथमपुरुष ।
प्र० मा० प्रश्नमार्ग ।
बी० ग० बीजगणितम ।
बृ० जा० बृहज्जातकम् ।
बृ० पा० बृहत्पाराशरी ।
बृ० स० बृहत्संहिता । (वाराहीसंहिता)
भा० प्र० भावप्रकाश ।
भा० व० भागवतम
भृ० सि० भृगुसिद्धान्त ।
म० वि० मकरन्दविवरणम् ।
म० पा० मदनपारिजातम् ।
म० पु० मध्यमपुरुष ।
म० सि० महासिद्धान्त ।
मु० प० मुकुन्दपद्धति ।
मु० चि० मुहूर्त्तचिन्तामणि ।
र० व० रघु (रघुवंश) ।
रा० व० रामवचन ।
ल० लट् (वर्त्तमाने लट्) ।
ली० व० लीलावती ।
लो० लोट् ।
वा० भ० वाग्भट ।
वि० मा० विद्यामाधवीयम् ।
वि० लि० विधिलिङ्गम् ।
वि० वृ० विवाहवृन्दावनम् ।
वै० वैजयन्तीकोष । (यादव)
श० चि० शब्दार्थचिन्तामणिकोष ।
श० हो० शम्भुहोराप्रकाश ।
शी० बो० शीघ्रबोध ।
श्लो० श० श्लोकशतकम् ।
स० सकर्मक ।
स० अ० सकर्मकाकर्मक ।
स० चि० सर्वार्थचिन्तामणि । (वेङ्कटेश)
सा० व० सारावली । (कल्याणवर्मा)
सि० शि० सिद्धान्तशिरोमणि । (भास्कर)

सि० शे० सिद्धान्तशेखर ।
(श्रीपति ) ।
सू० सि० सूर्यसिद्धान्त ।
(मयः) ।
स्त्री० स्त्रीलिङ्ग ।
स्त्री० द्वि० स्त्रीलिङ्गद्विवचनम्
स्त्री०ब० स्त्रीलिङ्ग बहुवचनम् ।
ह० यु० हलायुधकोष ।
हा० व० हारावलीकोष ।
है० हैम, हेमचन्द्रकोष ।
हो० च० होडाचक्रम् ।

गणितक्रियायाश्चिह्नाना विवरणम्—

+ धनचिह्नम्, योग, सङ्कलनम् (जोड) ।
— ऋणचिह्नम्, वियोग, व्यवकलनम्, (अन्तर, घटाना) ।
× गुणनचिह्नम्, गुणनकर्म, गुणनक्रिया (गुणा करना) ।
÷ भजनचिह्नम्, भजनक्रिया, भाग (भाग देना) ।
² वर्गचिह्नम्, कृति, समद्विघात (वर्ग करना) ।
√ वर्गमूलचिह्नम् । (वर्गमूल लेना)
³ घनचिह्नम्, समत्रिघात ।
³√ घनमूलचिह्नम् । (घनमूल लेना) ।
. दशमलवचिह्नम् ।
= समानचिह्नम् ।
° अंशचिह्नम् ।
′ कलाचिह्नम् ।
″ विकलाचिह्नम् ।
(प्रसङ्गत)

लेखनक्रियायाश्चिह्नानां विवरणम्—

अवान्तरविरामचिह्नम् ;
अर्द्धविरामचिह्नम् ,
पूर्णविरामचिह्नम् ।
प्रसङ्गसमाप्तिचिह्नम् ॥
प्रश्नचिह्न काकुचिह्नम् च ?
सम्बोधनखेदाऽऽश्चर्यचिह्नं च !
उद्धरणचिह्नम् ' ', " "
पर्यायचिन्हसंयोगचिह्नं च =
सन्धिविच्छेदचिह्नम् +
निर्देशचिह्नम् —
पाठान्तरचिह्नम् { }
मध्येभावप्रदर्शक चिह्नं च [ ]
त्रुटिपूर्तिचिह्नम् ‸
अपूर्णपाठचिह्नम् ......
समासे पदविभागसौकर्य-चिह्नं च ।-

अथ—

## पञ्चाङ्गवर्गः प्रारभ्यते

### तत्रादौ—

पञ्चाङ्गपर्यायाः—पञ्चाङ्गम्,पञ्जिः, पञ्जिका पञ्जी, तिथिपटम्, तिथिपत्रिका, तिथिपत्री।

पञ्चाङ्गावयवभेदाः—(१) तिथिः, (२) वारः, (३) नक्षत्रम्, (४) योगः, (५) करणम्, चेत्येतानि पञ्चाङ्गस्य पञ्च भेदाः स्युः।

तदुक्तम्—

तिथिर्वारश्च नक्षत्र योगः करणमेव च, पञ्चाङ्गस्य फलश्रुत्वा गङ्गास्नानफल लभेद्' इति। अपि च—'वारो हरति दुःस्वप्न नक्षत्र पापनाशनम्। तिथिर्भवति गङ्गाया योगः सागरसङ्गमः। करण सर्वतीर्थानि श्रूयते यत्र पञ्जिका' इति शब्दार्थचिन्तामणिः।१६।२।१।

तिथिपर्यायाः—कर्मवाटिका, कर्मवाटी, कला, तिथिः (पु० स्त्री०) तिथी (स्त्री)।

तिथिनामानि—(१) प्रतिपदा, (२) द्वितीया (३) तृतीया, (४) चतुर्थी, (५) पञ्चमी, (६) षष्ठी, (७) सप्तमी, (८) अष्टमी, (९) नवमी, (१०) दशमी, (११) एकादशी, (१२) द्वादशी, (१३) त्रयोदशी, (१४) चतुर्दशी, (१५) पूर्णिमा चेति शुक्लपक्षे तिथिनामानि। एवं कृष्णेऽपि। परन्तु तत्र पूर्णिमास्थाने (३०) 'अमावास्या'इति सञ्ज्ञा ज्ञेया।

शुक्लप्रतिपदापर्यायाः—अग्नितिथिः, अजातचन्द्रा, आग्नेयी, आदिमा, आद्या, एकपक्षतिः, पक्षतिः, प्रतिपत् (द्) प्रतिपदा, प्रथमा, सितास्या।

द्वितीयापर्यायाः—द्वितीया, धातृतिथिः, निपक्षतिः।

तृतीयापर्यायाः— गिरिजातिथिः, गौरीतिथिः, तृतीया।

चतुर्थीपर्यायाः—गणेशतिथिः, चतुर्थी, लम्बोदरतिथिः।

पञ्चमीपर्यायाः—अहितिथिः, पञ्चमी, सर्पतिथि।

षष्ठीपर्यायाः—कार्तिकेयतिथिः, षष्ठी, स्कन्दतिथि।

सप्तमीपर्यायाः—दिनकृत्तिथिः रवितिथिः सप्तमी।

अष्ठमीपर्यायाः—अष्टमी, महेशतिथिः।

नवमीपर्यायाः—दुर्गातिथिः, नवमी।

दशमीपर्यायाः—अन्तकतिथिः, दशमी, यमतिथि.।

एकादशीपर्यायाः—एकादशी, विश्वेदेवतिथिः।

द्वादशीपर्यायाः—द्वादशी, विष्णुतिथिः, हरितिथिः।

त्रयोदशीपर्यायाः—कामतिथिः त्रयोदशी।

चतुर्दशीपर्यायाः—कलिः, चतुर्दशी, पाट्टरः, शिवतिथिः।

पूर्णिमापर्यायाः—चन्द्रमाता (तृ), चान्द्री, धर्म्मवासरः, निरञ्जना, पित्र्या, पूर्णमा, पूर्णमासी, पूर्णा, पूर्णिका, पूर्णिमा, पौर्णमासी, पौर्णमी। इति।

पूर्णिमाया भेदौ—(१) अनुमतिः, (२) राका चेति पूर्णिमाया द्वौ भेदौ स्याताम्। यत्र चन्द्रः कलोनस्तत्र 'अनुमतिः'। यत्र स परिपूर्णस्तत्र 'राका' ज्ञेया।

कृष्णप्रतिपदापर्यायाः—कलोनचन्द्रा, कृष्णास्या, बहुलमुखा। शेषपर्यायास्तु शुक्लपक्षवज्ज्ञेयाः।

कृष्णचतुर्दशीपर्यायाः—भूतः, भूता, भूतेष्टा। शेषपर्यायास्तु शुक्लपक्षवज्ज्ञेयाः।

अमावास्यापर्यायाः—अमा, अमामसी, अमामस्या, अमावसी, अमावस्या, अमावासी, अमावास्या,

**तिथिक्षय**, **दर्श**, पितृतिथि, विगतचन्द्रतिथि विधुक्षय, सूर्येन्दुसङ्गम इति।

**अमाया भेदौ**—यदि दृष्टचन्द्रा सा तदा (१) 'सिनीवाली'। नष्टचन्द्रे तु सा (२) कुहु, कुहू, इति अमाया द्वौ भेदौ स्याताम्।

**तिथिस्वामिनामानि**—(१) अग्नि, (२) ब्रह्मा (अन्), (३) गौरी, (४) गणेश, (५) सप, (६) स्कन्द, (७) रवि, (८) शिव, (९) दुर्गा (१०) यम, (११) विश्वेदेवा (पु० व०), (१२) विष्णु, (१३) काम, (१४) शिव, (१५) चन्द्र, (३०) पितर (पु० व०) (पितामहा)।

**तिथिभेदा**—(१) नन्दा (२) भद्रा, (३) जया, (४) रिक्ता, (५) पूर्णा चेत्येते तिथीना पञ्च भेदा स्यु।

**नन्दातिथिनामानि**—प्रतिपदा, षष्ठी, एकादशी, इति।

**भद्रातिथिनामानि**-द्वितीया, सप्तमी द्वादशी इति।

**जयातिथिनामानि**—तृतीया, अष्टमी त्रयोदशी, इति।

**रिक्तातिथिनामानि**—चतुर्थी नवमी चतुर्दशी इति।

**पूर्णातिथिनामानि**—पञ्चमी, दशमी पूर्णिमा, इति।

**एकयोक्त्या पूर्णिमादर्शयो पर्याया**—नन्दिवर्द्धनौ पक्षान्तौ, पञ्चदश्यौ (स्त्री० द्वि०) पर्वणी (अन) (न० द्वि०), यज्ञकालौ इति।

**पर्वमूलपर्याय**—भूतेष्टापञ्चदश्यायदन्तर तत 'पर्वमूलम' इति।

**पर्वसन्धिपर्याय**—प्रतिपत्पञ्चदश्योयदन्तर स 'पर्वसन्धि' इति।

१-३२

**पक्षमूलपर्याया**—पक्षति (स्त्री०), पक्षती (स्त्री), पक्षमूलम्, इति।

**अशुभतिथिनामानि**—(१) चतुर्थी (२) नवमी (३) चतुर्दशी, (४) अमावास्या चेताश्चतस्रो ऽशुभतिथय स्यु। एता शुभे वर्ज्या।

**वारपर्याया**—अवसर अह (न्) दिनम, वार वासर, वेला, इति।

**वारनामानि**—(१) रविवार, (२) सोमवार (३) मङ्गलवार, (४) बुधवार (५) गुरुवार (६) शुक्रवार, (७) शनिवार-श्चेत्येते सप्त वारा स्यु।

**क्रूरवारनामानि**—(१) रवि (२) मङ्गल (३) शनिश्चेते त्रय क्रूरवारा स्यु।

**सौम्यवारनामानि**—(१) सोम, (२) बुध (३) गुरु (४) शुक्रश्चेते चत्वार सौम्यवारा स्यु।

**क्रूरवाचकशब्दा**—अशुभम् अशोभनम, असत्, उग्रम् क्रूरम् पापम।

**सौम्यवाचकशब्दा**—शुभम् शोभनम् सत सौम्यम।

**नक्षत्रपर्य्याया**—उडु (न०) उडु, (स्त्री०) ऋक्षम् ग्रह, चन्द्रदारा (पु० ब०), ज्योति (इस्) (न०) तारम तारकम् तारका, तारा, दक्षजा (स्त्री० ब०), दाक्षायण्य (स्त्री० ब०) दिवाभीतम्, धिष्ण्यम् नक्षत्रम् भम भासन्त भासन्ती(स्त्री०) रात्रिजम, रात्रिदृश्यम्, सत् ? स्तृ ?। इति।

**नक्षत्रनामानि**—(१) अश्विनी, (२) भरणी (३) कृत्तिका (४) रोहिणी (५) मृगशीर्षम् (६) आर्द्रा (७) पुनर्वसु (८) तिष्य (पुष्य), (९) आश्लेषा, (१०) मघा, (११) पूर्वाफाल्गुनी, (१२) उत्तराफाल्गुनी

३३-६३

ज्यौतिषशब्दकोषस्थशब्दानां

# वर्गानुक्रमणिका ।


पृ० पृ०

(१) पञ्चाङ्गवर्गः ।……………… १—१०,
(२) कालवर्गः ।……………… ११—२०,
(३) पर्ववर्गः ।……………… २०—२५,
(४) राशिवर्गः ।……………… २५—२६,
(५) ग्रहवर्ग ।……………… २६ ५८,
(६) मानवर्गः।……………… ५८—७०,
(७) गणनावर्गः।……………… ७०—६६,
(८) ग्रहगणितवर्गः ।……………… ६६—१२१,
(९) भावादिवर्गः।……………… १२१—१३१,
(१०) मुहूर्तादिवर्गः ।……………… १३१—१४०,

पृ० पृ०

(११) आयुर्दायादिवर्गः।……………… १४०—१४४,
(१२) दृष्ट्यादिपर्यायफलोदाहरणवर्गः ।……………… १४५—१६८,
(१३) धातुवर्गः ।……………… १६८—१६७,
(१४) देववर्गः ।……………… १६७—२३३,
(१५) दिग्वर्गः।……………… २३३—२३६,
(१६) दिक्पालवर्गः।……………… २३६—२४७,
(१७) पुर वर्गः ।……………… २४७—२४६
(१८) प्रकीर्णवर्गः ।……………… २४६—२५८,
(१९) शब्दव्युत्पत्तिवर्गः ।……………… २५६—२७२,

'स्वान्तःसुखाय गणनेदकाया 'मुकुन्दः'

श्रीमुकुन्ददैवज्ञविरचित

# ज्यौतिषशब्दकोषः ।



श्रीनन्दनन्दनाय नमः ।

नत्वा श्रीकृष्णचन्द्रस्य पवित्रं पादपङ्कजम् ।
त्रिस्कन्धज्यौतिषात्प्रायः शब्दानादाय सङ्ग्रह ॥१॥
क्रियतेऽयं मुकुन्देन प्रीत्यै होराविदां मया ।
अन्ये साहित्यिकाः शब्दा ग्राह्या हैमादिकोषतः ॥२॥

नत्वेति क्रियत इति च। श्रीकृष्णचन्द्रस्य श्रीनन्दनन्दनस्य पवित्र पूत, पादपङ्कज चरणसरोरुह नत्वा प्रणम्य मया मुकुन्देन प्रायो बाहुल्येन त्रिस्कन्धज्योतिषात् 'सिद्धान्त'–'संहिता'–होरे'ति स्कन्ध-त्रयात्मकज्यौतिषशास्त्रात्' शब्दाञ्जात्यादीश्चतुर्विधान् शब्दान् आदाय गृहीत्वा अयमेष सङ्ग्रह, समाहृति. क्रियते विधीयते। गद्यमय पद्यमयश्चेति शेष.। कस्मै प्रयोजनाय, होराविदा हौरिकाणा प्रीत्यै तुष्ट्यै हिताय वा। इह नु अन्ये इतरे साहित्यिका साहित्यसम्बन्धिनो जात्यादयश्चतुर्विधा शब्दा हैमादिकोषतो हैमामरपुरुषोत्तमदेवप्रभृतिभिर्विरचिता ये कोषास्तेभ्यो ग्राह्या ग्रहीतुमुचिता इत्यर्थः।

(१३) हस्त, (१४) चित्रा, (१५) स्वाति, (१६) विशाखा, (१७) अनुराधा, (१८) ज्येष्ठा (१९) मूलम (२०) पूर्वाषाढा, (२१) उत्तरा षाढा, (अभिजित्) (त) (न०), उत्तराषाढाया-श्चतुर्थांशस्य श्रवणादिचतुर्दण्डस्य च अभिजित्'इति संज्ञा स्यात्। तदुक्तं मुहूर्तचिन्तामणौ—वैश्वप्रान्त्याङ्घ्रिश्रुतितिथिभागतोऽभिजित्स्यात्। इति।(२२) श्रवण, (२३) धनिष्ठा (२४) शतभिषा (२५) पूर्वाभाद्रपदा, (२६) उत्तराभाद्रपदा, (२७) रेवती, चेत्येतानि सप्तविंशति नक्षत्राणि स्युः।

सलिङ्गनक्षत्रनामानि—अश्विन्यौ (स्त्री० द्वि०)। भरण्य (स्त्री० व०) क्वचित्तु भरणि (न०),। कृत्तिका (स्त्री० व०) कृत्तिका (स्त्री०)। रोहिणी (स्त्री०)। मृगशिर (अस्) (न०), मृगशिर (पु०) मृगशिरा (अस्) (स्त्री०) मृगशीर्षम् (न०,) मृगशीर्षा (स्त्री०)। आर्द्रा (स्त्री०),। पुनर्वसू (पु० द्वि०) क्वचित्तु-पुनर्वसु (पु०),। तिष्य पुष्य (पु०)। आश्लेषा (स्त्री० व०),। मघा (स्त्री० व०) क्वचित्तु-मघा (स्त्री०),। पूर्वाफाल्गुन्यौ (स्त्री० द्वि०)। उत्तराफाल्गुन्यौ (स्त्री० द्वि०),। हस्त (पु०) हस्ता (स्त्री०)। चित्रा (स्त्री०),। स्वाति (पु० स्त्री०), स्वाती (स्त्री०),। विशाखे (स्त्री० द्वि०),। अनुराधा (स्त्री० व०) अनूराधा (पु० व०),। ज्येष्ठा (स्त्री०),। मूल (पु०) मूलम् (न०),। पूर्वाषाढा (स्त्री० व०)। उत्तराषाढा (स्त्री० व०),। अभिजित् (त्)(न०),। श्रवण (पु०), श्रवणा (स्त्री०)। धनिष्ठा (स्त्री० व०)। शतभिषा (स्त्री०),। पूर्वाभाद्रपदा (स्त्री० व०)। उत्तराभाद्रपदा (स्त्री० व०),। रेवती (स्त्री०),। इति।

१–२३ २४–४६

नक्षत्राधिदेवतानामानि—(१) दस्रौ (पु० द्वि०) (२) यम, (३) अग्नि, (४) ब्रह्मा (अन्) (५) चन्द्र, (६) रुद्र, (७) अदिति, (८) जीव, (९) सर्प, (१०) पितर (पु० व०) (११) भग, (१२) अर्यमा (अन्), (१३) रवि, (१४) त्वष्टा (ष्टृ), (१५) वायु, (१६) शक्राग्नी (पु० द्वि०), (१७) मित्र, (१८) शक्र (१९) निरृति, (२०) आप (स्त्री० व०), (२१) विश्वेदेवा (पु० व०) (अभिजितोविधि), (२२) गोविंद, (२३) वसु, (२४) वरुण, (२५) अजैकचरण, (२६) अहिर्बुध्न्य (२७) पूषा (अन्)। इति।

नराणां राशिनाम्ने[1] नक्षत्राणां पादवशतो विशेषसंज्ञा—चू चे चो, ला, (आश्विनी),।

१ इह प्रसिद्धनाम्नो यदाद्यमक्षरं तद्वशेन चू, चे, चो, ला इत्यादितो यो राशिर्भवति स नामराशिर्ज्ञेयः। एवं यस्य नक्षत्रस्य यस्मिन्पादे जन्म तद्वशेन जन्मराशिर्ज्ञेयः।

तत्रादौ नामराशेः प्राधान्यमुक्तं ग्रन्थान्तरे—

'देशे, ग्रामे, गृहे, युद्धे, सेवायां, व्यवहारके, नामराशेः प्रधानत्वं, जन्मराशिं न चिंतयेत्।।इति।।

जन्मराशेः प्राधान्यमुक्तं तत्रैव—

'विवाहे, सर्वमाङ्गल्ये, यात्रादौ, ग्रहगोचरे। जन्मराशेः प्रधानत्वं, नामराशिं न चिंतयेत्' ।।इति।।

अत्र ग्रन्थान्तरे तु विशेष उक्तः—

'देशे, ज्वरे, ग्राम,-गृहप्रवेशे, सेवासु, युद्धे, व्यवहारकार्ये,।

द्यूते, च दानादिषु नामराशिर्यात्रा,-विवाहादिषु, जन्मराशिः ।।इति।।

विचिन्त्य इति शेषः।

लौ, लू, ले, लो, (भरणी), । आ ई ऊ ए, (कृत्तिका), । ओ, वा, वी, वू, (रोहिणी), । वे, वो, का, की, (मृगशीर्षम्) । कू, घ, ङ छ (आर्द्रा), । के, को, हा, ही, (पुनर्वसु), । हू, हे, हो डा (तिष्य), । डी, डू डे, डो, (आश्लेषा) । मा, मी, मू मे, (मघा), । मो टा, टी टू (पूर्वाफाल्गुनी), । टे, टो, पा, पी (उत्तराफाल्गुनी), । पू ष ण, ठ, (हस्त), । पे पो, रा री, (चित्रा) रू, रे, रो ता (स्वाती) । ती तू ते तो (विशाखा), । ना, नी, नू ने (अनुराधा), । नो, या यी, यू (ज्येष्ठा) । ये, यो, भा, भी, (मूलम्), । भू ध, फ ढ (पूर्वाषाढा) । भे भो, जा, जी, (उत्तराषाढा), । जू, जे जो खा, (अभिजित्), । खी, खू खे, खो, (श्रवण) । गा, गी गू, गे, (धनिष्ठा), । गो, सा, सी, सू (शतभिषा) । से, सो, दा, दी, (पूर्वाभाद्रपदा) । दू थ, झ ञ (उत्तराभाद्रपदा) । दे दो, चा ची (रेवती), । इति नराणां राशिनाम्नेऽश्विन्या दिनक्षत्रतुर्यपादानां विशेषसंज्ञा । इह प्रसङ्गात् नाम्न आद्याक्षरनिर्णय उक्तो ज्योतिस्तत्त्वे —

५, ३६ ।

'अक्षरा ङ ञ णा नोक्ता आदौ नाम्ना न सन्ति त । यदा भवन्ति गजडा विन्यासे यथाक्रमम्'

॥इति ॥

**नामपर्याया** —अभिख्या अभिधा, आख्या, आह्वय, आह्वा, गोत्रम् नाम (अन्) नामधेय, संज्ञा । उक्त च —हैमे-अथाह्वयोऽभिधा । गोत्र संज्ञानामधेयाऽऽख्याऽऽह्वाऽभिख्याश्चनाम चेति २।२

**अश्विनीप०** -अमृतादनवैद्यभम् अश्विनी, अश्वियुक् आदिभम् आद्यम तुरङ्ग त्रिदशदोपवित्-द दस्रदेवता दास्रम् दास्रदैवत्यम् देवदोपज्ञौ, देववैद्यभम नासत्यौ प्रथमभम यमलौ, यमौ वालिनी, सुरचिकित्सकौ, सुरभिषजौ (ज) सुर-

१–३३

वैद्यभम्, हय, शेषपर्यायास्तु नासत्याश्वप्रयौगिकशब्दतश्चोहनीया ।

**भरणीपर्याया** —अन्तक, अपभरणी आन्तकम् काल, कृतान्त, दण्डधर, दण्डेश भरणि, भरणि, भरणी, यम, यमदेवता यमदैवतम् यमदैवत्यम् याम्यम याम्यभम योग्या, शमन, शामनम्, सूरज, सौरि शेषपर्यायास्तु यमपर्यायत ऊहनीया ।

**कृत्तिकापर्याया** —अग्नि, अग्निदेवा अग्निदैवतम्, अग्निदैवत्यम् अनल, आग्नेयम कार्शानवम्, कृत्तिका कृशानु, दहन, बहुला, वह्नि शिखो(इन्) शौच्यम्, हविर्भुक् (ज्), हव्यवाह, हव्यवाहभम्, हुतभुक् (ज्), हुतवह, हुताशन हौतभुजम् हौतवहम् शेषपर्यायास्तु अग्निपर्यायत ऊहनीया ।

**रोहिणीप०**—अज अजतारा अजरवृद्धभम् क, कमलज कमलयोनि, कमलागार चतुरास्य, तामरसोदय द्रौहिणम् धाता (तृ), धातृभम् निर्जरज्येष्ठभम्, पङ्कजप्रभव पद्मतनय, प्रजापति, प्रजापतिदैवतम् प्राजापत्यम् प्राजेशम् ब्रह्म(अन्) ब्राह्मम्, ब्राह्मी, ब्राह्मम्, रोहिणी, विधात्र्यम् विधि विरञ्च विरिञ्च, विरिंचि, वेधा (अस्), वैधसम् वैरञ्चम्, शाकटम् शतानन्दभम्, सरोजनिलय, शेषपर्यायास्तु ब्रह्मशकटपर्यायत कल्पनीया ।

**मृगशीर्षप०**—आग्रहायणी आग्नम्, इन्दु, उडुप, उपार्य, ऐन्दवम् ओपध्यर्थ्य, कुरङ्गमूर्द्धा (अन), चन्द्रदैवत्यम्, चन्द्रमा (अस्) चान्द्रम् चान्द्रमसम्, तमीशतारका तरलतारकाभम्, न्यङ्कूत्तमाङ्गम् भार्य, मस्तकम्, मार्ग मार्गायणी, मृग, मृगशिर (अस), मृगशिरा, मृगशिरा (अस्), मृगशिरास्तारका, मृगशीषम्, मृगशीर्षा,

३४–६५

मृगशीर्षिणभम्, मृगी, मृगोत्तमाङ्गम्, रजनिकृत् (त्), राजभम्, राज्यम्, रुरु, रुरुशिरा (अस्) रुरुत्तमाङ्गम्, शशभृत् (त्), शशाङ्कभम्, शशिभम्, शीतद्युति, सौम्यम्, शेषपर्यायास्तु चन्द्रमृगमस्तक-पर्यायत ऊहनीया ।

**आर्द्रापर्याया०**—आर्द्रम्, आर्द्रा, ईश, ऐशम्, कालिनी, गिरिश, चन्द्रशेखर त्रिनयन, त्रिनेत्र-क्षम्, पुरजित् (त्) भर्ग, भावम्, राजमौलि, रुद्र, रुद्रदैवत्यम, रौद्रम्, रौद्री, रौद्र्यम्, श, शङ्कर, शिव, शूलभृत् (त्), शूली (इन), शैवम्, हरसञ्ज्ञक, हारम्, हुताशरेता (अस्) शेषपर्यायास्तु शिवपर्यायत कल्पनीया ।

**पुनर्वसुप०**—प्रदिनि, अदितिदैवतम्, अद्री, अमरमाता (तृ), आदितेयम्, आदित्यम्, कश्यपभीरु, काश्यपी, काश्यपीतारा, निदशेन्द्रसू, देवप्रसू, देवमाता (तृ०), देवाम्बिका, पुनर्भम्, पुनर्वसु., पुनर्वसू, माता (तृ०), मित्रजननी, यामकौ, सुरसविनी, सुरसू, सुराम्बा, सुरजननी, शेषपर्यायास्तु अदितिकश्यप देव मातृपर्यायत ऊहनीया ।

**तिष्यप०** — अङ्गिरा (अस्), अमरेज्य, अमरेड्य, आङ्गिरसम्, आर्च्य, इज्य इन्द्रमन्त्री (इन्) ऐज्यम्, गोष्पति, गुरु, गुरुदैवतम्, गुरुदैवत्यम्, गौरवम्, जीव, जैवम, तिष्य, धैषणम्, पुष्य, पूज्य योग्य वाग्मवाच्यंभम् सिद्ध, सिध्य, शेषपर्यायास्तु अङ्गिरोगुरुसक्पर्यायत कल्पनीया ।

**आश्लेपाप०**—अश्लेपा, अहि, आशीविषभम् आश्रेषा, आश्लेषम, आश्लेषा, आश्लेषिका, आह्यम्, उरग वद्रुजभम्, कद्रूज, कुण्डली (इन्), दन्दशूक, द्विरसनम् नागदेवा, नागदैवतम नागदैवत्यम, फणभृत (त्), फणी (इन), भुजगाधिप, भुजङ्ग, भोजङ्गम्, व्याल, व्यालराट् (ज्), श्लेपा, सर्पदेवा, सर्पदैवतम्, सर्पदैवत्यम्, सर्पोऽधा, सार्पम्, सार्पी, शेषपर्यायास्तु सर्पपर्यायत ऊहनीया ।

**मघापर्यायाः**– आदिजा (पु० व०), आदिप्रभवा (पु० व०), आदिभुव (पु० ब०), कव्यभुक् (ज्), जनक, पितर. (पु० व०), पिता (तृ), पितृजनक, पितृदेवधिष्ण्यम् पितृदेवा, पितृदैवतम्, पितृदैवत्यम्, पित्र्यम्, पित्र्या, पूर्वजा (पु० ब०) पैत्रम्, पैत्र्यम्, पौर्वजम्, मखा, मघ, मघा, शेषपर्यायास्तु पितृपर्यायत ऊहनीया ।

**पूर्वाफाल्गुनीप०**—पूफा, पूर्वफल्गुभम्, पूर्वफाल्गु, पूर्वयोनि, पूर्वाफाल्गुनी, फाल्गुनी, भग, भगदवत्यम्, भागम्, भाग्यम्, भाग्यभम्, योनि, योनिदेवता, योनिदेवा, योनिदवतम्, योनिदैवत्यम्, शेषपर्यायास्तु योनित कल्पनीया ।

**उत्तराफाल्गुनीप०**—अदितिसुत, अर्यमदेवता, अर्यमदेवा, अर्यमदैवतम्, अर्यमदैवत्यम्, अर्यमा (अन्), अर्यम्णम्, आर्यभम, आर्यम्णम्, उत्तरफल्गुभम्, उत्तरफाल्गु, उत्तराख्य, उत्तराफाल्गुनी, मतान्तरे-भगम्, शेषपर्यायास्तु अर्यमत कल्पनीया ।

**हस्तप०**—अरुण, अर्क, आरुणम् आर्कम् ऐनम्, कर तीक्ष्णकरम्, दिनेशभम्, दो (ष्), पाणि, बाहु, भवमु, भवसू, भानवम्, भानु, भानुभम्, भुज, रवि, रावेयम्, शय, सवितृदेवता, सवितृदेवा, सवितृदैवतम्, सवितृदैवत्यम, सावित्रम, हस्त, हस्ता, शेषपर्यायास्तु हस्तार्कपर्यायत प्रकल्प्या ।

**चित्राप०**–चित्र, चित्रम् चित्रा, तक्षा (अन), त्वष्टा (ष्टृ), त्वष्टृदवता, त्वष्टृदवा, त्वष्टृदैवतम्, त्वष्टृदैवत्यम्, त्वाष्ट्रम्, देवग्यकारभम्, देवशिल्पि, देवशिल्पी (इन), देवसूत्रधार, निर्जर-

वर्द्धकि, निर्जरवर्द्धकी (इन्), विश्वकर्मा (अन्), विश्वकर्मभम्, विश्वकृत्, (त), सुरवर्द्धकि, सुरवर्द्धकी (इन्), सुरशिल्पी (इन) शेषपर्यायास्तु देवत्वष्ट्रशिल्पिपर्यायत कल्पनीया ।

**स्वातिपर्याया**—अनिल अनिली आनिलेयम आशुग, क, निष्ठ्या, पवन, पवना, पावनम्, मरुत (त्), महाबल, मारुत, मारुतम्, वात, वात्यम्, वायव्यम वायु, वायुदेवता, वायुदेवा, वायुदेवतम्, वायुदैवत्यम्, समीर, समीरणभम्, समीरणाख्य, सामीरम्, स्वक्षम, स्वाति, स्वाती, शेषपर्यायास्तु वायुपर्यायत ऊहनीया ।

**विशाखाप०**—इन्द्राग्निकम्, इन्द्राग्निदेवता, इन्द्राग्निदेवा, इन्द्राग्निदैवतम्, इन्द्राग्निदैवत्यम्, इन्द्राग्नी, ऐन्द्राग्निकम्, ऐन्द्राग्नेयम, द्विनायक, द्विप, द्विदेवता, द्विदेवा, द्विदैवतम्, द्विदैवत्यम्, द्विसुर, द्वीश, द्वीश्वर, द्वयमर, द्वयर्य, राधा, विशाख, विशाखम्, विशाखा, शक्राग्नी, शतमखानली, शूर्पम्, शूर्पभम् शेषपर्यायास्तु वह्नीन्द्र पर्यायत ऊहनीया ।

**अनुराधाप०**—अनु (अ०), अनुराध, अनुराधा, अनुराधा (पु० व०) अनूराधा, मित्र, मित्रदेवता, मित्रदेवा मित्रदैवतम् मित्रदैवत्यम, मैत्रम्, मैत्री, मैत्र्यम्, शेषपर्यायास्तु मित्रपर्यायत प्रकल्प्या. ।

**ज्येष्ठाप०**—इन्द्र, इन्द्रदेवता, इन्द्रदेवा, इन्द्रदैवतम्, इन्द्रदैवत्यम्, उग्रधन्वा (अन्), ऐन्द्रम्, ऐन्द्री, कुलिशतारा, कुलिशभृत्तारा, जैष्णवम, ज्येष्ठघ्नी, ज्येष्ठा, देवप, धन्वभृद्भम्, नगारिभम, पौरन्दरम्, पौरुहूतम्, माहेन्द्रम, शतमख, शाक्रम, शातमखम्, सुरस्वामी (इन), स्वर्गाधीश्वर, शेषपर्यायास्त्विन्द्रपर्यायत ऊह्या ।

**मूलप०**—अकृतुभुक् (ज्), असुर असप, आशर, आशिर, क्रव्याद, जटा, दानव नक्तञ्चरम्, निॠति, निशाचरम्, नैकषेयम्, नैॠतम्, नैॠत्यम्, मूल मूलम्, मूलबर्हणी, यातुभम्, रक्ष (अस्), रक्षोदेवता, रक्षोदेवा, रक्षोदैवत्यम्, रक्षोभम्, राक्षस, शिफा, शेष पर्यायास्तु रक्ष पर्यायत परिकल्पनीया ।

**पूर्वाषाढापर्याया**—अम्बुदेवता, अम्बुदेवा, अम्बुदैवतम, अम्बुदैवत्यम, अम्भोभम् अर्णोभम्, अषाडा, अषाढा, आप्यम्, आशाडा, आशाढा, आषाडा, आषाढा, कीलालम् कैलालम्, क्षीरम, क्षैरम्, जलम्, तोयम् निष्कम, नीरम्, नैरम्, नारम्, पय (अस), पयोदकुसुमम्, पानीयम्, पूर्वाषाढ, पूर्वाषाढा, पूषा, वनम्, वानम वारि, वा (र्), वार्भम विशम्, विषम्, वैषम्, सलिलम्, सागर, सालिलम्, शेषपर्यायास्तु, जलपर्यायत प्रकल्प्या ।

**उत्तराषाढाप०**—अषाडा, अषाढा, माशाडा, आशाढा, आषाडा आषाढा उत्तराषाडा, उत्तराषाढा, उषा, विश्वभ विश्वे (पु० ब०), विश्वेदेवा, विश्वेश्वर, वैश्वम, वैश्वदेवम्, वैश्वदेवा, वैश्वदैवतम, वैश्वदैवत्यम्, वैश्वी, शेषपर्यायास्तु विश्वेदेवपर्यायत ऊहनीया ।

**अभिजित्प०**—अज, अभिजित्, (त), अभिजिद्भम्, क, विधि, शेषपर्यायास्तु विधिपर्यायत कल्पनीया ।

**श्रवणप०**—अ, अच्युतभम्, अजम्, मधुश्रुति, आज्यम्, कर्ण, कार्ष्णम, गदाग्रजज्योति (इष्), गोविन्द, जिन, जैनम, दानववैरी (इन्), क्लेशोड्ड, मुकुन्द, मुरजित (त्), मुरारिभम्, वासुदेव, विष्णु, विष्णुदेवतम् विष्णुदैवत्यम्, वैकुण्ठ, वैष्णवम, शब्दग्रह, शौरि, श्रव, श्रवण, श्रवणभम्, श्रवणा, श्रव (अस्) श्रुति, श्रोणा, श्रोनम, श्रीनाथ, श्रीपतिभम्, सनातन,

मृगशीर्षिणभम, मृगी, मृगोत्तमाङ्गम्, रजनिकृत् (त्), राजभम्, राज्यम्, रुरु, रुरुशिरा. (अस्) रुरुत्तमाङ्गम्, शशभृत् (त्) शशाङ्कमम्, शशिभम्, शीतद्युति, सौम्यम्, शेषपर्यायास्तु चन्द्रमृगमस्तक-पर्यायत ऊहनीया. ।

आर्द्रापर्यायाः०—आद्रम्, आर्द्रा, ईश, ऐशम्, कालिनी, गिरिश, चन्द्रशेखर त्रिनयन, त्रिनेत्र-र्क्षम्, पुरजित् (त्) भर्ग, भावम्, राजमौलि, रुद्र, रुद्रदैवत्यम, रौद्रम्, रौद्री, रौद्रम्, रा, शङ्कर, शिव, शूलभृत् (त्), शूली (इन्), शैवम् हरसञ्ज्ञक, हारम्, हुताशरेता (अस्) शेषपर्यायास्तु शिवपर्यायत कल्पनीया ।

पुनर्वसुप०—अदिति, अदितिदैवतम्, अद्री, अमरमाता (तृ), आदितेयम्, आदित्यम्, कश्य-पभीरु, काश्यपी, काश्यपीतारा, त्रिदशेन्द्रसू, देवप्रसू, देवमाता (तृ०), देवाम्बिका, पुनर्भम्, पुनर्वसु, पुनर्वसू, माता (तृ०), मित्रजननी, यामकौ, सुरसवित्री, सुरसू, सुराम्बा, सुरजननी, शेषपर्यायास्तु अदितिकश्यप देव-मातृपर्यायत ऊहनीया ।

तिष्यप० — अङ्गिरा (अस्), अमरेज्य, अमरेड्य, आङ्गिरसम्, आर्च्य, इज्य इन्द्रमन्त्री (इन्) ऐज्यम् गोष्पति, गुरु, गुरुदैवतम्, गुरु दैवत्यम्, गौरवम् जीव, जैवम, तिष्य, धैषणम्, पुष्य, पूज्य योग्य वामवार्च्यभम सिद्ध, सिध्य, शेषपर्यायास्तु अङ्गिरोगुरुशक्रपर्यायत कल्प-नीया ।

आश्लेषाप०—अश्लेषा अहि, आशीविषभम् आश्रेषा, आश्लेषम, आश्लेषा, आश्लेषिका, आह्नम्, उरग, कद्रुजभम्, कद्रूज, कुण्डली (इन्), दन्दशूक, द्विरसनम् नागदेवा, नागदैव-तम् नागदैवत्यम, फणभृत (त्), फणी (इन्), भुजगाधिप, भुजङ्ग, भौजङ्गम्, व्याल, व्याल-राट् (ज्), श्लेषा, सर्पदेवा, सर्पदैवतम्, सर्पदैव-त्यम्, सर्पाध्या, सार्पम्, सार्पी, शेषपर्यायास्तु सर्पपर्यायत ऊहनीया ।



मघापर्यायाः— आदिजा (पु० व०), आदिप्रभवा (पु० व०), आदिभुव (पु० व०), कव्यभुक् (ज्), जनक, पितर. (पु० व०), पिता (तृ), पितृजनक, पितृदेवधिष्ण्यम् पितृदेवा, पितृदैवतम्, पितृदैवत्यम्, पित्र्यम्, पित्र्या, पूर्वजा. (पु० व०) पैत्रम्, पैत्र्यम्, पौर्वजम्, मखा, मघ, मघा, शेषपर्यायास्तु पितृपर्यायत ऊहनीया ।

पूर्वाफाल्गुनीप०—पूफा, पूर्वफल्गुभम्, पूर्व-फाल्गु, पूर्वयोनि, पूर्वाफाल्गुनी, फाल्गुनी, भग, भगदैवत्यम्, भागम्, भाग्यम्, भाग्यभम्, योनि, योनिदेवता, योनिदेवा, योनिदवतम्, योनिदैवत्यम्, शेषपर्यायास्तु योनित कल्पनीया ।

उत्तराफाल्गुनीप०—अदितिसुत, अर्यमदेवता, अर्यमदेवा, अर्यमदैवतम्, अर्यमदैवत्यम्, अर्यमा (अन्), अर्यम्णम्, आर्यमभ, आर्यम्णम्, उत्तरफल्गु-भम्, उत्तरफाल्गु, उत्तराख्य, उत्तराफाल्गुनी, मतान्तरे-भगम्, शेषपर्यायास्तु अर्यमत कल्प-नीया ।

हस्तप०—अरुण, अर्क, आरुणम् आर्कम्, ऐनम्, कर, तैक्ष्णकरम्, दिनेशभम्, दो (ष्), पाणि, बाहु, भवसु, भवसू, भानवम्, भानु, भानुभम, भुज, रवि, रावेयम्, शय, सवितृ-देवता, सवितृदेवा, सवितृदैवतम्, सवितृदैवत्यम्, सावित्रम, हस्त, हस्ता, शेषपर्यायास्तु हस्तार्क-पर्यायत प्रकल्प्या ।

चित्राप०—चित्र, चित्रम् चित्रा, तक्षा (अन्), त्वष्टा (ष्टृ), त्वष्टृदेवता, त्वष्टृदेवा, त्वष्टृदैवतम्, त्वष्टृदैवत्यम् त्वाष्ट्रम्, देवग्रथकारमम् देव-शिल्पि, देवशिल्पी (इन्), देवसूत्रधार, निर्जर-

वर्द्धकि, निर्जरवर्द्धकी (इन्), विश्वकर्मा, (अन्), विश्वकर्मभम्, विश्वकृत्, (त), सुरवर्द्धकि, सुरवर्द्धकी (इन्), सुरशिल्पी (इन) शेषपर्यायास्तु देवत्वष्टृशिल्पिपर्यायत कल्पनीया ।

स्वातिपर्याया—अनिल अनिली, आनिलेयम्, आशुग, क, निष्ठ्या, पवन, पवना, पावनम मरुत (त), महाबल, मारुत, मारुतम्, वात, वात्यम्, वायव्यम, वायु, वायुदेवता, वायुदेवा, वायुदैवतम्, वायुदैवत्यम् समीर, समीरणभम्, समीरणाख्य, सामीरम, स्वशन, स्वाति, स्वाती, शेषपर्यायास्तु वायुपर्यायत ऊहनीया ।

विशाखाप०—इन्द्राग्निकम्, इन्द्राग्निदेवता, इन्द्राग्निदेवा, इन्द्राग्निदैवतम्, इन्द्राग्निदैवत्यम्, इन्द्राग्नी, ऐन्द्राग्निकम्, ऐन्द्राग्नेयम्, द्विनायक द्विप, द्विदेवता, द्विदेवा, द्विदैवतम्, द्विदैवत्यम्, द्विसुर, द्वीश, द्वीश्वर, द्व्यमर, द्व्यर्य, राधा, विशाख, विशाखम्, विशाखा, शक्राग्नी, शतमखानली, शूर्पम्, शूर्पभम् शेषपर्यायास्तु वह्नीन्द्र पर्यायत ऊहनीया ।

अनुराधाप०—अनु (अ०), अनुराध, अनुराधा, अनुराधा (पु० व०) अनूराधा, मित्र, मित्रदेवता, मित्रदेवा मित्रदैवतम् मित्रदैवत्यम्, मैत्रम्, मैत्री, मैत्र्यम्, शेषपर्यायास्तु मित्रपर्यायत प्रकल्प्या ।

ज्येष्ठाप०—इन्द्र, इन्द्रदेवता, इन्द्रदेवा, इन्द्रदैवतम्, इन्द्रदैवत्यम उग्रधन्वा (अन्), ऐन्द्रम्, ऐन्द्री, कुलिशतारा, कुलिशभृत्तारा, जैष्णवम, ज्यष्ठघ्नी, ज्येष्ठा, देवप, धन्वभृद्भम्, नगारिभम्, पौरन्दरम्, पौरुहूतम्, माहेन्द्रम्, शतमख, शाक्रम, शातमखम्, सुरस्वामी (इन), स्वर्गाधीश्वर, शेषपर्यायास्त्विन्द्रपर्यायत ऊह्या ।

मूलप०—अक्रतुभुक् (ज्), असुर, असप आशर, आशिर, क्रव्याद, जटा, दानव, नक्तञ्चरम्, निर्ऋति, निशाचरम्, नैकषेयम्, नैऋतम्, नैर्ऋत्यम्, मूल मूलम्, मूलबर्हणी, यातुभम्, रक्ष (अस्), रक्षोदेवता, रक्षोदेवा रक्षोदैवत्यम्, रक्षोभम्, राक्षस, शिफा, शेष पर्यायास्तु रक्ष पर्यायत परिकल्पनीया ।

पूर्वाषाढापर्याया—अम्बुदेवता, अम्बुदेवा, अम्बुदैवतम, अम्बुदैवत्यम, अम्भोभम् अर्णोभम्, अषाडा, अषाढा, आप्यम्, आशाडा, आशाढा, आषाडा, आषाढा, कीलालम्, कैलालम, क्षीरम्, क्षैरम, जलम्, तोयम्, निष्कम, नीरम्, नैरम्, नारम्, पय (अस), पयोदकुसुमम्, पानीयम्, पूर्वाषाढ, पूर्वाषाढा, पूषा, वनम्, वानम्, वारि, वा (र), वार्भम, विशम्, विषम्, वैदम्, सलिलम्, सागर, सालिलम्, शेषपर्यायास्तु, जलपर्यायत प्रकल्प्या ।

उत्तराषाढाप०—अषाडा, अषाढा, आशाडा, आशाढा, आषाडा आषाढा उत्तराषाडा, उत्तराषाढा, उषा, विश्वम् विश्वे (पु० ब०), विश्वेदेवा, विश्वेश्वर, वैश्वम, वैश्वदेवम्, वैश्वदेवा, वैश्वदैवतम, वैश्वदैवत्यम्, वैश्वी, शेषपर्यायास्तु विश्वेदेवपर्यायत ऊहनीया ।

अभिजित्प०—अज, अभिजित्, (त), अभिजिद्भम, क, विधि, शेषपर्यायास्तु विधिपर्यायत कल्पनीया ।

श्रवणप०—अ, अच्युतभम्, अजम, अनुश्रुति, आज्यम्, कर्ण, काष्ण्यम्, गदाग्रजज्योति (इष), गोविन्द, जिन, जैनम, दानववैरी (इन), बलेशोडु, मुकुन्द, मुरजित (त), मुरारिभम, वासुदेव, विष्णु, विष्णुदैवतम् विष्णुदैवत्यम्, वैकुण्ठ, वैष्णवम्, शब्दग्रह, शौरि, श्रव, श्रवण, श्रवणभम्, श्रवणा, श्रव (अस्) श्रुति, श्रोणी, श्रोत्रम्, श्रीनाथ, श्रीपतिभम्, सनातन,

हरि., हरिदेव, शेषपर्यायास्तु विष्णुश्रवणपर्यायत ऊहनीया ।

**धनिष्ठाप०**— द्रविणम्, धनम्, धनिष्ठा, मन्दागा, वसु, वसु, वसुदेवता, वसुदेवा, वसुदैवतम्, वसुदैवत्यम्, वासवम्, वित्तम, श्रविष्ठा, स्वम्, स्वापतेयम्, शेषपर्यायास्तु धनपर्यायत कल्पनीया ।

**शतभिषाप०**—अपाम्पतिः, अप्पति, अम्बुप, अम्भोऽर्यमम, वार्य, कीलालेश, क्षीरेश, जलेश, तोयप, पाथोनाथ, पाथोऽर्य, पाशी (इन्), प्रचेता (अस्), प्राचेता (सम्), प्राचेतसम, भिषक (ज्), यादोऽर्य, वनप, वरुण, वरुणदेवता, वरुणदेवा, वरुणदैवतम्, वरुणदैवत्यम्, वरुणभम, वारीश, वारुणम्, वारुणी, शतम्, शततारका, शततारा, शतभिष, शतभिषम्, शतभिषज् (ज्), शतभिषा, सवरविभुभम्, सर्वतोमुखप, शेषपर्यायास्तु वरुणजलपतिपर्यायत कल्पनीय ।

**पूर्वाभाद्रपदाप०**—अघ्रि, अज, अजचरणम्, अजपदम्, अजपत् (द्), अजपाद, अजपात् (द्), अजाघ्रि, अजैकचरणम्, अजैकपाद, अजैकपात् (द्), अजैकपाददैवतम्, अजैकपाददैवत्यम्, अजैकाघ्रि, आजम्, आजैकपद आजैकपदम्, एकाघ्रि, प्रोजपात् (द्), छागपात् (द्), छागैकपात् (द्) पूषा, पूर्वप्रोष्ठपदम्, पूर्वप्रोष्ठपदर्क्षकम्, पूर्वप्रोष्ठपदा, पूर्वप्रोष्ठपाद, पूर्वाभाद्रपदा, पूर्वाभाद्रपात (द्) पूर्वाभाद्रा, प्राग्भाद्र, प्रोष्ठपद, प्रोष्ठपत् (द्) प्रोष्ठपदा, प्रोष्ठपात् (द्), भद्र, भद्रतारका, भद्रतारा भद्रपद, भद्रपदा, भद्रभम्, भद्रर्क्षम्, शेषपर्यायास्त्वजैकाघ्रिपर्यायत ऊहनीया ।

**उत्तराभाद्रपदाप०**—अहिर्बुध्नि, अहिर्बुध्न्य, अहिर्बुध्न्यदेवता, अहिर्बुध्न्यदेवा, अहिर्बुध्न्यदैवतम्, अहिर्बुध्न्यदैवत्यम्, आहिर्बुध्नम्, आहिर्बुध्न्यम्, उत्तरभद्रका, उत्तरभाद्रम् उत्तरादिभाद्रपद, उत्तराप्रोष्ठपाद, उत्तराप्रोष्ठपात् (द्), उत्तराभाद्रपदा, उत्तराभाद्रपात् (द्), उपान्त्यभम्, क्षमा, परभाद्रपदा, परभाद्रपात् (द्), बुध्नि, बुध्न्यम्, बुध्न्यभम्, शेषपर्यायास्त्वहिर्बुध्न्यादि पर्यायत प्रकल्प्या ।

**रेवतीप०**—अन्त्यभम्, अन्त्यम्, अन्त्यभम्, आन्त्यम् नष्टदशन, नष्टरद, पूषदेवता, पूषदेवा, पूषदैवतम् पूषदैवत्यम् पूषभम्, पूषा (अन्), पौष्णम् पौष्णभम्, पौष्णी, रेवती विरद, स्तोमनष्टरदभम्, शेषपर्यायास्तु दन्तपूषादिपर्यायत ऊहनीया ।

**एकयोक्त्या त्रिपूर्वाप०**—त्रिकपूर्वा, त्रिपूर्वा, पूर्वात्रयम् 'पूर्वाफाल्गुनी पूर्वाषाढा-पूर्वाभाद्रपदा ।' इति ।

**तद्वत् त्र्युत्तराप०**— उत्तरात्रयम्, त्रिरुत्तरा., त्र्युत्तरा 'उत्तराफाल्गुन्यु त्तराषाढो त्तराभाद्रपदा ।' इति ।

**तद्वदाषाढाद्वयप०**—आषाढाद्वयम् 'पूर्वाषाढोत्तराषाढे' इति ।

**तद्वत् पूर्वोत्तरात्रयप०**— त्रियमली, त्रियुग्मतारा, त्रियुग्मी, पूर्वोत्तरात्रयम् 'पूर्वाफाल्गुन्युत्तराफाल्गुनी - पूर्वाषाढो त्तराषाढा - पूर्वाभाद्रोत्तराभाद्रपदा इति ।

**तद्वद्भाद्राषाढाद्वयप०**—भाद्राषाढाद्वयम् 'पूर्वाभाद्रपदो - त्तराभाद्रपदा पूर्वाषाढा - त्तराषाढा.' इति ।

**तद्वत् फल्गुयुग्माप०**—फल्गुयुग्मा 'पूर्वाफाल्गुन्यु त्तराफाल्गुन्यौ' इति ।

**भद्वयप०** —भद्वयम् 'रोहिण्य-भिजितौ' इति ।

(१०) गण्ड, (११) वृद्धि, (१२) ध्रुव, (१३) व्याघात, (१४) हर्षण, (१५) वज्रम्, (१६) सिद्धि, (१७) व्यतिपात (व्यतीपात), (१८) वरीमान् (ईयस्), (१९) परिघ, (२०) शिव (२१) सिद्ध, (२२) साध्य, (२३) शुभ, (२४) शुक्ल (२५) ब्रह्मा (ब्रन्), (२६) ऐन्द्र, (२७) वैधृतिश्चेत्येत विष्कम्भादय सप्तविंशति-योगा स्यु ।

**कतिघटीवर्ज्ययोगनामानि**—विष्कम्भ, अतिगण्ड, शूलम्, गण्ड, व्याघात, वज्र, परिघश्चेति ।

**सर्वत्याज्ययोगनाम्नी**—व्यति (ती) पात, वैधृतिश्चेति ।

'तदुक्तम् ग्रन्थान्तरे'—

'विरुद्धमञ्ज्ञा इह ये च योगा-
स्तेपामनिष्ट खलु पाद आद्य ।
सवैधृतिस्तु व्यतिपातनामा
सर्वेऽप्यनिष्टा परिघस्य चार्द्धम् ॥
तिस्रस्तु योगे प्रथमे सवज्रे,
व्याघातसञ्ज्ञे नव, पञ्च शूले, ।
गण्डेऽतिगण्डे च पडेव नाडच,
शुभेपु कार्येपु विवर्जनीया ॥' इति ।

तिथ्यादीना क्षयवृद्धिभेदौ—

तिथिक्षय, तिथिवृद्धि, ।
नक्षत्रक्षय नक्षत्रवृद्धि, ।
योगक्षय योगवृद्धि, ।

तिथ्यादीना क्षय-वृद्धि-घटी प्रमाण यथा—पड्घट्यास्तिथिक्षयप्रमाणम, एव पञ्चघट्यस्तिथिवृद्धिप्रमाणम तदुक्त—धर्मशास्त्रे—'बाणवृद्धी रसक्षय । इति ।

साध्रिवदघट्यो नक्षत्रक्षय ४।१५। एवं सदलपड्घट्यो नक्षत्र वृद्धि ६।३० विज्ञेया । अष्टघट्यो योगक्षय । तथा व्यध्रियम घट्यो योगवृद्धि १।४५। ५५ प्रमाण ज्ञेयम् ।

तदुक्त मकरन्दविवरणे—

'साध्रिसि-धुरससिन्धुरप्रमा तारकातिथियुजा क्षय प्रमा । नाडिकासु सदलाङ्गमार्गणा व्यध्रिलोचनमिता मताचिति । इति ।

ज्योतिर्विदाभरणेऽपि—

'वृद्धिक्षयोस्त परमौ तिथौ सदा
व्यर्द्धा रसा साध्रिरसाश्च नाडिका ।
सनेमतर्का सपदार्णवास्तु भे
निस्त्र्यशदोपौ द्विरदा युतौ क्रमात् ।' इति ।

**करणपर्याया**—करणम्, कर्म्मवाटीखण्डम्, कर्मवाटचर्द्धम्, कलाखण्डम, कलादलम्, कलार्द्धम्, तिथिखण्डम्, तिथिदलम, तिथ्यर्द्धम् चेति ।

**करणभेदौ**—(१) चरकरणम् (२) स्थिरकरणम् चेति करणस्य द्वौ भेदौ स्याताम् ।

**तत्रादौ चरकरणनामानि**—(१) वव, (२) बालव, (३) कौलव, (४) तैतिल, (५) गर, (६) वणिज, (७) विष्टि, चैतानि सप्तचरकरणानि स्यु ।

**तदीशभेदा**—(१) इन्द्र, (२) ब्रह्मा (ब्रन्), (३) मित्र, (४) अर्यमा (अन्), (५) भू, (६) श्री, (७) यमश्चैते चरकरणपतय स्यु ।

**स्थिरकरणनामानि**—(१) शकुनि, (२) चतुष्पद (चतुष्पात), (३) नाग, (४) किंस्तुघ्न, चैतानि चत्वारि स्थिरकरणानि स्यु ।

**विष्टिपर्याया**—ईशजा, भद्रा, भैमिका, भैमी, विट् (प्), विष्टि, शम्भुजा, शम्भुभवा ।' इति ।

इति श्रीमद्गढवालदेशान्तर्गतदेवप्रयागसमीपवर्तिना मुकुन्दाश्रमवासिना श्रीकीर्तिदेवी-श्री प० रघुवरदयालुतनुजनुषा मुकुन्ददैवज्ञेन विरचिते ज्योतिषशब्दकोषे पञ्चाङ्गवर्ग प्रथम समाप्तिमगमत् ।

— ० — ० —

## अथ कालवर्ग —

**सामान्यकालपर्याया**—अनुवेलम्, अनेहा (स्), अपष्ठु, अवसर, आमति, कर्माह्, काल, क्षण, जह, तिथ, दिष्ट, पीथ, पीयु, म, मति, वार, वेला, समय, सर्वमूपक, । इति ।

**इष्टवाचकशब्दा**—अभिमत, अभीप्सित, अभीष्ट, इष्ट, ईप्सितश्चेत्यत त्रिलिङ्गा स्यु ।

**इष्टकालपर्याया.**—अभिमतकाल अभिमतसमय, अभीप्सितकाल, अभीप्सितसमय, अभीष्टकाल, अभीष्टदिष्ट, अभीष्टसमय, अभीष्टानेहा (स्), इष्टकाल, इष्टदिष्ट, इष्टानेहा (स), ईप्सित काल, ईप्सितदिष्ट, ईप्सितसमयश्चेते पुंलिङ्गा स्यु ।

**कालभेदा.**—(१) विनिम (मि) ष (सेकेण्ड), (२) निमे (मि) ष (मिनट), (३) काष्ठादि, (४) कला, (५) क्षण, (६) मुहूर्त, (७) होरा (घण्टा), (८) अहोरात्र (दिन रात), (९) पक्ष, (१०) मास, (११) ऋतु (१२) अयनम्, (१३) गोल, (१४) अब्द (वर्षम्), (१५) युगम्, (१६) मन्वन्तरम्, (१७) कल्प, (१८) कल्पान्तश्चेते कालस्याष्टादशभेदा स्यु ।

सूर्यसिद्धान्ते तु (१) मूर्त (२) अमूर्त (त्रुट्यादि), एतौ द्वौ भेदावुक्तौ । उक्त च — 'प्राणादि कथितो मूर्तस्त्रुट्याद्योऽमूर्तसज्ञक ।' इति १।११ ।

**विनिमेषप०**—विनिमिष, विनिमेष, (सेकेण्ड इतिभाषा) ।

१–२६

**निमेषपर्याया.**—निमिष, निमेष, लवद्वयम्, । नेत्रपक्ष्मणोर्व्यापारात्मक काल, लघ्वक्षरोच्चारणमात्रकाल, लवद्वयात्मक कालो वा । (मिनट इति भाषा),

**काष्ठाप०**— काष्ठा, अष्टादशनिमेषात्मक काल ।

**लवप०**—काष्ठाद्वयम्, क्षणद्वयम्, लव, ।

**कलाप०**—कला, त्रिंशत्काष्ठात्मक काल प च-दशलवात्मक कालोवा ।

**लेशप०**—कलाद्वयम्, लेश, ।

**क्षणप०**—क्षण, त्रिंशत्कलात्मक काल, पञ्च दशलेशात्मक कालो वा ।

**त्रुटिप०**—त्रुटि, त्रुटी, क्षणद्वयात्मक कालो, लवद्वयात्मक कालो वा । मतान्तरे तु निमेष-द्वयम् ।

**विपलप०**—विपलम्, पलषष्टिभागैकभाग ।

**असुप०**—असव (पु० ब), प्राणा[1] (पु ब), शरीरस्थपञ्चवायव, दशगुर्वक्षरोच्चारणात्मक काल ।

**अहरसुप०**—अह प्राण, अहरसु ।

**पलप०**—पलम्, विघटिका, विघटी, विदण्ड, विनाडिका, विनाडी, क्वचित् 'चषा' इत्यपि दृश्यते । षट्प्राणात्मक काल ।

**घटीप०**—घटिका, घटी दण्ड,[2] पारिका, नाडिका,[3] नाडी, नालिका, नाली, षष्टिदीर्घाक्षरोच्चारणात्मक काल, षष्टिपलात्मक कालो वा ।

२७–५३

---

(१) 'दशगुर्वक्षरोच्चारकाल प्राण षडात्मक । त पल स्यात् तत्षष्ट्या

(२) 'दण्ड' इत्यभिधीयते ।।'इतिशब्दार्थचि तामणि । ११५५।२

(३) 'षड्भि प्राणैर्विनाडी स्यात्तत्षष्ट्या नाडिका स्मृता । नाडीषष्ट्या तु नाक्षत्रमहोरात्र प्रकीर्तितम् ।।' इति सूर्यसिद्धान्त ।१।११ १२।

मुहूर्तपर्याया —घटीद्वयम्, दण्डद्वयम्, नाडीद्वयम्, मुहूर्त , द्वादशक्षणात्मक काल ।

होराप०—वेला, होरा, सार्द्धघटीद्वयात्मक काल षष्टिनिमेषात्मक कालो वा (घण्टा इति भाषा)।

दिनपर्या०—अशम अशक , अशकम, अह (अन्), कोकहित घस्र, घ्रम, दिनम् दिवम्, दिवग, दिवा (अ), द्यु, द्यौ, पद्मबन्धु, भास्वर, याममात्र रविध्वज, वार, वासर, वास्र, व्युष्टम्, पञ्चदशमुहूर्तात्मक काल ।

दिनभेदा (१) चान्द्रदिनम्, ( ) नाक्षत्रदिनम्, (३) सौरदिनम्, (४) सावनदिनम्, चैते चत्वारा दिनभेदा स्यु ।

चान्द्रदिनप०—ऐन्दवदिनम्, चान्द्रदिनम्, सौम्यदिनम्, एकतिथ्यात्मक काल ।

नाक्षत्रदिनप०-आर्क्षदिनम्, औडवदिनम्, नाक्षत्र दिनम्, षष्टिनाड्यात्मक काल ।

सौरदिनप०—आर्कदिनम्, ऐनदिनम्, सौरदिनम्। यथा—

'सावनम। दण्डा षष्टिरह स्वरवगुणाशाढ्यास्तदैन भवेदिति ग्रन्थान्तरे ।

सावनदिनप०—कुदिनम्, मेदिनीदिनम्, सावनम्, सूर्यद्वयान्तर्गत काल ।

यथा—

उदयादुदयभानोर्भूमिसावनवासरा ।' इति सूर्यसिद्धान्ते ।

प्रभातप० —अहर्मुखम्, उष (अस्) (न०), उषा कल्यम् काल्यम्, गोसर्ग, दिनादि, निशात्यय पूर्वाह्न पूर्वेद्यु, प्रगे (अ०), प्रत्युष (अस्) (न०), प्रत्यूषम् (न०), प्रत्यूष (पु.), प्रभातम्, प्राथमिक प्रात (र्) (अ०), प्राह्ण, वासरारम्भम्, विभातम्, विहान, व्युष्टम्, सायान्तिकम्, चैते दिनस्य प्रथमयामपर्याया स्यु ।

सङ्गतपर्याया.—सङ्गत , सङ्गव , चैतौ दिनस्य द्वितीययामपर्यायौ स्याताम् ।

मध्याह्नप०—दिनखण्डम्, दिनदलम्, दिनशकलम, दिनार्द्धम, दिवामध्यम्, मध्यन्दिनम्, मध्याह्न , वासरमध्यम्, चैते दिनस्य तृतीययाम पर्याया स्यु ।

कुतपप०—कुतप, कुतुप, दिनाष्टममुहूर्त्त, दिवाष्टमांश , श्राद्धकाल , ।

पुण्याहप०—पुण्याहम्, (अह्नि पुण्योऽस्ति ), ।

दिनान्तप०—अपराह्ण, उत्सूर, उत्सूर, दिनान्तम्, दिनात्यय, दिनावसानम्, दिवावसानम्, विकाल, विकालक, सवलि, साय, सायम् (अ०), सायाह्न श्चैत दिनस्य चतुर्थयामपर्याया स्यु ।

सन्ध्याप०—पितृसू, पितृप्रसू, समा, सन्धा, सन्ध्या, ।

सन्धिप०—सन्धा, सन्धि ।,

त्रिसन्ध्यप०—उपवैणवम्, त्रिसन्ध्यम्, त्रिसन्ध्यकम्, वैणवम्, ।

त्रिसन्ध्यभेदा.—(१) प्राह्ण, (२) मध्याह्न, (३) अपराह्ण (पराह्ण), चैत त्रिसन्ध्यभेदा स्यु

दिवामुहूर्त्तनामानि—(१) महादव, (२) सर्प, (३) मित्र, (४) पितर (पु. ब), (५) वसु, (६) जलम् (७) विश्वेदेवा (पु. ब.), (८) अभिजित् (त्) (न०), (९) ब्रह्मा (अन्), (१०) इन्द्र, (११) इन्द्राग्नी, (पु द्वि) (१२) राक्षस, (१३) वरुण, (१४) अर्यमा (अन्), (१५) भग चैते दिवापञ्चदश मुहूर्ता स्यु ।

रात्रिपर्याया:—इन्दुकान्ता, उमा, उशा (स्), उषा, घनापिनी, ? काली, ? क्षणिनी, क्षपा,

क्षमा, ? क्षणिनी, क्षाणी, क्षिपा ? घारि, घोरा, चक्रभेदिनी, चन्द्रस्त्री, तमस्विनी, तमा, तमि, तमिस्रा, तमी, तामसी, तारकिणी, ? तारा, ? तुङ्गा, तुङ्गी, त्रियामा, दोषा, नक्तम् (अ०), नक्तमुखा, नक्ता, निट् (श्), निशा, निशीथिनी, निशीथ्या, निषद्वरी, पूतार्चि (स्), पैशाची, भूता, भौती, यामवती, यामिनी, याम्या, रक्षोजननी रजनि, रजनी, राक्षसी, रात्रि, रात्री, वसति, वसती, वामतेयी, वासरकन्यका, वासुरा, वासुराषा, विभावरी, शताक्षी, शय्या, ? शर्वरी, शशिशरीरेश्वरी, शार्वरी, श्यामा, हतार्चि (स्), हिमा।' इति।

**दर्शरात्रिपर्याया**—तमसी, तामसी। यदि सा अतितमोयुक्ता 'तमिस्रा' इति।

**पूर्णिमारात्रिप०**—यदि सा चन्द्रिकया युक्ता 'ज्योतिष्मती' 'ज्योत्स्नी' इति च।

**रात्रिमुहूर्त्तनामानि**—(१) शिव, (२) अज-चरण, (३) अहिर्बुध्न्य, (४) पूषा (अन्), (५) अश्विनी (पु द्वि) (६) यम, (७) अग्नि, (८) ब्रह्मा (अन्), (९) चन्द्रमा (अस्) (१०) अदिति (११) बृहस्पति, (१२) विष्णु, (१३) सूर्य, (१४) त्वष्टा (ष्टृ), (१५) वायु, चैते पञ्चदश रात्रिमुहूर्ताः स्यु।

**प्रदोषप०**—दिनात्यय, निशामुखम्, निशावदनम्, निशास्यम्, प्रदोष, मैथिल, यामिनीमुखम्, रजनीमुखम् चैते रात्र प्रथमयामपर्याया।

**साम्बाधिकप०**—साम्बाधिक, इत्यय प्रदोषत पर रात्रद्वितीययामपर्याय।

**अर्द्धरात्रप०**—अर्द्धरात्र, अर्द्धरात्रक अवसरालय, नि सम्पात, निशाशकलम्, निशीथ मध्यरात्र, महानिशा, महानिट् (श्), महारात्र सर्वावसरश्चैत रात्रस्तृतीययामपर्याया।

**अपररात्रपर्याया**—अपररात्र, अपररात्रक, उच्चन्द्र, पश्चिमरात्र, ब्राह्मश्चैत रात्रेश्चतुर्थ यामपर्याया।

**रात्रिसमूहप०**—गणरात्र, निशागण। इति।

**पक्षिणीप०**—पक्षिणी पूर्वापरदिनाभ्या युक्त-रात्रिपर्यायोऽयम् इति।

**गर्भकप०**—गर्भकम्, रजनीद्वन्द्वम्, रात्रिद्वयम्।

**कुक्कुरमादकप०**—श्वनिशम्, श्वनिशा।

**अहोरात्रप०**—अहर्निट् (श), अहोरात्र, दिवानिट् (श्), दिवारात्रम्, द्युनिट (श्), द्युरात्रम्, मुहूर्तत्रिंशात्मक काल।

**दैनंदिनप०**—दैनंदिनम्, दिनेदिने भव इत्यर्थ।

**यामप०**—घटीमाल, नाडीमाल, प्रहर, यम, यातुक, याम, दिनस्य रात्रेश्च तुर्यांशात्मक काल।

**अर्द्धप्रहरप०**—अर्द्धप्रहर, अर्द्धयम, अर्द्धयातुक, अर्द्धयाम, दिनस्य रात्रेश्चाष्टमांशात्मक काल।

**पक्षप०**—अर्द्धमास, दल, दलमास, नेममास, पक्ष पञ्चदशाहोरात्र, मासखण्ड, मासार्द्धक, शकलमास, पञ्चदशदिवारात्रात्मक काल।

**पक्षभेदौ**—(१) शुक्ल, (२) कृष्णश्चैतौ द्वौ पक्षौ स्याताम्।

**शुक्लपक्षप०**—अच्छपक्ष, अब्जदीप्ति, आपूर्यमाणपक्ष, चन्द्रविवर्द्धपक्ष, दिवाह्वय, धवलपक्ष पूर्वपक्ष, प्राक्पक्ष, बहुलेतरपक्ष, वलक्षपक्ष शुक्लपक्ष, सितपक्ष।

**शुक्लवर्णप०**—अच्छ, अमल, अर्जुन, अवदात अवलक्ष, उज्ज्वल, कृष्णेतर, गौर, धवल पाण्डर, पाण्डु, पाण्डुर, पुण्ड्र, वदात, वलक्ष,

विशद, शुभ्र, शुक्ल, शुचि, शुभ्र, शुभ्रम् (अ०), श्येत, श्वेत, सित, हरिण ।

कृष्णपक्षपर्यायाः—अपरपक्ष, असितपक्ष, कृष्णपक्ष, क्षयपक्ष, तमिस्रपक्ष, निशाह्वय, बहुलपक्ष, शुक्लेतरपक्ष श्यामलपक्ष, सितान्यपक्ष, सितेतरपक्ष, ।

कृष्णवर्णप०—अशुभ, असित, काल, कृष्ण, नील, मेचक, राम, शिति, श्याम, श्यामल ।

मासप०—अहर्गण, दिनमाल, पक्षी, मा (स्), मास, वर्षकोश, वर्षाङ्क, वर्षांश, वर्षांशक, आम ।

मासान्तप०—दिनमालान्त, मासान्त, मासावसानम् ।

मासभेदाः—(१) चैत्र, (२) वैशाख, (३) ज्येष्ठ, (४) आषाढ, (५) श्रावण, (६) भाद्रपद, (७) आश्विन, (८) कार्तिक, (९) मार्गशीर्ष, (१०) पौष, (११) माघ, (१२) फाल्गुनश्चेत्येते द्वादशमासाः स्युः ।

चैत्रप०—कामसख, कामसखा, चैत्र, चैत्रिक, फाल्गुनानुज, मधु, मन्मथसख, मोहनिक, मोहनिक, वसन्तमास, सुरभिमास ।

वैशाखप०—उच्चर, उज्जुन, उत्सर, उत्सूर, चैत्रानुज, ज्येष्ठपूर्वज, माधव, राध, वैशाख, ।

ज्येष्ठप०—आषाढपूर्वज, ईजान, सरकोमल, ज्येष्ठ, ज्येष्ठामूलीय, ज्यैष्ठ, वैशाखानुज, शुक्र ।

आषाढप०—अषाढ, असाढ, आषाढ, आषाढ, आषाढ ज्येष्ठानुज, शुचि, श्रावणपूर्वज ।

श्रावणप०—आषाढानुज, नभ (अस्) (न), 'सकाराऽन्ता मासा क्लीबेऽपि' इति 'वैजयन्ती'। नभा (अस्) (पु०), नभस, भाद्रपदपूर्वज, श्रावण, श्रावणिक ।

भाद्रपदपर्यायाः—आश्विनपूर्वज, नभस्य, नभस्यक, प्रोष्ठ, प्रोष्ठपद, भाद्र, भाद्रपद, श्रावणानुज ।

आश्विनप०—अश्वयुक् (ज्), अश्वियुक् (ज्), आश्वयुज, आश्विन, इष, कार्तिकपूर्वज, भाद्रपदानुज, भाद्रपदावरज ।

कार्तिकप०—आश्विनानुज, आश्विनावरज, ऊर्ज, कार्तिक, कार्तिकिक, कौमुद, बाहुल, मार्गशीर्षपूर्वज, शैल, सैर, सैरी (इन्)।

मार्गशीर्षप०—आग्रहायण, आग्रहायणिक, कार्तिकानुज, कार्तिकावरज, पौषपूर्वज, मार्ग, मार्गशिर, मार्गशीर्ष, वत्सरादि, वर्षमुख, वर्षाद्य, सह (अस्) (न०), सहा (अस्) (पु०), हैमन ।

पौषप०—तिष्य, तैष, पुष्य, पौष, माघपूर्वज, मार्गशीर्षानुज, मार्गशीर्षावरज, सहस्य, सिद्ध, सैद्ध ।

माघप०—तप (अस्) (न०), तपा (अस्) (पु०), तपस, पौषानुज पौषावरज, फाल्गुनपूर्वज, माघ, शातर, शातक, ।

फाल्गुनप०—चैत्रपूर्व तपस्य, फल्गुन, फल्गुनाड, फल्गुनाल, फाल्गुनिक, माघानुज, माघावरज, वत्सरान्तक ।

अधिमासप०—अधिकमास, अधिमास, असंक्रान्तिमास, मलमास, मलिनमास, मलिम्लुच, ।

अधिमासभेदौ—(१) संसर्पसञ्ज्ञक, (२) अंहस्पतिसञ्ज्ञकश्चेत्येतावधिमासस्य द्वौ भेदौ स्याताम्।

अत्रविशेषः—

यस्मिन्नब्दे क्षयमासो भवेत्तत्र द्वावधिमासौ

स्याताम्। क्षयमासायोऽधिमास पूर्वः स 'ससर्पसञ्ज्ञक' सर्वशुभकर्मार्हः, अर्थात्तस्मिन् सर्वशुभकर्म कर्त्तव्यम्। क्षयमासादुत्तरो भाव्यधिमासस्तु ग्रहस्पतिसञ्ज्ञक, तस्मिन् सर्वशुभकर्म न कर्त्तव्यम्।

**क्षयमासपर्याया**—ऊनमास क्षयमास, द्विसक्रान्तिमास, न्यूनमास, ।

**सक्रान्तिप०**—सक्रम, (पु) सक्रमणम् (न०), सक्रान्ति (स्त्री०)।

**सक्रान्तिभेदा**—(१) विषुवती (मेष तुला)—सक्रान्ती, (२) अयन—(कर्क मकर) सक्रान्ती, (३) षडशीत्यानन—(मिथुन कन्या-धनु-मीन) सक्रान्तय, (४) विष्णुपदाह्वया, (वृष-सिंह वृश्चिककुम्भ) सक्रान्तयश्चैते सक्रान्तीना चत्वारो भेदा स्यु। तथा चोक्त रामेण—'षडशीत्यानन चापनयुक्कन्याभषे भवेत्। तुलाजौ विषुव विष्णुपद सिंहालिगोघटे।' इति।

**विषुवत्प०**—विषुण, विषुवम्, विषुवान् (मतु०), विषुवत् (त्), विषुवती।

**सम्पातप०**—सम्पात (पु०) मिलनस्थानम् सङ्क्रम, द्वयो विषुवत्यो अयनयो सक्रान्त्योर्वा मिलनस्थान सम्पातो ज्ञेय ।

**ऋतुप०**—ऋतु, काल, बीजम्, सतेरकम्, समय, मासद्वयात्मक काल ।

**ऋतुभेदा**—(१) शिशिर, (२) वसन्त, (३) ग्रीष्म, (४) प्रावृड् (ष्) (स्त्री०), वर्षा (स्त्री), (५) शरत् (द्), (स्त्री०), (६) हेमन्त,-श्चैते षड्ऋतव स्यु ।

**शिशिरप०**—कम्पन, कोटन, कोडन, तप (अस्), तुहिनर्त्तु, शिशिर, शीत, शस ? शैशिर, शैप, सैप, हिमकूट ।

१–३१

**वसन्तपर्याया**—इष्म, इष्य, ऋतुराज, कान्त, कामसख, कुसुमाकर, पिकवान्धव, पिकानन्द, पुष्पकाल, पुष्पमास, पुष्पसमय, पुष्पसारण, बलाढ्क, बलाढ्कक, बलाङ्ग, वसन्त, सुरभि।

**ग्रीष्मप०**—आखोर, उष्ण, उष्णक, उष्णकाल, उष्णागम, उष्णोपगम, ऊष्मक, ऊष्मा (अन्), उष्मागम, ऊष्मायण, ग्रीष्म, घर्म, तप, तपर्तु, तपसमय, तापन, निदाघ, पच, शुचि ।

**वर्षर्तुप०**—अब्दकाल, कालोक्षी (इन्), क्षरी (इन्), घनागम, जलधरमालाकाल, जलार्णव, तपात्यय, प्रावृट् (ष्), प्रावृषा, मेघकाल, मेघकालागम, वरिषा (स्त्री ब), वर्षर्तु, वर्षा, वर्षाकाल वर्षा (स्त्री ब), वार्षी।

**शरत्प०**—कालप्रभात घनान्त, घनात्यय, प्रावृडत्यय, मेघान्त, वर्षावसानम्, शरत् (द्), शरदा ।

**हेमन्तर्तुप०**—ऊष्मसह, प्रशव (प्रसव), प्रालेय रौद्र, लोध्र, शारदन्त, शारदत्यय, हिमागम, हेमन्त, हैमन, हैमन्त, ।

**गोलप०**—गोल । सायनार्कस्य मेषादिषड्राशि भ्रमणात्मक काल, तुलादिषड्राशिभ्रमणात्मक कालश्चेति।

**गोलभेदौ**—(१) उत्तरगोल, (२) दक्षिणगोल,-श्चैतौ गोलस्य द्वौ भेदौ स्याताम्। उक्त च—'गोलौ स्त सौम्ययाम्यौ क्रिपधटरसभे सेचरे' इ अ, ला।

**उत्तरगोलप०**—उत्तरगोल, उदग्गोल, दक्षिणेतर गोल, याम्यान्यगोल, सौम्यगोल, ।

**दक्षिणगोलप०**—अनुदग्गोल, उत्तरेतरगोल, उदगन्यगोल, दक्षिणगोल, याम्यगोल, सौम्येतरगोल, ।

३२–६२

**अयनपर्याया.**—अयनम् पथ, मार्ग, वर्त्म (अन्), सायनार्कस्य मकरादिषड्राशिभ्रमणात्मक काल कर्कादिषड्राशिभ्रमणात्मक कालश्चेति।

**अयनभेदौ**—(१) उत्तरायणम्, (२) दक्षिणायनम्, चैतावयनस्य द्वौ भेदौ स्याताम्। उक्त च—
'अयायने त नक्रात्कीटाच्च षड्भे' इति प्र ला।

**उत्तरायणप०**—आग्नेयम् उत्तरवर्त्म (अन्), उत्तरायणम्, उदगयनम्, सौम्यायनम्।

अथोदाहरणानि—

'उत्तरपथावलम्बी' (इन्), 'उत्तरमार्गगामी' (इन्), 'उत्तरवर्त्मचारी (इन्), रविरिति शेष।

**दक्षिणायनप०**—अनुदगयनम् अपागयनम्, अवागयनम्, दक्षिणवर्त्म (अन्) दक्षिणायनम्, याम्यायनम्, विसर्ग।

अथोदाहरणानि—

'दक्षिणपथावलम्बी' (इन्), 'दक्षिणमार्गगामी (इन्), 'दक्षिणवर्त्मचारी' (इन्), रविरिति शेष।

**सवत्सरप०**—अन्द, अहर्जर, आग्नेय, उर्वट, ऋतुवृत्ति, कालग्रन्थि, परवाणि, मासमान, मासमाल, युगाश युगाशक, वत्स, वत्सर वरिषम् वर्ष (पु० न०), वायव्य, शरत् (द्), (स्त्री०) शारद, श्राम सम्पत् (अ०) सवत् (अ०) सवत्सर, समा (स्त्री), समा (स्त्री० व०) सवर्त हायन (पु० न०)।

**शालिवाहनीयशकवर्षप०**—शक, शाक शाकेन्द्रकाल, शालिवाहनीयशक शालिवाहनीयशकाब्द।

**कलौ सवत्सरारम्भकर्तृनृपनामानि**—(१) युधिष्ठिर अस्य ३०४४ वर्षप्रमाणम् (२) विक्रम, अस्य १३५ वर्षप्रमाणम्, (३) शालिवाहन, अस्य १८००० वर्षप्रमाणम्।'(४) विजयाभिनन्दन, अस्य १०००० वर्षप्रमाणम्। (५) नागार्जुन, अस्य ४००००० वर्षप्रमाणम्। (६) कल्कि अस्य ८२१ वर्षप्रमाणम्। कलावेते षट् सँव्वत्सरारम्भकारका नृपा स्यु।

**वर्षभेदा.**—(१) सावनवर्ष, (२) सौरवर्ष, (३) चान्द्रवर्ष, (४) आर्क्षवर्ष, (५) गौरववर्ष—इत्येते वर्षस्य पञ्च भेदा स्यु।

**सावनवर्षप०**—सावनवर्ष, सावनाब्द, सावनवत्सर, षष्ट्युत्तरशतत्रयदिनात्मक काल।

**सौरवर्षप०**—आर्कवर्ष ऐनवर्ष, सौरवर्ष, हैलेयवर्ष। पञ्चषष्ट्युत्तरशतत्रयदिनात्मक काल।

**चान्द्रवर्षप०**—आब्जवर्ष, ऐन्दववर्ष, चान्द्रवर्ष, वैधववर्ष, चतु पञ्चाशदुत्तरशतत्रयदिनात्मक काल।

**आर्क्षवर्षप०**—आर्क्षवर्ष, औडववर्ष, धिष्ण्यवर्ष, नाक्षत्रवर्ष। चतुर्विंशत्युत्तरशतत्रयदिनात्मक काल।

**गौरववर्षप०**—गौरववर्ष, जैववर्ष, बार्हस्पत्यवर्ष, एकषष्ट्युत्तरशतत्रयदिनात्मक काल।

**प्रभवादिसव्वत्सरभेदा**— (१) प्रभव, (२) विभव, (३) शुक्ल, (४) प्रमोद, (५) प्रजापति, (६) अङ्गिरा (अस्), (७) श्रीमुख, (८) भाव, (९) युवा (अन्) (१०) धाता (तृ), (११) ईश्वर, (१२) बहुधान्य (१३) प्रमाथी (इन्) (१४) विक्रम, (१५) वृष, (१६) चित्रभानु, (१७) सुभानु (१८) तारण, (१९) पार्थिव, (२०) व्यय, (२१) सर्वजित् (त्), (२२) सर्वधारी (इन्), (२३) विरोधी (इन्), (२४) विकृति, (२५) खर,

(२६) नन्दन, (२७) विजय (२८) जय, (२९) मन्मथ, (३०) दुर्मुख, (३१) हेमलम्ब (म्बी), (३२) विलम्ब (म्बी) (३३) विकारी (इन), (३४) शार्वरी (इन) (३५), प्लव, (३६) शुभकृत् (त्) (३७) शोभन (३८) क्रोधी (इन्), (३९) विश्वावसु, (४०) पराभव (४१) प्लवङ्ग, (४२) कीलक, (४३) सौम्य (४४) साधारण, (४५) विरोधकृत् (त्), (४६) परिधावी (इन), (४७) प्रमादी (इन), (४८) आनन्द, (४९) राक्षस, (५०) अनल, (५१) पिङ्गल, (५२) कालयुक्त, (५३) सिद्धार्थी (इन) (५४) रौद्र, (५५) दुर्मति, (५६) दुन्दुभि, (५७) रुधिरोद्गारी (इन), (५८) रक्ताक्षी (इन), (५९) क्रोधन, (६०) क्षय,—श्चैते प्रभवादय षष्टिसंवत्सरा स्यु ।

**पञ्चवर्षीययुगभेदा**.—— (१) संवत्सर (२) परिवत्सर, (३) इडावत्सर, (४) अनुवत्सर, (५) उद्वत्सरश्चैते पञ्चवर्षीययुगभेदा स्यु ।

**द्वादशयुगस्वामिनामानि**—— (१) विष्णु, (२) जीव (३) शक्र, (४) अग्नि, (५) त्वष्टा (ष्टृ), (६) अहिर्बुध्न्य, (७) पितर (तृ), (८) विश्वेदेवा, (९) सोम, (१०) इन्द्राग्नी, (११) नासत्यौ, (१२) भगश्चैते द्वादशयुगस्वामिन स्यु ।

**पैत्रपर्याय**—पैत्र (पु०), मानुषेण मासेनैक पितृणामहोरात्रात्मक काल ।

**दैवतप०**—दैवत (पु०), मानुषेण वर्षेणैको देवानामहोरात्रात्मक काल ।

**दिव्यवर्षप०**— दिव्यवर्षम् (न०), देवताना षष्ट्यधिकशतत्रयाहोरात्रात्मक काल ।

**दिव्ययुगपर्याय**—दिव्ययुगम्, (न०), दिव्यैर्द्वादशसहस्रवर्षैर्मानुषचतुर्युगस्यात् ।

**दैवयुगप०**—दैवयुगम् (न०) मानुषाणां कृतादियुगचतुष्टयात्मक काल ।

**युगभेदा**—(१) सत्यम्, (२) त्रेता, (३) द्वापर, (४) कलिश्चैते युगस्य चत्वारो भेदा स्यु ।

**सत्यपर्याया**—कृतम्, सत्यम, सत्ययुगम्, सौम्यम चैतानि क्लीबलिङ्गानि स्यु ।

**त्रेताप०**—यज्ञाग्नी, त्रेता, विसर्जिका चैताः स्त्रीलिङ्गा स्यु ।

**द्वापरप०**— आग्नेय, द्वापर, यज्ञियश्चैते पुंल्लिङ्गा स्यु ।

**कलिप०**-कर्मयुगम् (न०), कलि, (पु०), कलियुगम् (न०) भर्भरक पुष्य (उभौ पुसि) ।

**कल्पप०**-कल्पौ (पु० द्वि०), ये द्वे दैवे युगसहस्रे तौ नृणां कल्पौ स्थितिप्रलयकालावित्यर्थ ।

**ब्राह्मप०**—ब्राह्म, (पु०), दैवे द्वे युगसहस्रे एको ब्रह्मणोऽहोरात्रात्मक काल ।

**मन्वतरप०**—मन्वन्तरम् (न०), दिव्याना युगाना या एकसप्ततिरेकाधिका सप्तति तन्मन्वन्तरम् ।

तदुक्तममरेण—

'मन्वन्तर तु दिव्याना युगानामेकसप्तति ।' इति अ० ४।२२

मयेनापि—

'युगाना सप्तति सैका मन्वन्तरमिहोच्यते ।' इति सू० सि० १।१८

**मनुभेदा**—(१) स्वायम्भुव, (२) स्वारोचिष, (३) उत्तम (औत्तमि), (४) तामस (तामसि), (५) रैवत, (६) चाक्षुष,

(७) वैवस्वत, (८) सावर्णि, (९) दक्षसावर्णि, (१०) ब्रह्मसावर्णि, (११) धर्मसावर्णि, (१२) रुद्रसावर्णि, (१३) रौच्य (देवसावर्णि), (१४) भौत्य (इन्द्रसावर्णि), इत्येते चतुर्दश मनव स्यु ।

प्रलयपर्याया —कल्प कल्पान्त (कल्पसहार), क्षय, जगत्क्षय, जिहानक, दैनन्दिन, परान्त, परिवर्त, परीवर्त, भूतप्लव, महाप्रलय, महासुप्ति, युगान्त (युगसहार), लोकशेष, सवर्त, सहार', समसुप्ति, सर्वनाशन ।

प्रतिसर्गप०—प्रतिसञ्चार, प्रतिसर्ग, प्रलय, सहार ।

कालान्यभेदा —(१) पूर्वाह्ण, (२) मध्याह्न, (३) सायाह्न, (४) पूर्वरात्र, (५) मध्यरात्र, (६) अन्त्यरात्र । एते कालस्य षड्भेदा स्यु ।

कालान्यभेदा —(१) भूतम्, (२) वर्त्तमानम्, (३) भविष्यत्, इत्येते कालस्य त्रय प्रभेदा स्यु ।

भूतकालपर्याया —अतीतकाल, गतकाल, भूतकाल, यातकाल, वृत्तकाल, व्यतीतकाल ।

वर्त्तमानकालप० — अतीतानागतभिन्नकाल, अद्यतनम् अधुनातनम, इदानीन्तनम्, वर्त्तमान, वर्त्तमानकाल । (आरब्धापरिसमाप्तिर्वर्तमान काल ) ।

भविष्यत्कालप०– अनागतम्, उदर्क भविष्यम्, भविष्यत्, भावी (इन), श्वस्तनम् ।

सद्य फलप०— सादृष्टिकम्, सासृष्टिकम् यत्सद्य फल तत् ।

वर्त्तमानकालफलप०— तत्काल, तदात्वम्, तात्कालिकम् वर्तमानकालफलम् ।



आगामिकालफलपर्याया — आगामिकालफलम्, आयति (शुभोत्तर काल), उदर्क (उत्तर भाविफल स), एष्यत्कालीनफलम्, भाविकर्मफलम्, भाविफलम् ।

उष कालप०—अहर्मुखम्, उष (अस्) (न०), प्रत्यूष (पु०), शेषपर्यायास्तु प्रभाते द्रष्टव्या ।

अस्य निर्णयो यथा—

'पञ्चपञ्च उष काल' इति देवीभागवतम् । पञ्चपञ्चाशद्घटिकोत्तरमुष काल । अथवा–होराद्वयात्मकरात्रिशेषकाल ।

ब्राह्ममुहूर्त्तप०—ब्राह्ममुहूर्त्त, स यथा—अरुणोदयकालस्य प्रथमदण्डद्वयात्मक काल. ।

मदनपारिजाते तु–

'शेषार्द्धप्रहरो ब्राह्मो मुहूर्त्त ।' इति ।

तत्रापि—

'सूर्योदयात्प्रागर्द्धप्रहरे यौ द्वौ मुहूर्त्तौ । तत्राद्यो ब्राह्म, द्वितीयो रौद्र ।

यल्लक्ष्यम्—

'ब्राह्मे मुहूर्त्ते उत्तिष्ठेत' इति वाग्भट । 'ब्राह्मे मुहूर्त्ते किल तस्य देवी' इति रघु–५।३६ ।

अरुणोदयकालपर्याया —अरुणोदयकाल, ब्राह्ममुहूर्त्त । सूर्योदयात्पूर्वं मुहूर्त्तद्वयात्मक काल ।

स यथा—

'रजनीशेषयामस्य शेषार्द्धमरुणोदय ।' इति ।

अपि च—

'चतस्रो घटिका प्रातररुणोदय उच्यते' इति ।

देवीभागवते तु—

'सप्तपञ्चारुणोदय' इति । इह सप्तपञ्चाशद् घटिकोत्तरमरुणोदय अथवा—सद्वादशनिमेष-होरात्मकराशिशेषकाल इत्यर्थ ।

गोधूलिकालप०—गोधूलि (पु०) गोधूलिकाल (पु०), गोधूली (स्त्री०), गोपांशु (पु०), गोरज (अस) (न०), गोरेणु (पु० स्त्री०) ।

अथ कालविशेष, स तु ऋतुवशेन ज्ञेय ।

स यथा–

'हेमन्तशिशिरयोर्मृदुता प्राप्तपिण्डीभूतार्ककाल । ग्रीष्मेऽर्द्धास्तार्ककाल । वर्षाशरद्वसन्तेष्वस्तगतार्क कालो गोधूली, एषा तु विवाहे शस्ता ।

ह्योऽव्ययप०[1]—ह्य (अस्) (अ०), गतेऽह्नीत्यर्थ ।

श्वोऽव्ययप०[2] -श्व (अस्) (अ०) आगामिन्य ह्नीत्यर्थ ।

अद्यश्वोऽव्ययप०[3]– अद्यश्व (अस्) (अ०), कालविशेष ।

अद्यतनप०[3]—अद्यतन (पु०), कालविशेष ।

स यथा—

'अतीतरात्रेरन्त्ययामद्वयेन आगामिरात्रराद्यया मद्वयेन च सहितो दिवस ।

अनद्यतनप०[5]—अनद्यतन (पु०), कालविशेष वर्त्तमानदिवसरहितसमय अद्यतनभिन्न काल

१–२४

ऐषमप०[6]—ऐषम (अस्) (अ०), वर्तमान वत्सर ।

परुत्प०[7] परुत् (त) (अ०), पूर्ववत्सर ।

परारिप०[8]—परारि (अ०) पूर्वतरवत्सर, गततृतीयवर्ष ।

इतरेद्युप०[9]—इतरेद्यु (स्) (अ०), अन्यदिनम् ।

अद्याव्ययप०[10] – अद्य, अद्यत्वे, अधुना, इदानीम्, एतर्हि सम्प्रति साम्प्रतम । एतेऽव्यया सन्ति ।

सद्योऽव्ययप०[11]– अकस्मात् एकपदे, सद्य (स), सपदि, सहसा । एतेऽव्यया सन्ति ।

सदाऽव्ययप०[12]—अजस्रम, अनिशम, शश्वत (त) सदा, सतत, सना, सनात् (त), सर्वदा । एतेऽव्यया सन्ति ।

मुहुरव्ययप०[13]–अभीक्ष्णम्, असकृत् पुन (र), पुन पुन (र्), भूय (स) मुहु (स), मुहुर्मुहु (स्) एतेऽव्यया सन्ति ।

एकदाऽव्ययप०[14]—एकदा, युगपद् (द्), उभाव व्ययौ स्त ।

तदाऽव्ययप०[15]–तदा, तदानीम् तर्हि । एतेऽव्यया सन्ति ।

यदाऽव्ययप[16]०—यदा यर्हि । (उभावव्ययौस्त) ।

कदाऽव्ययप[17]०-कदा, कर्हि । (उभावव्ययौस्त) ।

कदाचनाऽव्ययप०[18]–कदाचन, कदाचित कर्हिचित जातु । (एतेऽव्यया सन्ति) ।

२१–४८

(१) गतदिन (२) आने वाला दिन (३) आजकल (४) आज का आज की वस्तुए आधुनिक, (५) आज का दिन नहीं जो आज का नहीं (६) ऐसो ऐस्र (७) गतवष (८) गत तृतीयवर्ष, परार (९) [illegible] यदिन दूसरे दिन (१०) वर्तमानदिन इस समय, (११) तत्काल, तत्क्षण उसी समय । (१२) नित्य हमेशा (१३) बार बार, (१४) एक ही समय मे (१५) तब, उसी समय (१६) जब जिस समय (१७) कब किस समय (१८) किसी समय मे ।

इह प्रसङ्गात्केचिदव्ययाः कथ्यन्ते—

कुत्राव्ययप०[१]—कुत्र, क्व, (उभावव्ययौ स्तः)।

कुत्रचित्प०[२]—कुत्रचित् (अ०)।

क्वचनप०[३]—क्वचन, क्वचित्, (उभावव्ययौ स्तः)।

क्वापिप०[४]—कुत्रापि (अ०)।

क्वापिप०[५]—क्वापि (अ०)।

किञ्चनप०[६]—किञ्चन, किञ्चित्। (उभावव्ययौ स्तः)।

अत्रप०[७]—अत्र, इह, (उभावव्ययौ स्त.)।

इत्थम्प०[८]— इत्थम्, एवम्, (उभावव्ययौ स्तः)।

मिथःप०[९]— अन्योन्यम् (त्रि०), इतरेतरम् (त्रि.), परस्परम् (अ०), मिथः (न्) (अ०)।

वाप०[१०]—अथवा, अन्यतरस्याम्, आहो, उत, उताहो, किम्, किमु, किमुत, किमुत, विमूत, किंवा, यदि वा, यद्वा, वा, विभाषा। एते सर्वेऽव्ययाः सन्ति.।

पृथक्प०[११]—पृथक् (अ०), भिन्नः, अन्यत्रसंगतः, असकीर्ण.।

इति ज्यौतिषशब्दकोषे द्वितीयः कालवर्गः समाप्तः

—:०:—:०:—

## पर्ववर्गः।

पर्वपर्यायाः—उत्सवः, उद्धर्षः, उद्धवः, क्षण., (एते पुंसि), पर्व (अन्) (न०), महः (पुं०)।
१–२४

वार्षिकपर्वभेदाः। तत्राऽऽदौ चैत्रशुक्लपक्षीयपर्वनामानि—

(१) शुक्लप्रतिपदि—कल्पादिः, नवरात्रारम्भः, वसन्तारम्भः, आरोग्यप्रतिपद्व्रतम्, विद्याव्रतम्, तिलकव्रतम्, रोटकव्रतम्।

(३) तत्र तृतीयायाम्—मन्वादिः, मत्स्यजयन्ती, गौरीव्रतम्, सौभाग्यशयनव्रतम्, मनोरथव्रतम्, अरुन्धतीव्रतम्।

(५) तत्र पञ्चम्याम्—कल्पादि.।

(८) तत्र अष्टम्याम्—भवान्युत्पत्तिः। शीतलाष्टमी। बुधाष्टमी।

(९) तत्र नवम्याम्—रामनवमी (रामजयन्ती), सा मध्याह्नव्यापिनीग्राह्या; तत्र रामनामलेखनव्रतम्।

(११) तत्र एकादश्याम्—लक्ष्मीकान्तदोलोत्सवः; कामदैकादशी।

(१२) तत्र द्वादश्याम्—वामनद्वादशी; एषा वाराहपुराणोक्ता।

(१३) तत्र त्रयोदश्याम्— अशोकत्रिरात्रव्रतम्, मल्लिकादन्तधावनम्।

(१५) पूर्णिमायाम्—मन्वादिः, हनुमज्जयन्ती, वैशाखस्नानारम्भ, तस्याः पर्याया यथा-चर्चरी, कामामह. कामिमहः, धूर्दना, धूर्दनी, चैत्रपूर्णिमा, चैत्री, मदनध्वजा, मदनोत्सव, मधूत्सवः, वासन्ती, सुवसन्तः, सुवसन्तकः स्मरोत्सवः।

वैशाखासितपक्षीयपर्वनाम—

(१६) तत्र वरूथिन्येकादशी।
२६–५२

(१) कहाँ (२) किसी स्थान में, (३) किसी समय में, (४) कहीं भी, (५) कभी, (६) अल्प, (७) यहाँ (८) इस प्रकार से (९) परस्पर, (१०) अथवा या, विकल्प, (११) अलग-अलग, जुदा।

वैशाखशुक्लपक्षीयपर्वनामानि—

(३) तत्र तृतीयायाम्—कल्पादि, अक्षय्यतृतीया, परशुरामजयन्ती।

(७) तत्र सप्तम्याम्—गङ्गासप्तमी।

(११) तत्र मोहिन्येकादशी।

(१२) तत्र जामदग्न्यद्वादशी।

(१३) तत्र त्रयोदश्याम्, गुर्जरदेशे कालीव्रतम्, अपामार्गदन्तधावनम्।

(१४) तत्र चतुर्दश्याम्—नृसिंहजयन्ती।

(१५) तत्र पूर्णिमायाम्—कूर्मजयन्ती, जलकुम्भदानम्। तस्याः पर्यायौ—विश्वविस्ता, वैशाखी।

ज्येष्ठासितपक्षीयपर्वनामनी—

(११) तत्र अपरैकादशी।

(३०) तत्र भावुकाऽमावास्या।

ज्येष्ठसितपक्षीयपर्वनामानि—

(३) तत्र तृतीयायाम्—रम्भाव्रतम्।

(१०) तत्र दशम्याम्—गङ्गोत्पत्ति, दशहरा।

(११) तत्र निर्जलैकादशी।

(१२) तत्र रामद्वादशी।

(१३) तत्र त्रयोदश्यां निर्गुण्डीदन्तधावनम्।

(१५) तत्र पूर्णिमायाम्—मन्वादि, तस्याः पर्याया—

उपनिवेशिनी, ज्येष्ठी, ज्यैष्ठी, वटसावित्री।

आषाढासितपक्षीयपर्वनाम—

(११) तत्र योगिन्येकादशी।

आषाढसितपक्षीयपर्वनामानि—

(१२) तत्र कृष्णद्वादशी।

(१३) तत्र त्रयोदश्या नारङ्गदन्तधावनम्।

(१५) तत्र गुरुपूजा, तस्याः पर्याया—आषाढी, कृत्रिमाचारी, गुरुपूर्णिमा।

श्रावणासितपक्षीयपर्वनामानि—

(२) तत्र द्वितीयायाम् अशून्यव्रतम्।

(४) तत्र चतुर्थ्याम् सङ्कष्टचतुर्थीव्रतम्।

(७) तत्र सप्तम्याम्—शीतलाव्रतम्।

(११) तत्र कामिकैकादशी।

श्रावणसितपक्षीयपर्वनामानि—

(१) तत्र प्रतिपदि—नक्तव्रतारम्भ, रोटकव्रतम्, सुकृतव्रतम्, स्वर्णगौरीव्रतम्।

(३) तत्र मधुश्रवातृतीया।

(४) तत्र चतुर्थ्याम्—कपर्दिविनायकव्रतम्, दूर्वागणपतिव्रतम् इद कार्तिके वा।

(५) तत्र नागपञ्चमी।

(६) तत्र वर्णषष्ठी।

(७) तत्र सप्तम्याम्—शीतलापूजनम्।

(८) तत्र दुर्गाष्टमी।

(१०) तत्र दशम्याम्—कल्किजयन्ती।

(११) तत्र पुत्रदैकादशी।

(१२) तत्र द्वादश्याम्—पवित्रारोपणम्, दधिव्रतम्, बुधद्वादशी।

(१३) तत्र त्रयोदश्याम्—आरग्वधदन्तधावनम्।

(१५) तत्र पूर्णिमायाम्—रक्षाबन्धनम्, तस्याः पर्याया श्रावणी द्विजदिनो, ऋषितर्पणी।

भाद्रपदासितपक्षीयपर्वनामानि—

(११) तत्र श्रजैकादशी ।
(३०) तत्र अमावास्यायाम् — पिठोरीव्रतम्, अस्याः पर्यायः—कुशग्रहणी ।
भाद्रपदसितपक्षीयपर्वनामानि—
(१) तत्र प्रतिपदि—नक्तव्रतशान्तिः ।
(३) तत्र तृतीयायाम्—मन्वादिः, हरितालिका तद्व्रतञ्च ।
(४) तत्र चतुर्थ्याम्—स्यमन्तकः, सिद्धिविनायकव्रतम् ।
(५) तत्र ऋषिपञ्चमी, नागपञ्चमी, नागदष्टपञ्चमी ।
(६) तत्र षष्ठ्याम्—ललिताव्रतम्, महाचम्पाव्रतम् ।
(७) तत्र सप्तम्याम्—मुक्ताभरणव्रतम्, महालक्ष्मीसप्तमी ।
(८) तत्र अष्टम्याम्—महालक्ष्मीव्रतम्, दूर्वाष्टमीव्रतम्, ज्येष्ठाव्रतम् ।
(९) तत्र नवम्याम्—दुःखनवमीव्रतम् ।
(११) तत्र पद्मैकादशी ।
(१२) तत्र द्वादश्याम्—दुग्धव्रतम्, कल्किद्वादशी, जयाद्वादशी, विष्णुशृङ्खलः, अस्या श्रवणभे—श्रवणद्वादशी, वामनजयन्ती, वामनजयन्तीव्रतम्, अस्याः पर्यायाः—इन्द्रध्वजः, इन्द्रमहोत्सवः, इन्द्रस्योत्सवः, ध्वजोत्थानम्, शक्रध्वज, शक्रध्वजोत्सवः, शक्रोत्सवः, शक्रोत्थानम् ।
(१३) तत्र त्रयोदश्याम्—कङ्कोलदन्तधावनम् ।
(१४) तत्र अनन्तचतुर्दशी, उमामहेश्वरव्रतम्, नष्टदोरकम् ।
(१५) तत्र पूर्णिमायां श्राद्धारम्भः, अस्याः पर्यायौ प्रौष्ठपदी, गाङ्गी ।
आश्विनासितपक्षीयपर्वनामानि—
(४) तत्र चतुर्थी दशरथललिताव्रतम् ।
(६) तत्र षष्ठ्याम्—कपिलाषष्ठी ।
(११) तत्र इन्दिरैकादशी ।
(१३) तत्र त्रयोदश्याम्—कलियुगादिः ।
(३०) तत्र पित्रमावास्या, अस्या गजच्छायापर्व (अन्) ।
आश्विनसितपक्षीयपर्वनामानि—
(१) तत्र प्रतिपदि—नवरात्रारम्भः, नवरात्रव्रतम्, मातामहश्राद्धम् ।
(५) तत्र उपाङ्गललितापञ्चमी ।
(७) तत्र सप्तम्यां सरस्वतीपूजनम्, बिल्वशाखापूजनम्, कालरात्रिसप्तमी ।
(८) तत्र अष्टम्याम्—महारात्रिः, महाष्टमी, अशोकाष्टमी ।
(९) तत्र नवम्याम्—मन्वादिः, भद्रकालीव्रतम् ।
(१०) तत्र दशम्याम्—बौद्धजयन्ती, विजयादशमी ।
(११) तत्र पाशाङ्कुशैकादशी ।
(१२) तत्र पद्मनाभद्वादशी ।
(१३) तत्र त्रयोदश्याम्—कङ्कोलीदन्तधावनम्, गुर्जरे तु गोत्रिरात्रव्रतम् ।
(१५) तत्र पूर्णिमायाम्—नवान्नभक्षणम्, जागरीव्रतम्, अस्याः पर्यायाः—आश्विनी, अश्वाविला, शारदी, सरस्वती, द्यूतपूर्णिमा, कोजागरः, शरत्पर्व (अन्), कौमुदीचारम् ।
कार्तिकासितपक्षीयपर्वनामानि—
(४) तत्र करकचतुर्थी, एषा तु दक्षिणदेशे आश्विने ।

(६) तत्र स्कन्दषष्ठी।
(११) तत्र रमैकादशी।
(१२) तत्र द्वादश्याम्—गोवत्सपूजा।
(१३) तत्र यमत्रयोदशी।
(१४) तत्र नरकचतुर्दशी।
(३०) तत्र अमायाम्—दीपमाला, लक्ष्मीपूजा, लक्ष्मीव्रतम्, बलिराज्योत्सवश्च, अस्याः पर्यायाः—दीपमाला, दीपमालिका, दीपाली, दीपावली, बलिपर्व (न्), यक्षनिद् (द्), यक्षरात्रि.।

कार्तिकसितपक्षीयपर्वनामानि—

(१) तत्र प्रतिपदि — बलिराजः, अन्नकूटः, पुष्करयोगः।
(२) तत्र यमद्वितीया, भ्रातृद्वितीया।
(७) तत्र सप्तम्याम्—कल्पादिः।
(८) तत्र गोपाष्टमी।
(९) तत्र नवम्याम्—कृतयुगादिः, अक्षयनवमी, कूष्माण्डनवमी। तत्र नवमीत एकादश्याम्—तुलसीविवाहः।
(११) तत्र प्रबोधिन्येकादशी, भीष्मपञ्चकव्रतम्।
(१२) तत्र द्वादश्याम्—मन्वादिः, नारायणद्वादशी।
(१३) तत्र त्रयोदश्याम्—शनिप्रदोषव्रतम्, पक्षव्रतम्, गुर्जरदेशे तु कालीव्रतम्, कादम्बदन्तधावनम्।
(१४) तत्र वैकुण्ठचतुर्दशी।
(१५) तत्र पूर्णिमायाम्—त्रिपुरोत्सवः, मन्वादिः। अस्याः पर्यायाः—अश्विश्रणी, कार्तिकी, धेनुकी, वत्सरान्तः।

मार्गशीर्षासितपक्षीयपर्वनामानि—

(३) तत्र तृतीयायाम्—सौभाग्यसुन्दरीव्रतम्, तपसि वा।
(८) तत्र कालभैरवाष्टमी, कृष्णाष्टमी।
(११) तत्र उत्पत्त्येकादशी, अस्यां वैतरणीव्रतम्।
(३०) तत्र अमायाम्—गौरीतपोव्रतम्, महाव्रतम्।

मार्गशीर्षसितपक्षीयपर्वनामानि—

(५) तत्र नागपञ्चमी।
(६) तत्र चम्पाषष्ठी।
(९) तत्र नवम्याम्—कल्पादिः।
(११) तत्र मोक्षदैकादशी।
(१२) तत्र मत्स्यद्वादशी।
(१३) तत्र त्रयोदश्याम्—पिप्पलदन्तधावनम्।
(१४) तत्र चतुर्दश्याम्—पिशाचमोचनश्राद्धम्।
(१५) तत्र पूर्णिमायाम्—दत्तजयन्ती, द्वात्रिंशीपौर्णिमाव्रतम्। अस्याः पर्यायाः—आग्रहायणी, आग्रायणी, मार्गशीर्षी, मार्गी शङ्कुमूली।

इह केशवे—

'मृगशीर्षयुतामार्गशीर्षे स्यादाग्रहायणी। इति।

वैजयन्त्यां तु विशेषः—

'मासाख्या कूर्चनक्षत्रयोगश्च गुरुणा यदा। महाग्रहायणीत्याद्यास्त एव तिथयः क्रमात्।' इति।

पौषासितपक्षीयपर्वनामानि—

(११) तत्र सफलैकादशी।
(१२) तत्र सुरूपाद्वादशी।
(३०) तत्र अमायाम्—अर्द्धोदयव्रतम्।

पौषसितपक्षीयपर्वनामानि—

(११) तत्रैकादश्याम्—मन्वादिः, पुत्रदैकादशी।
(१२) तत्र कूर्मद्वादशी।
(१३) तत्र त्रयोदश्याम्—औदुम्बरदन्तधावनम्।

(१५) तत्र पूर्णिमा—अस्याः पर्यायाः—पौषी, महिषी, माता (तृ)। केशवे तु—'पुष्ययुक्ता पौर्णमासी मासे पौषी च सा पुनः।' इति।

माघासितपक्षीयपर्वनामानि—

(४) तत्र सङ्कष्टहरचतुर्थी, अङ्गारकचतुर्थी।
(११) तत्र षट्तिलैकादशी।
(३०) तत्र अमायाम्—द्वापरादि.।

माघसितपक्षीयपर्वनामानि।

(१) तत्र प्रतिपदि—वल्लभजयन्ती।

*(४) तत्र तिलचतुर्थी। तस्याम्—गौरीव्रतम्,* वरदव्रतम्।

(५) तत्र पञ्चम्याम्—वसन्तपञ्चमी।
(६) तत्र सूर्यषष्ठी।
(७) तत्र सप्तम्याम्—मन्वादिः, अचलासप्तमी, पुत्रसप्तमी, रथसप्तमी।
(८) तत्र भीष्माष्टमी।
(९) तत्र द्रोणनवमी।
(११) तत्र जयैकादशी।
(१२) तत्र वराहद्वादशी, भीष्मद्वादशी।
(१३) त्रयोदश्याम्—कल्पादिः। गुर्जरे तु कालीव्रतम्। न्यग्रोधदन्तधावनम्।
(१५) तत्र पूर्णिमा, अस्याः पर्यायो—अग्निपूर्णिमा, माघी।

फाल्गुनासितपक्षीय पर्वनामनी—

(११) तत्र विजयैकादशी।

(१४) तत्र चतुर्दश्याम्—शिवरात्रिव्रतम्, सा तु निशीथव्यापिनी ग्राह्या।

फाल्गुनसितपक्षीयपर्वनामानि—

(१) तत्र प्रतिपदि—होलिकारम्भ.।

(८) तत्र होलाष्टमी।
(११) तत्र आमलकी (आमर्दी)-एकादशी।
(१२) तत्र गोविन्दद्वादशी, वाराहे तु नृसिंहद्वादशी।

(१३) तत्र त्रयोदश्याम्—बादरदन्तधावनम्।
(१५) तत्र पूर्णिमायाम्—मन्वादिः। होलिकोत्सवः।

अस्याः पर्यायाः—दाण्डपाता, फाल्गुनी, वसन्तोत्सवः, हुताशनी, होला, होलाका, होलिका, होली।

*एतया पूर्णिमया सलग्ना या प्रतिपत्तस्याः* पर्याया—धूलिमहः, पांसुमह, रजोमहः, रेणुमहः ('धुलेण्डी इति भाषा)।

चैत्रासितपक्षीयपर्वनामानि—

(११) तत्र पापमोचन्येकादशी।
(१३) तत्र त्रयोदश्याम्—महाव रुणीव्रतम्, महामहावारुणीव्रतम्, शनिप्रदोषव्रतम्, पक्षप्रदोषव्रतम्।

(३०) तत्र अमायाम्-मन्वादिः।

यस्मिन्नब्देऽधिमासस्तस्य पक्षद्वयो. कमलैकादश्यौ। मतान्तरेतु अधिके सिते 'पद्मिनी'। असिते 'परमा' इति।

प्रतिमासे पञ्चपर्वभेदा.—

(१) कृष्णचतुर्दशी, (२) कृष्णाष्टमी, (३) अमावास्या, (४) पूर्णिमा, (५) रविसङ्क्रान्तिदिनं, चैतानि पञ्च पर्वाणि स्युः।

यदुक्तं मदीयज्योतिस्तत्त्वे—१६-७ ३१४।

'भूतकृष्णाष्टमीदर्शराकाः सङ्क्रान्तिवासर.।

भानोरेतानि पर्वाणि पञ्च सत्सु विवर्जयेत्।

इति ।

पञ्चाङ्गे ये वार्षिकफलाधिकारिणस्तेषां नामानि–यथा—(१) सम्वत्सर, (२) राजा (अन्), (३) मन्त्री (इन्), (४) सस्याधिप, (५) पश्चिमधान्येश, (६) मेघेश, (७) रसाधिप, (८) नीरसेश, (९) फलेश, (१०) धनेश, (११) दुर्गेश (१२) महावर्षा, (१३) युवराज, (१४) धनेश, (१५) अन्नेश, (१६) करणाधिप, (१७) ग्रहेश, (१८) मेघराज, (१९), नागराज, (२०) वायुराज, (२१) वर्षाधान्यादय, (२२) आर्द्राप्रवेश, (२३) गुरुचार, (२४) शनिचार, (२५) शनजिह्वा, (२६) रोहिणीवास, (२७) जगल्लग्नम् (२८) वर्षलग्नम्, (विंशोत्तरीमतेन, अष्टोत्तरीमतेन वा (२९) आय (लाभ), (३०) व्यय, 'एषामानयनविधिस्तु 'मकरन्द कल्पलतादिषु, द्रष्टव्य । इति ।

इति श्रीमुकुन्दवल्लभविरचिते ज्योतिषशब्दकोषे तृतीय पर्ववर्ग समाप्त ।

—०—०—

## राशिवर्गः—

राशिपर्याया.—ऋक्षम, क्षेत्रम्, गृहम्, भम्, भवनम्, एते क्लीबलिङ्गा स्यु, राशि (पु०), (अयममण्डलार्काशो राशिर्बोध्य ।

राशिभेदा —(१) मेष, (२) वृष (३) मिथुन, (४) कर्क, (५) सिंह, (एते पुंल्लिङ्गा), (६) कन्या, (७) तुला, (उभौ स्त्रीलिङ्गौ), (८) वृश्चिक (पु०), (९) धनु (पु) (न०), (१०) मकर, (११) कुम्भ, (१२) मीन, (एते पुंल्लिङ्गा) इत्येते द्वादशराशय सन्ति ।



मेषपर्याया·—(२)[1] अज, अवि, आद्य, क्रिय, छाग, पशु वस्त मेढ, मेड्, विश्व, वृष्णि शुभ (३) आदिम उरण, उरभ, ऊर्णायु, एडक, छगल, तुवुर, तुम्बुर, प्रथम, (४) छगलक, मुख्यतम ।

वृषप०—(१) गो (गो), भ, (२) उक्षा (अन्), उस्र, गोप, भद्र, वृष, नद्दी (इन्) (३) अनड्वान् (अनडुह्), ऋषभ, उक्षक, ककुद्मान् (मतु०), गोकुल, गोपति, तावुरि, तावुरु, द्वितीय पुङ्गव, वृषभ, गोरमण, बलीवर्द, सौरभेय, (५) बलीवर्दक ।

मिथुनप०—(१) युक् (ज्), (२) काम, जितम, द्वन्द्व, नृयुक (ज्), यमम् युगम्, युग्मम्, वीणा, (३) जतुम, जितुम, जुतुम, तृतीय नृयुग्म, मन्मथ, मिथुन, युगलम्, वल्लकी, विपञ्ची, वैणिकम्, स्त्रीपुंस, (४) नृमिथुनम्, वीणाधर, वीणावाद, (५) नरमिथुनम्, वीणा, वैणिकम् ।

कर्कप०—(२) कर्क, कर्की (इन्), कीट, कूर्म, चान्द्रम् (३) कटक, ककट, कुलिर, कुलीर, चतुर्थ, चन्द्रभम्, विधुभम्, (४) कटकभम्, कर्कटक, कर्काटक, शशाङ्कभम्, षोडशाङ्घ्रि, (५) अपत्यशत्रु, चतुर्थराशि, चन्द्रभवनम, जम्बालनीड षोडशपाद, सलिलचर, (६) अपत्यशात्रव, अपत्यसपत्न, षोडशचरण ।



---

१. राशिग्रहपर्यायारम्भे स्थिताङ्का, पर्यायस्थैकाक्षराङ्कनतेया । एवमन्यत्रापि ।

सिंहपर्यायाः—(२)लेय , सिंह , हरि , (३)इन-भम्, केसरी (इन्), द्विपारि पञ्चम , पञ्चास्य , मृगद्विट् (ष्), मृगराट् (ज्), मृगारि , मृगेन्द्र , मृगेश , रविभम्, वनप , हर्यक्ष , (४) इभरिपु , कण्ठीरव , करिरिपु , करिवैरी (इन्), काननेश , चित्रकाय , द्विपारिभम्, नखायुध , पञ्चनख पञ्चमभम् पञ्चानन , पुण्डरीक , मृगदृष्टि , मृगराज , मृगरिपु मृगाधिप , मृगाराति , मृगाशन , (५) इभजिघांसु , पाणि-जायुध , वनजवन , वारणवैरी (इन्), (६) करिकुलरिपु , (७) सिन्धुरवैरिराशि ।

कन्याप०—(१)स्त्री.(२) कन्या, कान्ता, तन्वी, नारी, बाला, भीरु योषा, योषित् (त्), रामा, वधू , वधा, वामा, षष्ठ , षष्ठी, सुता, (३) अङ्गना, अबला, एणाक्षी, कन्यका, कन्याभम् , कलदृक् (श्), कामिनी, कुमारी, तरुणी, दयिता, दारिका पाथेय , पाथोन , प्रमदा, बालिका, भामिनी, महिला, महेला, मानिनी, मृगाक्षी, मृगीदृक् (श्), युवति , योषिता, रमणी, ललना, वधुटी वधूटी, वनिता, वर्णिनी, सुन्दरी, सुमुखी (४) अभिरामा, मन्यात्मक , कुमारिका, कुरङ्गीदृक् (श्), जलजाक्षी, नितम्बिनी पाथो-नक , सीमन्तिनी, सुलोचना, सुवासिनी, हरिण-दृक् (श्), (५) एणनयना, पद्मदलाक्षी, मृग-नयना, मृगलोचना, वामलोचना हरिणेक्षणा (६) कुरङ्गनयना, कुरङ्गलोचना, अनीपदर्शिनी, वामविलोचना ।

तुलाप०—(२) जूक , तुल , तुला, तुली, तूल ,? (१) तौलि , तौली (इन्), घट , पिचु यूकम्, वणिक् (ज्), (३) तुलक , तुलभृत्, तुलाभृत्, तूलभृत्, तौलिक , नैगम., वणिज , वाणिज, सप्तम , (४) आपणिक , तुलाधर , घटगति , पण्याजीव , वैदेहक , सार्थवाह , (६) क्रय-विक्रयक , वणिगधिपति ।

वृश्चिकप०—(२) अलि , अली (इन्), आलि , कीट , कौर्पि , कौर्पी (इन्), कौर्प्य , द्रौण , भृङ्ग , (३) अष्टम , कौर्पिक , द्विरेफ , भ्रमर , वृश्चिक , षडंघ्रि , सविष , (४) चञ्चरीक , पुष्पन्धय , मधुकर , वृश्चिकिक , सरीसृप ।

धनुःप०—(२) अश्व , अश्वी (इन्), अस्त्री (इन्), चाप , चापी (इन्), तौक्ष , तौक्षी (इन्), धनम् ? धनु , धनु (ष्), धन्वा (अन्), धन्वी (इन्), शस्त्री (इन्), शार्ङ्गम्, हय , (३) अस्त्रिभम्, इष्वास , कार्मुकम्, कोदण्डम्, चापभृत् (त्), तौक्षिक , धनुर्भृत् (त्), धनुष्क , धनुष्मान् (मनु०), धानुष्क , नवम , निषङ्गी (इन), शरग , शारङ्गम्, सारङ्गम्, हयाङ्गम्, (४)अश्वकाय , अश्वतनु , इष्वासभम्, कार्मुकभृत्, कोदण्डभृत्, चापधर , तुरङ्गाङ्गम्, धनुर्धर , बाणासनम्, रोपासनम्, शरधर , शरासनम, हयतनु , (५) कार्मुकधर , कोदण्डधर , तुरग-तनु , तुरगजघ , विशिखासनम (६) तुरङ्ग-जघन , (७) हयनरविदेह ।

मकरप०—(२) एण , ग्राह , नक्र , मृग , कुरङ्ग , कुम्भीर , दशम , मकर , मृगास्य , वातायु , हरिण , (४) आकोकेर , एणानन , करिकर , कुरङ्गास्य , मृगमुख , मृगवक्त्र , मृगानन , शार्ङ्गरव , शिशुमार , हरिणास्य ,

(५) अजिनयोनि, कुरङ्गवक्त्र, कुरङ्गास्यक, मृगवदन, हरिणानन, (६) ऋक्षविशेषभुक् (ज्) हरिणवदन ।

कुम्भपर्यायाः—(१) व, (२) कुट, कुम्भ, घट निप, (३) कलश, कुम्भभृत्, (त्) घटभृत्, तोयभृत्, हृद्रोग, (४) कलशभत्, कुम्भधर, घटधर, घटरूप, चित्तामय, वेनोगद, तोयधर, पयोधर, (५) कलशधर हृदयरोग ।

मीनप०-(२) अन्त्यम्, बन्द, झष, तिमि, प्रोष्ठी (इन्), मत्स्य, मीन, शकली (इन्), (३) अण्डज, अन्तिम, अन्त्यभम्, इत्यसि, तुरष्क, पाठीन, पाठीर, मीनालि, विसार, शकली (इन्), शकुली (इन्), शफर, शफरी (इन्), अन्त्यभम, अन्त्यराशि, अनिमिष अनिमेष, अवसानम्, जलचर, तिमिद्वय, तिमियुग, पृथुरोमा (अन्), मीनद्वय, मीनयुग, मीनयुग्म, वैसारिण, (५) अभ्ररसोका (अस्), तिमियुगल, नीरनिकेत, मीनयुगल, शफरिद्वय, शफरियुग्म, (६) अनिमेषाह्वय घनरसचर, पानीयनिवेत, शफरियुगल, (७) पुष्करागारराशि, (८) वलाहकरसागार ।

एकयोक्त्या राशिद्वयपर्यायाः—

मेषवृश्चिकपर्यायाः—कौजम्, भौनम्, भौमिजम्, लोहिताङ्गम् ।

वृषतुलाप०- काव्यम्, भार्गवम् शौक्रम, सैतम् ।

मिथुनकन्याप०– बौधम् वोधनम, रोधनम् चान्द्रिमम् ।

धनुर्मीनप० गोरवम्, जैवम् वार्हस्पत्यम्, वाचस्पत्यम् ।

मकरकुम्भप०—मान्दम्, मार्दवम्, छायाजम्, भानुजम् ।

मेषराशिनक्षत्रभेदाः—अश्विनी, भरणी, कृत्तिका-पादश्च 'मेषराशि' ।

वृष,,—कृत्तिकाद्वयाद्यपादा, रोहिणी, मृगशिरोऽर्द्धम्, च 'वृषराशि' ।

मिथुन,,—मृगशीर्षोत्तरार्द्धम्, आर्द्रा, पुनर्वसोराद्यत्रय पादाश्च 'मिथुनराशि' ।

कर्क,,—पुनर्वस्वन्त्यपाद, तिष्य, अश्लेषान्त च 'कर्कराशि' ।

सिंह,, मघा, पूर्वाफाल्गुनी, उत्तराफल्गुन्या द्यपादश्च 'सिंहराशि' ।

कन्या,,—उत्तराफाल्गुनीद्वयाद्यपादा, हस्त, चित्रार्द्धञ्च 'कन्याराशि' ।

तुला,,—चित्रोत्तरार्द्धम्, स्वाती, विशाखाद्य त्रय पादाश्च, 'तुलाराशि' ।

वृश्चिक,,—विशाखान्त्यपाद, अनुराधा, ज्येष्ठान्त च 'वृश्चिकराशि' ।

धनु,,—मूलम्, पूर्वाषाढा, उत्तराषाढाद्यपादश्च 'धनूराशि' ।

मकर,,—उत्तराषाढाद्वयाद्यपादा, श्रवणम्, धनिष्ठार्द्धञ्च 'मकरराशि' ।

कुम्भ,,—धनिष्ठोत्तरार्द्धम्, शतभिषा, पूर्वाभाद्रपदाद्यपादश्च 'कुम्भराशि' ।

मीन,,—पूर्वाभाद्रपदाद्वयाद्यपादा, उत्तराभाद्रपदा, रेवत्यन्तञ्च 'मीनराशि' ।

कालपुरुषाङ्गे राशिविभाग—(१) मूर्धा (शिर), (२) मुखम्, (३) वक्षस्थलम्, (४) हृदयम्,

(५) क्रोडम् (उदरम्), (६) अम्बरभृत् (कटी), (७) वस्ति, (८) मेहनम्, (९) ऊरू, (१०) जानू, (११) जघे, पादद्वयमेव कालपुरुषस्याङ्गं क्रमशो मेषादिराशीना विभागो ज्ञेय ।

राशीना चरादिभेदा (१) चर, (२) स्थिर (३) द्विस्वभावश्चेते राशीना त्रयोभेदा स्यु ।

चरराशिनामानि मेष, कर्क, तुला, मकर ।

स्थिरराशिनामानि–वृष, सिंह, वृश्चिक, कुम्भ ।

द्विस्वभावराशिनामानि–मिथुन, कन्या, धनु, मीन ।

चरराशिपर्याया—चपल, चपलोदय, चर, चरोदय, चल, चलोदय, तरल ।

स्थिरराशिप०—अग, अगोदय, अचपल, अचपलोदय, अचर, अचरोदय, अचल, अचलोदय, अतरल, स्थास्नु, स्थिर ।

द्विस्वभावराशिप०—द्वन्द्वम्, द्वितनु, द्विदेह, द्विप्रकृति, द्विमूर्ति, द्विस्वभाव, द्व्यङ्गम् ।

राशीना मनुष्यादिभेदा — (१) मनुष्य, (२) पशु, (३) कीट, (४), जलज श्चैते राशीना मनुष्यादिचत्वारो भेदा स्यु ।

मनुष्यराशिनामानि–मिथुन, कन्या, तुला, धनु-पूर्वार्द्धम्, कुम्भश्चैते मनुष्यराशयो लग्नस्या, पूर्वस्या बलिन, स्यु ।

पशुराशिनामानि—मेष, वृष, सिंह । धनु-परार्द्ध, मकरपूर्वार्द्धश्चैते पशुराशय खस्था मवाच्या बलिन स्वामिन स्यु ।

जलजराशिनामानि—कर्क, मकरपरार्द्ध, मीनश्चैते जलजराशय सुखस्था कौवेर्यां बलिन स्यु ।

कीटराशिनाम—वृश्चिक, ग्रयमस्ते प्रतीच्यां बली ।

मनुष्यराशिपर्याया —द्विपद, नर, मनुज, मनुष्य मर्त्य, मानव, मानुष इति ।

चतुष्पदप०—चतुष्पद, चतुष्पाद् (द्), चतुष्पाद, चतुश्चरण, चतुरङ्घ्रि, चरि, तुर्यपाद, तिर्यङ् (च्), तूर्यपाद, पशु ।

कीटप०—कीट ।

जलचरप०—अब्ज अम्बुज आप्य, जलचर, जलज, जलराशि, वारिजोदय, वारिप्रसूतोदय ।

शीर्षोदयराशिनामानि०—मिथुन, सिंह, कन्या, तुला, वृश्चिक, कुम्भश्च ।

पृष्ठोदयप०—मेष वृष, कर्क, धनु, मकरश्च ।

उभयोदयप०—मीन ।

दिवाबलिप०—मिथुन सिंह, कन्या, तुला, वृश्चिक, कुम्भ, मीनश्च ।

निशाबलिप०—मेष, वृष, कर्क, धनु, मकरश्च ।

पूर्वदिङ्निवासिराशिनामानि— मेष, सिंह, धनुश्च ।

दक्षिणदिङ्निवासि, –वृष कन्या, मकरश्च ।

पश्चिमदिङ्,,—मिथुन तुला, कुम्भश्च ।

उत्तरदिङ्,,—कर्क, वृश्चिक, मीनश्च ।

राशिस्वामिनामानि—(१) मङ्गल, (२) शुक्र, (३) बुध, (४) चन्द्र, (५) रवि, (६) बुध, (७) शुक्र, (८) मङ्गल, (९) बृहस्पति, (१०) शनि, (११) शनि, (१२) बृहस्पतिश्चेत्येते मेषात् क्रमात् द्वादशराशीना स्वामिन सन्ति ।

**आत्मीयपर्याया**—अन्तरङ्गम् आत्मीयम्, निजम्, नैजम, स्वम्, स्वकम्, स्वकीयम् स्वीयम् ।
**स्वराशिप०**—आत्मीयभम्, आत्मीयराशि, निज गृहम्, निजभम्, निजराशि, निजर्क्षम्, स्वगृहम्, स्वभम्, स्वराशि, स्वर्क्षम, स्वकीयगृहम्, स्वकीय-भम्, स्वकीयराशि, स्वकीयर्क्षम्, स्वीयगृहम्, स्वीयभम्, स्वीयराशि, स्वीयर्क्षम् ।
**स्वांशप०**—स्वनवांश, स्वभाग, स्वलव, स्वांश, स्वांशक ।
**वर्गोत्तमांशप०**—उत्तमभाग, उत्तमलव, उत्तमांश, उत्तमांशक, वर्गोत्तम, वर्गोत्तमभाग, वर्गोत्तमलव, वर्गोत्तमांश, वर्गोत्तमांशक ।
**वर्गोत्तमांशभेदा**—(१) प्रथमा–(आद्या–)शक, (२) पञ्चमांशक, (३) नवमांशकश्चेते वर्गोत्तमांशस्य त्रयो भेदा स्यु । ते च यथा—चरराशिषु प्रथमनवांश, स्थिरराशिषु पञ्चमनवांश, (३) द्विस्वभावराशिषु नवमनवांशो वर्गोत्तम-संज्ञको बोध्य ।

इति श्रीमुकुन्ददैवज्ञविरचिते ज्योतिषशब्दकोषे चतुर्थो राशिवर्ग समाप्त ।

---

## ग्रहवर्ग—

**ग्रहपर्याया**—(२) खग, खसत् (द), खेट, खोका (अस्), ग्रह, द्युग द्युसत् (द्), (३) अभ्रग, खगामी (इन्) खगेन्द्र, खचर खचार, खचारी (इन्) खपान्थ, खवर्त्मा (अन्), खेगामी (इन्), खेचर, गोगति, ग्रहेन्द्र, दिविषत् (द्) दिवौका (अस्), द्युगति, द्युगामी (इन्), द्युचर, द्युचारी (इन्), नभ सत् (द्), नभोग, विबुध, वियद्ग, विहग, विहङ्ग, व्योमग, (४) अभ्रगति, अभ्रगामी (इन्) अभ्रचर, अम्बरग, आकाशग, गगनग°, गगनसत् (द्), दिविचर, नभश्चर, पुष्करग, वियच्चर विहङ्गम, व्योमगति, व्योमगामी (इन्), व्योमगृह व्योमगेह, व्योमचर, व्योमचारी (इन्), व्योमाटन व्योम्निगति, (५) अम्बरगति, अम्बरगामी (इन्) अम्बरचर, अम्बरचारी (इन्), अम्बरपान्थ अम्बरवास, अम्बरायण, आकाशगति, आकाशगामी (इन्), आकाशगेह, आकाशचर, आकाशचारी (इन्), आकाशवास, आकाशाटन गगनगति, गगनगामी (इन्), गगनगेह, गगनचर, गगनचारी (इन्), गगनवास, गगनवासी (इन्), गगनाटन, गगनेचर, पुष्करचर, पुष्करालय, व्योमनिवास, (६) अनिलाध्ववेग, अम्बर-निवास, आकाशनिलय, आकाशसदन, गगन-निवास, गगनभ्रमण, गगनविचारी (इन्), गगनाधिवासी (इन्), विष्णुपदायन, हरिवर्त्मचर, हरिवर्त्मचारी (इन), (७) पुष्करालयशाली (इन्), महाबलवर्त्मग, विबुधमार्गचर, व्योमतलाधिवास, समीरायणचारी (इन्), (८) गगन-गृहनिवास, पत्ररथायनायन ।
**आकाशप०**—अनन्तम्, अन्तरिक्षम, अन्तरीक्षम्, अभ्रम्, अभ्रपथ, अम्बरम्, अर्कमार्ग, अवटी (इन्) आकाश, उडुपथ, खम्, गगनम, ग्रह-नेमि, घनाश्रय, चन्द्रमार्ग, छायापथ, तारापथ,

तारावर्त्म (अन्), दिगवस्थानम्, द्यौ (दिव्), दिव्यम्, देवमार्ग, देववर्त्म (अन्), द्यु (अ०), द्यौ (द्यो), नक्षत्रमार्ग, नक्षत्रवर्त्म (अन्), नभ (अस), नभस, नाक, पक्षिमार्ग, पुष्करम्, बाणमार्ग, भुव (अस्) (अ०), मरुत्-पथ, मरुद्वर्त्म (अन्), महाबिलम्, मेघवर्त्म (अन्), मेघाध्वा (अन्), वायु, वायुमार्ग, वायु-वत्म (अन), वार्वाहाश्रय, वियत् (त), विष्णु-पदम्, *विहाय (अस), विहायस, विहयमा* (अ०), व्योम (अन्), सुरपथ, सुरवर्त्म (अन्), स्वर्गवासी (इन्)।

**शुभग्रहपर्याया**—(१) सत् (त्), (२) इष्ट, चारु, पुण्य, भव्य, रम्य, शस्त, शुभ, साधु, सौम्य, (३) अनघ, अनुग्र, अमल, उत्तम, निर्मल, प्रशस्त, विमल, शस्तकृत् (त्), शस्तद, शुभकृत्, (त्), शुभद, शोभन, सत्खमत (द), सत्खौका (अस्), सद्ग्रह, सुकृत, सुखग, सुखेट, सुग्रह, (४) अनशुभ, गतमल, भव्य-ग्रह, विनिर्मल, वीतमल, शुभकर, सतखचर, सद्द्युगति, सत्नभोग, (५)कल्याणग्रह, भव्यन भोग, शुभग्रहेन्द्र, सद्व्योमवास, सुकृतग्रह, सुवियच्चर, (६) कल्याणखचर, भव्यविय त्पान्थ, शुभगगनग शुभवियच्चर, (७) कल्याण-खगमन, भव्यवियच्चरेन्द्र शुभनभोगमन, सुकृतवियच्चर (८) सुकृतगगनचारी (इन्), सुकृतगगनवास ।

**पापग्रहपर्याया**—(२) अहा (अम), अघ, अमन् (त) उग्र, एना (अस्), खर, खल, तीव्र, दुष्ट, पङ्क पाप पाप्मा (अन्), (३) अचारु, अपुण्य, अभव्य, अशस्त, अशुभ, असाधु, असौम्य, आग्नेय, कण्टक, कलुष, कल्मष, किल्विष, गर्हित, दहन, दुरित, दुग्रह, दुष्कृत, पापक, पावक, मलिन, वृजिन, (४) अनुत्तम, अशुभकृत् (त्), अशुभद, अशोभन, अमत्कर, असुकृत, शुभेतर, सौम्येतर, (५) अशुभकर, अशोभनकृत् (त्), अशोभनद, सुकृतेतर, (६) अशोभनखग, असुकृतखेट, (७) अशुभनामधर, अशुभनामधेय ।

**बलपर्याया**—ऊर्जम्, ओज (अस्), तर (अस्), बलम्, वीर्यम्, शक्ति, शुष्मम्, शौर्यम्, सत्त्वम्, मह (अस्), सरम्, स्थाम (अन्), शेषस्त्वायुर्दा-यादिवर्गे ।

**बलिग्रहपर्याया**—(२) पुष्ट, प्राणी (इन्), बली (इन्), सारी (इन्), (३) असल, ओजस्वी (इन्), ओजिष्ठ, पीवर, प्राणभाक् (ज्), प्राणवान् (मतु०), बलभाक (ज्), बलवान् (मतु०), बलस्थ, मासल, विक्रान्त, वीर्यभाक् (ज्), वीर्यवान् (मतु०), शक्तिभाक् (ज्), शक्तिभृत् (त्), शक्तिमान् (मतु०), सप्राण, सबल, सवीर्य्य, सशौर्य, ससार, सहस्वान् (मतु०), सारभाक् (ज्), सारभृत् (त्), सार-मान् (मतु०) (४) उपचित, प्राप्तवीर्य, बल-दीप्त, बलशाली (इन्), बलोदार वीर्यवाही (इन्), शक्तियुक्त, शक्तिशाली (इन्), शौर्य-वाही (इन्), (५) प्राणोपपन्न, बलोपपन्न, वीर्यवन्मुखी (इन्), वीर्योपपन्न, सम्प्राप्तबल, (६) प्रकटितबल, विरचितबल ।

**अतिबलिग्रहपर्याया**—(३) प्राबल्य, बलिष्ठ,

बलीयान् (ईयसुन्), विक्रम, (४) अतिप्राणी (इन्), अतिबली (इन्), अतिवीर्य, अतिशौर्य, अधिप्राणी (इन्), अधिबली (इन्), प्राणाधिक्य, बलाधिक्य, बलोत्कट, बलोत्कर्ष, वीर्यवत्ता (स्त्री०), श्रेष्ठबल, श्रेष्ठवीर्य, (५) अतिशक्तिता (स्त्री०) अत्यन्तप्राणी (इन्), अत्यन्तबली (इन्), अत्यन्तसत्त्व, प्राणप्रधान बलप्रधान, महोग्रवीर्य, महोग्रसार, वीर्यप्रधान, शौर्यप्रधान, (६) अतिपराक्रम, स्फुरदशुजाल, (७) उत्कटकान्तियुक्त, श्रेष्ठबलाधिशाली (इन्)।

**हीनबलग्रहपर्याया**—(२) रिक्त, (३)अप्राण, अबल, अवीर्य, अशौर्य, असार, दुर्बल, निःप्राण, निःशौर्य, निःसत्त्व, निःसार, निर्बल, निर्वीर्य, विप्राण, विबल, विवीर्य, विशौर्य विसार, (४) हतबल, कृशबल, क्षीणबल, क्षीणवीर्य, क्षीणसार, गतप्राण, गतबल, बलमुक्त, बलोज्झित, बलोद्रिक्त, वीतबल, वीर्योज्झित, सारमुक्त, हीनबल, (५) ओजोरहित, प्राणवर्जित, बलवर्जित, विधूतवीर्य, (६)क्षीणपराक्रम, हीनपराक्रम, (७) पराक्रमवर्जित ।

**कल्याणमात्रपर्याया**—कल्याणम् (न०), स्त्रियां कल्याणी, अन्ये टावन्ता । काम्यम्, कुशलम् क्षेमम्, प्रशस्तम्, भन्दम्, भद्रम्, भविकम्, भव्यम् भावुकम्, भासुरम्, मङ्गलम्, भद्रम्, शम् शस्तम् शिवम्, शुभम्, श्रेय (अस्), श्व श्रेयसम्, श्वोवसीयसम् सुकृतम् सूनृतम्, प्रशस्तम्, शुभम्, शोभनम्, सत् (त्) (न०), क्वचित्तु—वरम्, श्रेष्ठम् वरिष्ठम्, वरीय (ईयसुन्) (न०) ।

अन्यत्रापि—

इष्टम्, उत्तमम्, हितम्, अतिशोभनम्, पुष्कलम्, श्रेय (अस्), श्रेष्ठम्, सत्तमम् । अतिशोभनाद्या शब्दा शोभनस्य इत्यन्ये । क्वचित्तु—वरीय (ईयसुन्), वरिष्ठम्, अत्यतिशोभनस्य ।

**सुखपर्याया**—कम, निर्वृति, शर्मम्, शर्म (अन्), शातम्, सातम्, सुखम्, सौख्यम् ।

**आनन्दप०**—आनन्द, आनन्दथु, आमोद आह्लाद, चित्तप्रसन्नता, तृप्ति, नन्दथु, नन्दि, प्रमद, प्रमोद, प्रीति, मद, मुत् (द्), शम्भर, सम्मद, हर्ष, हृष्टि, ह्लाद ।

**क्लेशप०**—आदीनव, आश्रव, आस्रव, क्लेश, 'आदीनव, दोषे कष्टे चेत्यन्ये ।' क्लेश, परिश्रमे इत्यन्ये ।

**दुःखप०**—अकम्, अर्ति, असुखम्, आभीलम्, आमनस्यम्, आर्ति, कष्टम्, कृच्छ्रम् दुःखम् पीडा, प्रगाढ, प्रसूतिजम्, बाधा, विराधनम्, वेदना, व्यथा ।

**अशुभप०**—अनिष्टम्, अप्रशस्तम्, अरिष्टम्, अशस्तम् अशुभम्, अशोभनम्, असत् (त्), नेष्टम् रिष्टम् ।

**ग्रहभेदा**—(१) सूर्य, (२) चन्द्र, (३) मङ्गल, (४) बुध, (५) बृहस्पति, (६) शुक्र, (७) शनि (८) राहु, (९) केतुश्चेत्येते नवग्रहा सन्ति (१) गुलिक (२) मान्दिश्चेति द्वावुपग्रहौ । ताजिकशास्त्रे तु मुन्था इत्युपग्रह उक्त । आधुनिकास्तु (१) हर्शल, (२) न्येप्च्यूनश्चेति (इन्द्रवरुणौ) द्वौ उपग्रहावुक्तौ । केनचित्तु 'प्लोटो' इत्यपि एकोग्रह उक्त ।

रविपर्यायाः—(१) क, ख, गौ (गो), द्यौ (द्यो), (२) अंशु, अग, अद्रि, अरु (पु), अर्क, अर्चि, (पु), अवि, अहि, आत्मा (अन्), इन, कपि, खग, खाङ्क, ज्योति (पु), तपु (पु), तपुं, त्वष्टा (ष्टृ), द्युकृत् (त्), द्युमान् (मतु), पपी, पाथ, पाथि, पासि, पीत, पीतु, पीथ, पीयु, पुष्ट, पृश्णि, पेरु, ब्रध्न, ब्रह्मा (अन), भग, भातु, भानु, भान्त, भास्वान् (मतु०), मन्थ, मित्र, वाजी (इन्), विष्णु, शुचि, सुर, सूनु, सूर, सूर्य, हंस, हरि, हस्ती (इन्), हेलि, (३) अंशुमान् (मतु), अध्वग, अरुण, अर्चिष्मान् (मतु), अर्यमा (अन्), अव्यय, असुर, आदित्य, उष्णकृत् (त्), उष्णगु, उष्णभा (स्), उष्णभृत् (त्), उष्णरुक् (च्), उष्णांशु, उष्णोस्र, कर्णसू, कालकृत् (त्), कालभृत् (त्), काश्यप, काश्यपि, किरण, किशोर, कुञ्जार, कुतप, क्षपारि, खद्योत, खमणि, खररुक् (च्), खरांशु, गभस्ति, गोपति, ग्रहमुद् (थ्), ग्रहेश घर्मांशु, चण्डांशु, चित्रार्चि (पु), छायेश, जगत्सू, ज्योतिष्मान् (मतु), ज्यौतिष, तपन, तरणि, तरल, तापन, तिग्मगु, तिग्मभा (स्), तिग्मांशु, तीक्ष्णभा (स्) तीक्ष्णांशु, तीव्रांशु, त्रितनु, त्रिमूर्ति, दिनकृत् (त्), दिनप, दिनेश, दिवसेट (श) दीप्तिमान् (मतु), दृशान, द्युनाथ, द्युनेता (तृ), द्युपति, द्युमणी, द्युभर्ता (तृ), द्युमणि द्युरश्मि, धरुण, ध्वान्तारि, पतङ्ग पद्माक्ष, पिङ्गल, पुष्कर, प्लवग, भाकाप भानुमान् (मतु), भानेमि, भारवि, भास्कर, महिर, मिहिर, मार्तण्ड, मार्ताण्ड, मुण्डीर, यमसू, रात्रिद्विट् (ष्), रुचिप, वारुण, वारकृत (त्) वासन्त, विवस्वान् (मतु), विश्वप्सा, (आकारान्त), सप्ताश्व, सविता (तृ०), (४) अंशुधर, अंशुपाणि, अंशुभर्ता (तृ), अंशुमाली (इन्), अंशुहस्त, अब्जपाणि, अब्जबन्धु, अब्जहस्त, अभीशुमान् (मतु०), अभीषुमान् (मतु०), अम्बरीष, अम्बुजिनीट् (श्), अम्बुजेश, अम्ब्यधिप, अशीतरुक् (च्), अशीतांशु, अहरीश, अहर्नट, अहर्पति, अहर्मणि, अहस्कर, अहिमत्विट् (ष्) अहिमांशु, अह्नोभर्ता (तृ), उदरथि, उष्णकर, उष्णघृणि, उष्णतेजा (अस्), उष्णद्युति, उष्णधामा (अन्), उष्णभानु, उष्णरश्मि, उष्णरुचि, उष्णवपु (ष्), उष्णवृष्णि, कमलिनीट् (श्), कर्णपिता (तृ), कर्मसाक्षी (इन्), कान्तिपति, कालकृत, कालिन्दीसू, काश्यपेय, कोकबन्धु, खगवर, खतिलक, खरकर, खरघृणि, खरतेजा (अस्), खरदीप्ति, खरमहा (अस्), खररश्मि, खररुचि, खाध्वनीन, गभस्तिमान् (मतु०) गवांविभु ग्रहपति, ग्रहपुष, ग्रहराज, घर्मकर, घर्मघृणि, घर्मद्युति, घर्मभानु, घर्मरोचि (ष्), ग्रस्ताधीश, चण्डकर, चण्डच्छवि, चण्डभानु, चण्डमहा (अस्), चण्डरश्मि, चित्रभानु चित्ररथ, छायाजानि, छायानाथ, छायापति, छायाभर्ता (तृ), जगच्चक्षु (ष्), जगद्दीप, जगन्नेत्र, जगत्साक्षी (इन्), जलचोर, ज्याति पीथ, तमिस्रहा (अन्), तमानुद, तमोपहा (अन्), तमोरिपु, तमोहन्ता (न्तृ),

१–२६ ३०–५८

तिग्मकर, तिग्मतेजा (अस्), तिग्मद्युति, तिग्मभानु, तिग्ममहा (अस्), तिग्मरश्मि, तिग्मरोचि (पु), तिमिरारि, तीक्ष्णकर, तीक्ष्णद्युति, तीक्ष्णभानु, तीक्ष्णमहा (अस्), तीव्रकर, तीव्रभानु, तेज पति, तेजोनिधि, तेजोराशि, त्रयीतनु, त्रयीतप, त्रयीमूर्ति, त्विषान्निधि, त्विषांपति, त्विषाप्रभु, त्विषामीश, दहनांशु, दिनकर, दिनकर्ता (तृ), दिनदय, दिनपति, दिनप्रणी, दिनबन्धु, दिनभर्ता (तृ), दिनमणि, दिनरत्नम्, दिनवसु, दिनविभु, दिनेश्वर, दिवसकृत् (त्), दिवसेश, दिवाकर, दिवाधीश, दिवानाथ, दिवानेता (तृ), दिवाभर्ता (तृ), दिवामणि, दीधितिमान् (मतु॰), दीप्तमूर्ति, दीप्तरश्मि, दीप्तिपति, दुगध्यक्ष, देवसैन्य, द्युमयीन, द्वादशाङ्क, द्वादशात्मा (अन्), धामधामा (अन्), धामनिधि, धामपति, धाम्नान्निधि, ध्वान्तारति, नभ पान्थ, नभश्चक्षु, नभोमणि, निदाघरुक् (च्), पद्मपाणि, पद्मबन्धु, पद्मिनीश, प्रचण्डांशु, प्रजापति, प्रतिदिवा (अन्), प्रद्यूपाण्डम्, प्रद्योतन, प्रभाकर, प्रभापति, प्रभाप्रभु, प्रभाभर्ता (तृ), बहुरूप, भानुकोश—(पु), मनुपिता (तृ), मन्दपिता (तृ), मयूखवान् (मतु॰), मरीचिमान् (मतु॰), महोनिधि, महोराशि, यमीपिता (तृ॰), यमीपिता (तृ॰), रश्मिमाली (इन्), रसाधार, रुचिधामा (अन्), रुचिभर्ता (तृ), रुचिविभु, लोकबन्धु वासरकृत (त्), वासरप, वासरेश, विकर्त्तन, विभाकर, विभावसु, वियन्मणि, विरोचन, विश्वकर्मा (अन्), वीतिहोत्र, वेदोदय व्योमरत्नम्, शनिपिता (तृ), सञ्ज्ञाजानि, सदागति, सप्तवाह, सप्तसप्ति, सहस्रगु, सहस्राङ्क, सहस्रार्चि, (पु), सहस्रांशु, सुरावृत, हंसक, हरिदश्व, हरिद्वय, हरिद्वाजी (इन्) हिमाराति, (५) अब्जिनीपति, अब्जिनीबन्धु, अमरव्रत, अम्बरध्वज, अम्बरमणि, अम्बुतस्कर, अम्भोजिनीश, अयुगसप्ति, अरुणसूत, अमरव्रत, अशिशिरगु, अशीतकर, अशीतद्युति, अशीत वृष्णि, अहिमकर, अहिमरश्मि, अहिमरुचि, अहिमरोचि (पु), अह्नानायक, उष्णकिरण, उष्णदीधिति उष्णमरीचि, कठोरज्योति (पु), कपिलद्युति, कमलिनीश, किरणमाली (इन्), कौसुम्भवासा (अस्), खरगभस्ति, खरदीधिति, खरमरीचि, खेचरपति, गगनमणि, गभस्तिपाणि, गभस्तिमाली (इन्), गभस्तिहस्त, घर्मकिरण, घर्मदीधिति, घर्ममयूख, चण्डकिरण, छायाधिनाथ, छायाधिपाल, छायानायक, जगत्प्रदीप, जलजिनीश, जलतस्कर, तिग्मकिरण तिग्मदीधिति, तिग्ममरीचि, तिमिरदीप्ति, तिमिररिपु, तीक्ष्णदीधिति, तीक्ष्णमयूख, तीव्रदीधिति, तेजसांपति, तेजसांराशि, दिवानायक, दशशतांशु, दिननायक, दिनाधिनाथ, दिनाधिराज, दिवसकर दिवसपति, दिवसमणि, दिवसविभु, दिवसेश्वर, दिवानायक, द्युनीनापति, नभ केतनम् नलिनीकान्त, नलिनीनाथ, नलिनीप्रिय, नलिनीविभु, निदाघकर निदाघभानु, पङ्कजिनीश, पङ्केरुहेश, पद्मलाञ्छन, पद्मिनीकान्त, पद्मिनीनाथ, पद्मिनीप्राण पद्मिनीश्वर, प्रतापनिधि, प्रभाणा-

पति, भानुवेसर, मयूखमाली (इन्), मरीचिमाली (इन्), महसापति, महसामीश, मृणालिनीश, यमजनक, रात्रिनाशन, लोकबान्धव, लोकलोचन, वासरकर, वासरनाथ, वासरमणि, वासरेश्वर, सरण्यूजानि, सरण्यूभर्ता (तृ), सरोजबन्धु, सरोजिनीश, सहस्रकर, सहस्रपाद, सहस्ररश्मि, सुग्रीवपिता (तृ), हरिद्गन्धर्व, हरिद्वाहन, हिरण्यरेता (अस्), अतुषारकर, अतुहिनधामा (अन्), अतुहिन रश्मि, अतुहिनरुचि, अदितितनय, अदितिनन्दन, अनूरुसारथि, अम्बरमार्गग, अम्बुजबान्धव, अम्बुजिनीपति, अम्भोजिनीप्रेया (अस्), अम्भोजिनीस्वामी (इन्), अरुणकिरण, अरुणसारथि, अशिशिरकर, अशिशिररश्मि, अशीतकिरण, अशीतदीधिति, अशीतमरीचि, अशीतमकेतु, अहिममयूख, कमलबान्धव, कमलिनीनाथ, कमलिनीभर्त्ता (तृ), कुमुद्वती शत्रु, कृतान्तजनक, खररश्मिमाली (इन्), चक्रवाकबन्धु, चक्रवाकसुहृत (द्), जलजिनीबन्धु, तमिस्राभिघाती (इन्), तिमिरविनाश, तिमिरविनाशी (इन्), त्रिजगन्नमस्य, दहन किरण, दशशतकर, दशशतरश्मि, दिवसा धिनाथ, द्युचरनायक, ध्वान्तध्वसविधि, नलिनीदयित, नलिनीवनेश, नलिनीवल्लभ, नलिनीविलासी (इन्), निदाघदीधिति, निदाघांशु माली, पङ्कजबान्धव पङ्कजबोधन, पङ्कजिनीपति, पङ्केरुहबन्धु, पद्मिनीदयित, पद्मिनी नायक, पद्मिनीपालक, पद्मिनीरमण, पद्मिनीवल्लभ, प्रत्यूषडम्बर, महसामधिप, यमुनाजनक, लोकप्रकाशन, वासरनायक, शीतेतररश्मि, सवत्सरपथ, सप्ततुरङ्गम, सराजबान्धव, सरोजिनीपति, सरोजिनीराज, सरोरुहसुहृत् (द्), सहस्रकिरण, सहस्रदीधिति, सहस्रमयूख, सावत्सररथ, (७) अम्बुजिनीवनेश, अशिशिरकिरण, अशिशिरदीधिति, तिग्ममरीचिमाली (इन्), तीक्ष्णमयूखमाली (इन्), दशशतकिरण, दशशतमयूख, धर्मराजजनक, पद्मिनीप्राणपाल, वनजवनपति, वासराणाविधाता (तृ), सप्तलोकैकचक्षु (ष्), (८) अम्भोजवनप्रकाशी (इन्), कमलिनीकाननेश, दशशतकरमूर्ति, राजीवजीवितेश्वर, सहस्रमरीचिमाली (इन्), हरिततुरगनाथ, हारितहरितवाजी (इन्), (९) कमलिनीपरिणायक, पङ्केरुहनिकरबन्धु, भुवनत्रयचूडामणि, सरोजिनीजीवितेश्वर, सरोजिनीप्राणाधिनाथ, सहस्रपत्रवनबन्धु, (१०) अरविन्दकानननायक, हृषीकेशपदीवसापति, (११) सरसीरुहकानननायक (१३) सकललोकचक्रवालचक्रवर्ती (इन्)।

ग्रहणपर्याया.—उपप्लव, उपराग, ग्रह, ग्रहणम्, राहुग्रास, राहुस्पर्श।

ग्रस्तपुष्पवत्प०—उपरक्तो, परिग्रहो।

बिम्बप०—विम्ब, मण्डलम्, शेषपर्यायास्त्वन्यत्र।

परिधिप०—उपसूर्यकम्, उपार्कम्, परिधि, परिवेश, परिवेशनम्, परिवेष, परिवेषक, परीवेश, परीवेशनम्, परीवेष, मण्डलम्।

भर्तृप०—अनुग, अभिक, अभीम, अस्रुप अर्य्य, उपयन्ता (न्तृ), कमिता (तृ) कान्त,

गृही (इन्), जानि, जामाता, (तृ०), धव, नर्मकील, पति, परिणेता (तृ), पाणिग्रही (इन्), पाणिग्राह, प्रणयी (इन), प्राणनाथ, प्राणप, प्राणपाल, प्राणपालक, प्राणसम, प्राणाधिनाथ, प्राणेश, प्राणेश्वर, प्रियः प्रेयान् (ईयसुन्), प्रेष्ठ, भरु, भर्त्ता (तृ), भासु, भोक्ता (क्तृ), यामाता (तृ), रतगुरु, रम, रमण, रुच्य, वर, वरयिता (तृ), विवोढा (ढृ), वोढा (ढृ), सुखोत्सव, सेक्ता (क्तृ), हृदयेश।

क्वचित्तु—

धनिक, धनी (इन्) इति च दृश्यते।

**स्वामिप०—**अधिनाथ, अधिनायक, अधिप, अधिपति, अधिभू, अधिराज, अधीश, अधीश्वर, अर्य, इन, इन्द्र, ईट् (श्), ईश, ईशान, ईशिता (तृ), ईश्वर, नाथ, नायक नेता (तृ), पति, परिवृढ, पाल, पालक प्रभु, भर्ता (तृ), राट् (ज्), राजा (अन्) विभु, सम्पाल, सम्पालक, स्वामी (इन्)।

**एकयोक्त्या भर्तृस्वामिनोः पर्यायाः—**तिलक, दय, दयित, पति, प्रिय, भर्ता, वल्लभ, स्वामी (इन्),

**मणिप०—**मणि (पुं० स्त्री०) रत्नम् (न०), (अजहल्लिङ्गम्), वसु (न०)।

**रविपत्नीभेदाः—**(१) सञ्ज्ञा, (२) छाया, (३) राज्ञी, (४) पृश्नि, (५) वडवा चेत्येते रविपत्नीभेदाः स्युः।

**सञ्ज्ञापर्यायाः—**कालिन्दीप्रसू, त्रसरेणु, त्वाष्ट्री, द्युमयी, प्रभा, प्रभावप्रसू, मनुप्रसू महावीर्या, यमजननी, यमप्रसू, यमीमाता (तृ), योग्या, वैवस्वतजननी, सञ्ज्ञा, सरण्यु, सरण्यू, सुवर्चला, सूर्या, स्वरेणु, (सुरेणु), स्वाति।

**छायाप०—**छाया, तपती, तपतीप्रसू, प्रतिरूपिणी, भूमयी, भूमिमयी, मन्दजननी, मन्दप्रसू, वरी, विष्टिप्रसू, सञ्ज्ञाप्रतिकृति, सवर्णा, सावर्णिप्रसू।

**राज्ञीप०—**राज्ञी, रेवन्तजननी, रेवन्तप्रसू, रेवन्तमाता (तृ), रेवन्ताम्बा।

**पृश्निप०—**पृश्नि, सावित्रीजननी, सावित्रीप्रसू, सावित्रीमाता (तृ)।

**वडवापर्यायाः—**अर्वती, अश्वा, दस्रजननी, नासत्यप्रसू, दस्रप्रसू, वडवा, वामी।

**रविपुत्रनामानि—**(१) कर्ण (२) नासत्यौ, (३) यम, (४) रेवन्त, (५) वरुण (६) वैवस्वत (सप्तमो मनुः), (७) शनि, (८) सावर्णि (अष्टमो मनुः) (९) सुग्रीवः (वानरेन्द्रः), वैते रविपुत्राः सन्ति।

**कर्णपर्यायाः—**अङ्गराट् (ज्) अर्कतनय, चम्पाधिप, राधातनय, सूततनय।

**रेवन्तप०—**अर्करेतोज, प्लवग, राज्ञीतनय, रेवन्त, हयवाहन।

**सुग्रीवप०—**आदित्यसूनु, तारापति, रामसख, रुमाप्रिय, वानरेन्द्र, सुग्रीव, हनुमन्मित्रम्।

**रविपुत्रीनामानि—**(१) कालिन्दी, (२) विद्युत् (त्), (३) सावित्री, चैता रविकन्या सन्ति।

**कालिन्दीपर्यायाः—**अर्कात्मजा, कलिन्दकन्या, कलिन्दतनया, कलिन्दपुत्री, कालिन्दी, तपती, तपनतनूजा, तापी, यमभगिनी, यमस्वसा (सृ), यमानुजा, यमी, यमुना, शमनस्वसा (सृ),

सूर्यजा, सूर्यतनया।

सावित्रीप०—पृश्निपुत्री, विधातृपत्नी, सावित्री।

रविसारथिप०—अनूरु, अरुण, आदमन, काश्यपि, गरुडाग्रज, जटायुस्, ताक्ष्य, महासारथि, विनतासूनु, विपुलस्कन्ध, वैनतेय, सूरसूत।

सारथिप०—क्षत्ता (त्तृ), दक्षिण (णे) स्थ, नियन्ता (न्तृ) प्राजिता (तृ) यन्ता (न्तृ), रथकुटुम्बिक, रथकुटुम्बी (इन्), प्रवे (वे) ता (तृ), सव्येष्ठ, सव्येष्ठा (ष्ठृ), सारथि, सूत,।

दिनप०—अह (न्), घस्र, दिनम्, दिवस, वासर, शेषपर्यायास्तु कालवर्गे द्रष्टव्याः।

सूर्यलोक—भास्करभुवनम, लोकबन्धुलोक, सूर्यलोक, सौरभुवनम्।

किरण—अंशु, अभीशु अभीषु, अर्चि (ष्), उस्रधृति, उस्र, कर, किरण, गभस्ति—स्त्री, गो (गा), घृणि, त्विषि—षी, दीधिति (स्त्री०), द्युत् (त्), धाम (अन्) घृणि, नमिनिधि, पद्मपाद, पृश्नि, प्रग्रह, भानु, भा (स्), मयूख मरीचि—ची (स्त्री० पु०), रश्मि, विराध, वृष्णि, सान्ध्य, हृति।

प्रभा (दीप्ति)प०—आभा, ओज (अस्), केतु छवि त्विट् (ष्) त्विषा दीप्ति, द्युति—ती, *प्रभा भा भास, भास, रुच् (च्), रुचि, रोचि* (स) (न०) वसु विभा, शोचि (ष्) (न०)।

प्रकाशपर्याया—आतप, आलोक, इद्धम् उद्योत, उद्द्योत धम ज्योति (ष्), तेज (स्), द्योत, प्रकाश, मह (अस्) वर्च (अस्) शुष्मम्, सह (अस्)।

उष्णप०—उष्णम् घर्म, निदाघ।

अत्युष्णप०—खरम् चण्ड, तिग्मम्, तीक्ष्णम् तीव्रम्, पटु, रौद्रम्।

कमलप०—अग्निपुष्पम्, अब्जम्, अम्बुजन्म (अन्), अम्बुपद्मम्, अम्बुरुट् (ह्), अम्बुरुहम्, अम्भोजम्, अम्भोरुहम्, अरविन्दम्, कजम्, कञ्जम्, कमलम्, कुटपम्, कुशेशयम्, जलजम्, जलजन्म (अन्), जलरुट् (ह्), जलरुहम्, तामरसम्, दारम्, दोलकम्, नलम्, नलिनम्, नालीकम्, निर्लेपम्, पङ्कजम्, पङ्कजन्म, (अन्), पङ्करुट् (ह्), पङ्करुहम्, पङ्केरुहम्, पद्मम्, पाथोजम् पाथोरुहम्, पुष्करम्, बिसकुसुमम्, बिसनाभिजम्, बिसप्रसूनम्, महोत्पलम्, राजीवम्, वारिजम्, वारिरुहम्, वार्जम्, बिसकुसुमम्, बिसनाभिजम्, बिसप्रसूनम्, शतपत्रम्, श्री, सरसिजम्, सरसीजम्, सरसीरुहम्, सरोजम्, सरोजन्म (अन्), सरोरुट् (ह्), सरोरुहम्, सलिलजम्, सहस्रपत्रम्, सारसम्, सुजलम्।

कमलिनीपर्यायाः—अब्जिनी, अम्बुजिनी, अम्भोजिनी, कमलिनी, जलजिनी, नलिनिनी, नलिनी, नालीकिनी, पङ्कजिनी पद्मिनी, पुटकिनी, मृणालिनी, बिसिनी, सरोजिनी।

प्रियपर्याया—अभीप्सितम्, अभीष्टम्, दय, दयित, प्रिय, वल्लभ, हृद्यम्।

रवेः पारिपार्श्विकनामानि—माठर, पिङ्गल, दण्ड, राजश्रोषी, स्तद्वारिकौ, कल्माषपक्षिणौ, जातृकार, कुनापकौ, पिङ्गगजौ, दण्डिपुरुषौ, किशोरकौ।

सौरतन्त्रे तु—

'तत्र दात्रो वामपार्श्वे दण्डाख्यो दण्डनायकः।
वह्निस्तु दक्षिणे पार्श्वे पिङ्गलो वामतश्च सः॥
यमोऽपि दक्षिणे पार्श्वे भवेन्माठरसंज्ञया।' इति।

**रवेर्मातृपर्यायाः**—अदिति —ती, अमरमाता (तृ), ऋ, ऋनामा, कश्यपपत्नी, कश्यपभीरु, काश्यपी, त्रिदशेन्द्रप्रसू, दक्षप्रजापतिकन्या, देवजननी, देवप्रसू, देवमाता (तृ), देवाम्बिका, मित्रजननी, सुरजननी, सुरप्रसू, सुरसवित्री, सुराम्बा ।

**रवे. पितृपर्याया**—कर्दमकन्याकुमार, कलाङ्गज, कलागर्भज, कलापुत्र, कलामव, कलाभू, कश्यप, काश्यप, मरीचिज, मरीचिपुत्र, मारीच, सुरजनक, सुरतात, सूर्यपिता ।

**कश्यपपत्नीभेदा**—(१) अदिति, (२) दिति, (३) दनु, (४) काला, (५) दनायुषा, (६) सिंहिका, (७) मुनि, (८) क्रोधा, (९) वरिष्ठा, (१०) सुरभि, (११) वशा, (१२) कद्रू, (१३) विनता, चेत्येतास्त्रयोदश कश्यपस्य पत्न्य सन्ति ।

**सूर्यद्वादशभेदा**—(१) विष्णु, (२) यम, (३) विवस्वान् (मतु०), (४) अंशुमान् (मतु०), (५) पर्जन्य, (६) वरुण, (७) इन्द्र, (८) धाता (तृ), (९) मित्र, (१०) पूषा (अन्), (११) त्वष्टा (ष्टृ), (१२) भगश्चेते चैत्रादितो रवेर्द्वादशभेदा स्यु ।

**चक्रवाकपर्याया**—कान्त, कामी (इन्), कामुक, कोक, गोनर्द ?चक्र, चक्रवाक, चक्राह्वयाह्वय, द्वन्द्वचर, द्वन्द्वचारी (इन), भूरिप्रेमा (अन्), रथाङ्ग, रथाङ्गाह्व, रथाङ्गाह्वयनायक, रात्रिवियोगी (इन्), रात्रिविश्लेषगामी (इन्), राविष, सहाय ।

**बन्धुपर्याया**—ज्ञाति, बन्धु, बान्धव, सगोत्र, स्व, स्वजन ।

**मित्रपर्याया**—मित्रम् (न०) (अजहल्लिङ्गम्), वयस्य, सखा (खि), सवयाः (अस्), सहचर, सहाय, साप्तपदीन, सुहृत् (द्), स्निग्ध ।

**आकाशप०**—आकाश, खम्, गगनम्, नभ (अस्), शेषस्त्वन्यत्र ।

**नेत्रप०**—अक्षि (इन्), चक्षु (ष्), नयनम्, नेत्रम्, लोचनम् शेषस्त्वन्यत्र ।

**चोरप०**—एकागारिक, चोर, चोरड चौर, तस्कर, दस्यु, पटचोर, परास्कन्दी (इन्), परिमोषी (इन्), पाटच्चर, पारिपन्थिक, प्रतिरोधक, मलिम्लुच, रात्रिचर ।

**वनप०**—काननम्, गहनम्, वनम्, विपिनम्, शेषस्त्वन्यत्र ।

**अस्तप०**—अस्त, अस्तमनम्, लुप्त, लोप, शेषस्त्वन्यत्र ।

**उदयप०**—असूर्यग, उदय, दृश्यमान, शेषस्त्वन्यत्र ।

अत्र विशेष । मदीयहोडाचक्रे—

'वैशाखादिषु मासेषु लग्नेष्वश्वादिषु क्रमात् ।
उदेत्यर्क स्वोदयाङ्गात्सप्तमेऽङ्केऽस्तमेति स ॥

इति हो० च० १।३४।

अस्य व्याख्या—

वैशाखादिषु द्वादशमासेषु क्रमात् मेषादिषु द्वादश लग्नेषु सूर्य उदेति । तथा स्वोदयलग्नात्सप्तमे लग्ने स (सूर्य) अस्तमेति अस्त प्राप्नोतीत्यर्थ ।

**वस्त्रप०**—अंशुकम्, अम्बरम्, आच्छाद, आच्छादनम्, कर्पट, कशिपु, चीरम्, चीवरम्, चेलम्, छादनम्, द्विचयम्, निवसनम्, पटम्, प्रोतम्, लक्तक, वसनम्, वसितम्, वस्त्रम्, वासम्,

वास (अस्) (न०), शाटक, सिच् (च्), सिचय ।

कुसुम्भप०—कमलोत्तरम्, कुसुम्भम्, पद्मोत्तरम्, महारजतम्, महारजनम्, लट्वा (स्त्री०), वह्निशिखम् ।

हरित्प०—पालाश, हरित्, शेषस्तु बुधे ।

अश्वप०—अमृतसोदर, अरुट् (ष्), अर्वा (अन्), अव्यय, अश्व, आशु, उच्चैःश्रवा (अस्), एकशफ, एतग्व, एतश, किण्नी (इन्) किन्धी (इन्), कुण्डी (इन्), कुटर, कुदर, कुरट, केसरी (इन्), क्रमण, क्रान्त, गन्धर्व, गूढभोजन, ग्रहभोजन, घोट, घोटक, चामरी (इन्), ज्वन, जवी (इन्), जितव, तार्क्ष्य, तुरग, तुरङ्ग, तुरङ्गम, दधिक्रा (अन्), दधिक्रावा (अन्), दीर्घग्रह, द्वीप, धाराट, नर, पतङ्ग, परुल, पाकल, पालक, पीति, पीती (इन्), पीथि, पैद्व (द्व), प्रकीर्ण, प्रकीर्णक, प्रोथी (इन्), बभ्रु, मरुद्रथ, मारुत्व, मापाशन, मापाशी (इन्), मुद्गभुक् (ज्), मुद्गभोजी (इन्), मुद्गाशन, युयु, राजस्कन्ध, लक्ष्मीपुत्र, ललाम, वह्नि, वाजी (इन्), वातस्कन्ध, वातायन, वाह, वासुदेव, वाट् (ह्), वाह वाहनश्रेष्ठ, विमानक, वीति, वीती (इन्), व्रती (इन्), शालिहोत्र, शालिहोत्री (इन्), श्येन, श्येनास, श्रीपुत्र, श्रीभ्राता (तृ), सप्ति, सविक्रम, सिंहविक्रम, सुपर्ण, सैन्धव, स्यौर्य्य, हंस, हंसास्य, हय, हरि, हरिकान्त हेषी (इन्), ह्यर्य ।

चन्द्रपर्यायाः—(१) ऊ, ग्लौ, च, दु, भेट् (श्), म, मा (स्), (२) अंशु, अज, अब्ज, इन्दु, ऋक्षेट् (श्), कलेट् (श्), कान्त, कुष्ट, क्लेदु, गौर, चन्द, चन्द्र, चूडा?, जर्ण, तप, तपा (अस्), तुङ्गी (इन्) ? तृपत् (त्), तृपद् (द्), तृपि, नेमि, पीतु, पैद्व, बुध, भग, भप, भार्य्य, भेन, भेश, मास, राजा (अन्), राशीट् (श्), विधु, श्याप्व, शशी (इन्), सिप्र, सृप्र, सोम, स्नेहू, स्पन्द ?, स्यन्द, हरि, (३) अनिज, अब्जारि, अमिति, अमृत, अम्बुज, उडुप, उपाय्य, उपेश, ऋक्षप, ऋक्षेश, एकभू, एणभृत् (त्), एणाङ्क, कलाप, कलाभृत् (त्), कलावान् (मतु०), क्लेद, क्षपाकृत् (त्), क्षपेश, खसिन्धु, गौरगु, गौरभा (अस्), गौरांशु, चन्दिर, चन्द्रमा (अस्), चिक्लिद, छायाङ्क, छायाभृत् (त्), जडांशु, जडोस्र, जयन्त, जरण, ज्योत्स्नेश, तपस, तमीश, तमोनुत् (द्), तापस, तारेश, तुङ्गीश, त्रियामेट् (श्), दशाश्व, द्विजेन्द्र, द्विजेश, धिष्ण्यप, धिष्ण्येश, ध्वान्तारि, निट्पति, निशाकृत् (त्), निशेश, पक्षज, परिच्छ्द, परिज्मा (अन्), परिज्वा (अन), परिज्ञ, पर्वधि, पर्वरि, भधव, भनाथ, भपति, भभर्त्ता (तृ), भविभु, भुवन्यु, भूपति, मृगाङ्क, यजत, यज्ञराट् (ज्), यामिनीट् (श्), युवन, रजनीट् (श्), रात्रिप, रात्रीश, लक्ष्मण, विकुश, विक्लिद, विश्वप्सा (आकारान्त), शपित, शयत, शशभृत् (त्), शशाङ्क, शीतगु, शीतभा ?, शीतभा (अस्), शीतल, शीतांशु, शुभांशु, शुभ्रगु, शुभ्रभा (अस्), शुभ्रांशु, श्वेतगु, श्वेतवाट् (ह्),

श्वेतांशु, श्वेताश्व, षोडशी (इन्), सितगु, सितभा (अस्), सितरुक् (च्), सितांशु, सिन्धुज, सिन्धूत्थ, सुधाङ्ग, सुधांशु, सुधासू, सुधास्रुत् (त्), स्तृपति ?, हिमगु, हिम त्विट् (ष्), हिमभा (अस्), हिमस्रुत् (त्), हिमांशु, ह्लादांशु, (४) अत्रिजनि, अत्रिजनु (ष्), अत्रिजन्मा (अन्), अत्रिदृग्ज, अत्रि भव, अत्रिसुत, अनुष्णगु, अनुष्णभा (अस्), अमृतसू, अमृताङ्ग, इन्द्रभिध, उडुनाथ, उडु पति, उडुप्रभु, उडुराज, उपाधिप, उपापति, उपाविभु, उपेश्वर, ऋक्षनेमि, ऋक्षभर्ता (तृ), ऋक्षाधिप, एणलक्ष्मा (अन्), ओष-धीश, कर्केश्वर, कलाधिभू, कलानाथ, कलानिधि, कुमुदेश, क्षणदेश, क्षपाकर, क्षपानाथ, क्षपापति, क्षपाप्रभु, क्षपा-भर्त्ता (तृ), खचमस, गौरद्युति, गौररश्मि, ग्रहनेमि, ग्रहपति, चित्राटीर, छायापिदमु, (प्सु), जडच्छवि, जडद्युति, जडरश्मि, जडरोचि, (ष्), जडाभीशु, जडोद्भव, जुहराण, जुहु-वाण, ज्योत्स्नाकर, तपोराज, तमीपति, तमीभर्ता (तृ), तमोनुद तमोहर, तारकेश, ताराजानि ताराधिप, ताराधीश, तारानाथ, तारानेता (तृ), तारापति तारापीड, तारा स्वामी (इन्), तिथिप्रणी, तिमिरारि, तुङ्गी पति, तुषारगु तुषारत्विट् (ष्), तुषारभा, (अस्), तुषारांशु, तुहिनगु, तुहिनरुच (च्), तुहिनांशु, दर्शविपत(द), दशवाजी (इन्) दशहय, दोषाकर दोषाधीश, दोषानाथ, द्विजपति, द्विजराज, द्विजविभु, धवलगु,
१–२६

धवलभा (अस), धवलरुक् (च), धवलांशु, नक्षत्रप नक्षत्रेश, नभोदीप, निशाकर, निशा-केतु, निशाचर, निशानाथ, निशानेता (तृ), निशापति, निशामणि, निशारत्नम्, नीहारगु, नीहारांशु, पक्षजन्मा (अन्), पक्ष-धर, पर्वविपत् (द), पाण्डरांशु पीयूषगु, पीयूषत्विट् (ष) पीयूषसू, पीयूषांशु, पीयू षोस्र, पुनर्युवा (अन्), प्रालेयभा, (अस्), प्रालेयांशु, भदयित, भनायक, भरमण, भाधि-नाथ, मासहोत्थ, मिहिकांशु, मृगधर, मृग पिप्लु (दृमु), मृगलक्ष्मा (अन्), यजतनु, यज्वपति॰, यथासुख, यामिनीश, रजनिप, रजनीश, राकानाथ, राकापति, राकेश्वर, राजराज, रात्रिनाथ, रात्रिनेता (तृ), रात्रि-पति, रात्रिमणि, रात्रीनाथ, रोहिणीश, लोकम्पृण, वलक्षगु वार्मण्डल, विभावसु, विरोचन, शताक्षीश, शर्वरीश, शशधर, शशलक्ष्मा (अन्), शशाङ्कभृत (त), शिशिरगु, शिशिरांशु, शीतकर, शीतकेतु, शीतच्छवि, शीतज्योति (ष्), शीतदीप्ति, शीतद्युति, शीतपाद, शीतभानु, शीतमहा (अस्), शीतरश्मि, शीतरुचि, शीतरोचि, (ष), शीतलगु, शीतलभा, (अस्), शीत-लांशु, शुचिरोचि (ष्), शुभ्रकर, शुभ्र भानु, शुभ्राम्बर, श्यामाकर, श्यामानाथ, श्वेतकेतु, श्वेतद्युति, श्वेतधामा (अन्), श्वे-तभानु, श्वेतरुचि, श्वेतरोचि (ष्), श्वेत-वाजी (इन), श्वेनाशुक, समुद्रज, सागरभू, सितकर, सितदीप्ति, सितद्युति, सितरश्मि,
३०–५८

सितरुचि, सितवृष्णि, सितहय, सिन्धुजनि, सिन्धुजन्मा (अन्), सिन्धुमित्रम्, सिन्धुसुत, सिन्धोर्मित्रम, सिप्रग्रह, सुधाकर, सुधाघृणि, सुधादीप्ति, सुधाधार, सुधानिधि, सुधापिण्ड, सुधाभानु, सुधारश्मि, सुधावास, सुधांशुक, सुधासिन्धु, सुधामूर्ति, हरिणभृत (त्), हरिणाङ्क, हिमकर, हिमदीप्ति, हिमद्युति, हिम धामा (अन्), हिमभानु, हिममहा (अस), हिमरश्मि, हिमरुचि, हिमरोचि (प्), (५) अक्षरकर, अग्रजाधिप, अघमधामा (अन्), अत्रिनेत्रज, अत्रिनेत्रभू, अशीतजनि, अनिदाघांशु, अनुष्णकर, अनुष्णरश्मि, अमृतकर, अमृततेजा (अस), अमृतदीप्ति, अमृतद्युति, अमृतधामा (अन्), अमृतपिण्ड, अमृतमूर्ति, अमृतरश्मि, अमृतरोचि (प), अमृताभीषु, अरीद्रकेतु, अवश्यायगु, उडुनायक, उषाधिपति, ऋक्षरमण, ऋक्षाधिपति, एणकलङ्क, एणतिलक, ओषधीगर्भ, ओषधीपति, ओषधीश्वर, कमलरिपु, कलाधिनाथ, कलानायक, कलानान्निधि कुमुदबन्धु, कुमुदिनीश, कुमुद्वतीश, कुरङ्गलक्ष्मा (अन्), कृत्तिकाभव कैरवबन्धु, कौमुदीपति, क्षणदाकर, क्षणदाधव, क्षणदाधिप, क्षणदाधिभू, क्षणदापति, क्षपाधिपति क्षपानायक, चकोरबन्धु, चकोरसुहृत(द), छायालक्षण, छायालाञ्छन जडमयूख, जलनिधिभू जलमण्डल, तमिस्राकर, तमिस्राधिप, तमीनायक, तारकराज, तारकानाथ, ताराधिराज, तारानायक, तारारमण, तिथिप्रणेता (तृ), तुषारदीप्ति,

१–२६

तुषारमूर्ति, तुषाररश्मि, तुषारशोचि, (प्), तुहिनकर, तुहिनद्युति, तुहिनरश्मि, तुहिनरोचि, (प), तुहिनाकर, तुहिनांशुक, त्रियामेश्वर, दक्षजाजानि, दक्षजापति, दक्षसुतेश, दाक्षायणीश, द्विजन्मपति, द्विजाधिराज, धवलकर, धवलच्छवि, धवलद्युति, धवलवृष्णि, धिष्ण्यरमण, नक्षत्रनाथ, नक्षत्रनेमि, नक्षत्रपति, नक्षत्रेश्वर, नभश्चमस, नलिनीरिपु, नलिनीशत्रु, नलिन्याशत्रु, निशाधिपति, निशानायक, निशावल्लभ, निशीथिनीश, नीहारकर, नीहारदीप्ति, नीहाररश्मि, पद्मासहोत्थ, पद्मिनीशत्रु, पीयूषकर, पीयूषघन, पीयूषद्युति, पीयूषपिण्ड, पीयूषभानु, पीयूषमहा (अस), पीयूषमूर्ति, पीयूषरश्मिः, पीयूषरुचि, पीयूषवपु (प), पीयूषाभीशु, प्रालेयभानु, प्रालेयरश्मि, भगणनाथ, मिहिकाशोचि (प), मृगलाञ्छन, मृणालिनीद्विट् (प्), यज्वानापति, यामवतीश, यामिनीपति, यामिनीश्वर, रजनिकर, रजनीकर, रजनीकान्त, रजनीनाथ, रजनीपति, रजनीप्रेया (अस्), राकाधीश्वर, रोहिणिमित्रम्, रोहिणीकान्त, रोहिणीजानि, रोहिणीनाथ, रोहिणीपति, रोहिणीप्रिय, रोहिणीप्रेया (अस), रोहिणीविभु, लक्ष्मीसहज, लक्ष्मीसहोत्थ, लोकाप्यायक, वलक्षकर, वलक्षभानु, वलक्षरश्मि, विभावरीश, शशकलङ्क, शशलक्षण, शशलाञ्छन, शिशिरकर, शिशिरतनु, शीतकिरण, शीतदीधिति, शीतमयूख, शीतमरीचि, शीतलकर,

३०–५८

शीतलभानु, शीतलाभीषु, शीतांशुमाली (इन्), श्वेतकिरण, श्वेतवाहन, समुद्राङ्गज, सरोरुहारि, सर्वौपधीश, सागरात्मज, सितकिरण सितदीधिति, सिन्धुतनय, सिन्धुनन्दन, सुधाकिरण, सुधादीधिति, सुधामयूख, सुधामरीचि, स्नेहरेकभू, हरिणलक्ष्मा (अन्), हिमकिरण, हिमगभस्ति, हिमतितिरुत (त), हिमदीधिति, हिमांशुमाली (इन्), (६) अचण्डमरीचि, अनिदाघधामा (अन्) अनुष्णदीधिति, अब्धिनवनीतम्, अमृतकिरण, अमृतदीधिति, अमृतनिधान, अमृतशरीर, अवश्यायकर, आकाशचमस, इलादेवराज, उपाधिनायक, ऋक्षाणामधिप, ओषधीनाथ, ओषधीनायक, कमलद्वाम्व, कल्पारवृढ, कुमुदबान्धव, कुमुदात्मबन्धु, कुमुदानन्दन, कुमुदिनीपति, कुमुदैकबन्धु, कुमुद्वतीबन्धु, कुमुद्वतीसुहृद् (द्), कुरङ्गलाञ्छन, कुवलयनाथ, कृत्तिकासम्भव, कैरवबन्धु, कैरवविकासी (इन्), कैरविणीपति, कैरविणीश्वर क्षणदाधिनाथ, क्षणदानायक, क्षपापरिवृढ, क्षीरोदनन्दन, छायाभृद्धर, जलधसमुत्थ, तारकानायक, तिथिप्रवर्तक, तुषारकिरण, तुषारदीधिति, तुहिनकिरण, तुहिनमयूख, तुहिनमरीचि, त्रिशामारमण, दाक्षायणीकान्त, दाक्षायणीजानि, दाक्षायणीपति, धवलकिरण, धवलदीधिति, नयनाभिराम, निशापरिवृढ, निशीथिनीनाथ निशीथिनीपति, पीयूषकिरण, पीयूषमयूख, प्राचीनतिलक, प्रालेयकिरण प्रालेयमरीचि, मिहिकामयूख, मिहिकामरीचि, यामवतीपति, यामिनीनायक, रजनीनायक, रजनीरमण, रोहिणीरमण, रोहिणीवल्लभ, विभावरीभर्ता (तृ), विभावरीविभु, शम्भुशिरोमणि, शम्भुशिरोमणि, शर्वरीनायक, शिशिरकिरण, शिशिरमयूख, शीतलदीधिति, श्रविष्ठारमण, श्वेतपक्षबन्धु, सितकरवपु (पु), हरचूडामणि, हरिणलक्षण, हरिणलाञ्छन, हिमरश्मिमाली (इन्), (७) अत्रिनेत्रप्रसूत, अनिदाघदीधिति, अब्धिनवनीतकम्, ओषधीनामधीश, कुमुदवनबन्धु, कुमुदाकरबन्धु, कुमुदानन्दकर, कुमुदिनीदयित, कुमुदिनीरमण, कैरववनबन्धु कैरवाणां विकासी (इन्), कैरविणीवनेश, क्षणदाधिनायक, चण्डघृणोतरांशु, चण्डीशचूडामणि, चण्डीशचूडारत्नम्, जलनिधितनय, तारकाविनोदक त्रिनेत्रचूडामणि, दाक्षायणीरमण, द्विजराजखेचर, नक्षत्रमण्डलक, नभोमण्डलदीप, प्रौढपाथोधिपुत्र, यामवतीनायक, शीतमयूखमाली (इन्), समुद्रनवनीतम्, सारङ्गकलङ्कभृत् (८) अत्रिनयनप्रभव, कुमुदकाननबन्धु, कुमुदगहनबन्धु, कुमुदवनसुबन्धु, कुमुदाकरबान्धव, कुमुदिनीप्राणेश्वर, कुमुदिनीश्वूरर, कुमुदिनीवनभर्ता (तृ), कैरवबनबान्धव, त्रिनयनचूडारत्नम् दाक्षायणीपरिवृढ, द्रुहिणपादजतक, (९) कुमुदकाननबान्धव कुमुदषण्डबोधद, कुमुदिन्युनायक (१०) कुमुदिनीकानननायक, कैरवकाननाधिनायक अत्रिनयनसमुत्थज्योति (षु), (११) कामिनीवदनसौरभचौर, विभावरीविलासदन्तपत्र, कैरविणीवनिताजनभर्ता (तृ),

पीतचकोरमरीचिचय, (१२) धूर्जटिजटामण्डल-चूडामणि ।

रात्रिपर्याया—क्षणदा क्षपा, तमी, त्रियामा, दोषा, निशा, निशीथिनी, यामवती, यामिनी, रजनी, रात्रि विभावरी, शर्वरी। शेषपर्यायास्तु कालवर्गे द्रष्टव्या ।

दर्शरात्रिप०—तमसी तमिस्रा, दर्शरात्रि ।

पूर्णिमारात्रिप०—ज्योतिष्मती, ज्योत्स्नी, पूर्णिमा रात्रि ।

चन्द्रप्रभाप०—कौमुदी, चन्द्रगोलिका, चन्द्रप्रभा, चन्द्रातप, चन्द्रिका, चन्द्रिमा, चान्द्री, चार्वी, ज्योत्स्ना ।

नक्षत्रप०—उडु, ऋक्षम, तारका, तारा, धिष्ण्यम्, नक्षत्रम्, भम्। शेषपस्तु पञ्चाङ्गवर्गे।

चिह्नप०—अङ्क, अभिज्ञानम, कलङ्क, चिह्नम्, लक्षणम्, लक्ष्म (अन्), लञ्छनम्, लाञ्छनम् लिङ्गम् ।

मृगप०—अजिनयोनि, एण, कुरङ्ग, मृग, वातायु, शश, सारङ्ग, हरिण, शेषपस्त्वन्यत्र।

हिमपर्याया—अवश्याय, आकाशवाष्प इन्द्राग्नि धूम खबाष्पः, तुषार, तुहिनम्, नीहार, प्रालेयम्, महिका, मिहिका, रजनीजलम् हिमम् ।

हिमसहतिप०—हिमसहति, हिमानी।

शीतप०—जड, तुषार, शिशिर, शीत, शीतल, सुशीम, सुषिम, सुषीम, हिम ।

शुक्लवर्णप०—अच्छ, अमल, अर्जुन, अवदात, अवलक्ष, उज्ज्वल, गौर, धवल, पाण्डर, पाण्डु, पाण्डुर, पुण्ड्र (ण्ड्)क, वदात, वलक्ष, विशद, शुक्र, शुक्ल, शुचि, शुभ्र, शुभ्रम् (अ०), श्येत, श्वेत, सित, हरिण ।



कमलकुमुदादीना सामान्यप०—उत्पलम् कुवम् कुवलम्, कुवलयम् कुवेलम्। 'कुवलय' चन्द्र-विकासि पद्मम् सूर्यविकासि इत्यनयोर्भेदो-ज्ञेय ।

सितोत्पलप०—कुमुत् (द), कुमुद्वती, कैरवम्, गर्दभाह्वयम्।

कुमुदलताप०—कुमुदिनी, कुमुद्वती, कैरविणी।

अमृतप०—अमृतम्, पीयूषम्, पेयूषम्, सुधा, शेषस्तु देववर्गे।

चकोरप०—अङ्गारभक्ष, उत्पिब कौमुदीजीवन, कौमुदीजीवी (इन्), चकोर, चकोरक, चन्द्रिकापायी (इन्), चन्द्रिकाप्रिय, चन्द्रिकाशन, चलच्चञ्चु, जीवजीव, जीवजीवक, जीवजीव, ज्योत्स्नाप्रिय, रक्ताक्ष, विषदर्शन-मृत्युक, विषमृत्यु, विषमृत्युसूचक ।

चन्द्रपितृप०—अब्धि, समुद्र, सागर, सिन्धु, शेषस्त्वन्यत्र (देववर्गे) ।

चन्द्रपितृप०—अत्रि (सप्तर्षिविशेष), अत्री (इन), अनसूयापति कर्दमकन्यापति, अत्रिदृग, अत्रिनेत्र, अत्रिलोचन ।

चन्द्रभगिनीप०—इन्दिरा, रमा, लक्ष्मी शेषस्तु देवे।

चन्द्रपुत्रप०—चान्द्रि, बुध, विद, वैधव, सौम्य, शेषस्तु बुधपर्याये।

चन्द्रपुरीप०—चन्द्रपुरी, विभा, सोमपुरी, एषोदिच्या वर्तते।

चन्द्रकलाप०—(१) अमृता, (२) मानदा,

(३) विश्वा, (४) तुष्टि, (५) पुष्टि, (६) रति, (७) धृति, (८) शशिनी, (९) चन्द्रिका, (१०) कान्ति (११) ज्योत्स्ना, (१२) श्री, (१३) प्रीति, (१४) अङ्गदा, (१५) पूर्णा, (१६) पूर्णामृता, चैताश्चन्द्रस्य षोडशकला सन्ति।

क्षीणचन्द्रपर्याया —अपचिततनु, उपचयपरिच्युत, कलुषित कुज्योति (प्), कृश, क्षयकाय, क्षयरोचि (प्), क्षयी (इन्), क्षीण, क्षीणकर, क्षीणकल, क्षीणकान्ति, क्षीणतनु गलित, दीप्तिरहित, दुर्बल, नष्ट, प्रक्षीण, मूढ, विकल, विगलित विनष्ट वृद्धिकला विहीन।

दुर्विधुप०—दुश्चन्द्र, दुर्विधु, (नीचादिक्षीणमारकादिभागग)।

पूर्णचन्द्रप०—अखण्डमण्डल, अखण्डितवपु (प), अधिकल, अन्यूनकल, आपूर्णमण्डलकला कलित, कलाकलापाधिकृताधिशाली, कलाभिभूषित, कलाभिरभिभूषित गोक्षीरशङ्खधवल, 'दिनम्मन्या,' 'पूर्णेन्दुस्तु दिनम्मन्या' इति वैजयन्ती। परिपूरिताङ्ग, पर्याप्तचन्द्र, पूत द्युति, पूर्ण, पूर्णकल, बिभ्रद्रश्मिकरालपूर्ण परिधि वर्धमानतनु वर्द्धिष्णु, विपुलरश्मिशिखाकलाप, विवर्द्धमान, शङ्खधवल सवर्द्धमान, सकलाभिराममूर्ति, सुधामृणालापमबिम्ब शोभित।

मङ्गलपर्याया —(१) ह, (२) असृक् (ज), अस्र, आर, कुज, कुभू, क्रूर क्षमाज क्ष्मोत्थ, चर, जिह्म, नत पापी (इन) भुग्न भूज भूभू, भौम, रक्त वक्र, (३) अङ्गार, अराल, अरुण, आविद्ध, इराज, इलाज इलाभू, इलोत्थ, उर्वीज उर्वीभू, ऊर्मिमान् (मतु०), ऐरेय, ऐलेय, और्वेय कर्पट, कुञ्चित, कुजनि, कुजन्मा (अन्), कुटिल, कुपुत्र कुभव कुसुत कुसूनु, क्रूरकृत् (त्), क्रूरदृक् (श्), क्रूराक्ष, क्षमाज, क्षमाभू, क्षितिज, क्षितिभू क्षैतेय, क्षोणिज, क्षोणीभू, क्ष्माजनि, क्ष्माजन्मा (अन्), क्ष्मापत्यम्, क्ष्मा पुत्र, खोल्मुक गोत्राज, गोत्राभू, गोत्रय, घातुक धराज, धराभू, नवार्चि (प्), नृशंस, पृथ्वीज, पृथ्वीभू, प्रव्याल, बलाज, भूजनि, भूपुत्र, भूभव, भूमिज, भूमिभू, भूसुत, भूसूनु, मङ्गल, महिज, महीज, महीभू, माहेय, रक्ताङ्ग, रसाज, रसाभू रुधिर, रोहित, लोहित, वृजिन, वैल्लिक शोणित, अङ्गारक, अचलाज, अनन्ताभू, अवनिज, अवनीज, अवनीभू, आषाढाभू, असृकतनु असृकर, असवासा (अस्), आव नेय, आषाढाभू, इलाजन्मा (अन), इलाभव, इलासुत उर्वीपुत्र, उर्वीभव, उर्वीसूनु, ऋणान्तक, काश्यपीज, काश्यप्युत्थ, काश्यपेय, कुकुमार कुतनय, कुदायाद, कुदारक, कुनन्दन, क्रूरनेत्र, क्षमापुत्र, क्षमासुत, क्षमासूनु, क्षितिजनि, क्षितिपुत्र क्षितिभव, क्षितिसुत, क्षितिसूनु क्षोणिजन्मा (अन्), क्षोणीपुत्र, गोत्रापत्यम् गोत्रापुत्र, धराङ्गज, धरात्मज, धरापुत्र, धरासुत, धरित्रीज, धात्रीपुत्र पृथिवीज, पृथ्वीपुत्र, पृथ्वीसूनु, बलासव, भूकुमार, भूतनय, भूदारक, भूनन्दन, भूमि-

जात भूमिपुत्र भूमिसुत, भूमीभव महिपुत्र, महीसुत, मदिनीज, मेदिनीभू, रक्तकर, रक्तद्युति, रक्तरश्मि, रमात्मज, रसाभव, रुधिराङ्ग रोहिताङ्ग, लोहिताङ्ग, लोहिताशु, दक्षचार, वसुराज वाचनज ?, वाचनभू ?, वासुधेय व्योमोल्मुक, (५) अचलासुत, अनन्ताजनि अरुणांशु, अरुणावासा (अस्), अरुणाम्बर, अवनीजनि, अवनर्जनि, अषाढाभव, आषाढाभव, इलाकुमार, इलातनूज, इलात्मजात, उर्वीतनय, ऋणस्य हर्ता (तृ), कुजनुभव, क्रूरलोचन, क्षमातनय, क्षितिकुमार, क्षितितनय, क्षितिनन्दन, क्षोणिकुमार, क्षोणीतनूज, क्षोणीनन्दन, गगनोल्मुक, धरणिसुत, धरणीपुत्र धरणीभव, धरण्याः पुत्र धराकुमार, धरातनय, धरित्र्यात्मज, धरित्र्याः पुत्र, धात्रीतनय, धात्रीनन्दन, पृथिवीसुत, पृथ्वीतनय, पृथ्वीतनूज, बलाकुमार भूमिदायाद, भूमीतनय, महीतनय, महितनूज, महीकुमार महीनन्दन, मेदिनीजनि, रोहितच्छवि राहितदेह, रोहितद्युति, लोहितदेह, वक्रचारग, वसुन्धराज, वसुन्धराभू, वसुधाभव, वाचनसूनु ? वसुन्धरेय विपुलात्मज, विश्वम्भराज वृश्चिकनाथ शिववीर्यज, शोणविग्रह सर्वंसहाज, (६) अचलातनय, अनन्तातनूज अवनितनय, अवनिनन्दन, अवनीतजन्मा (अन्) इरमानन्दन, इरमासम्भव, इलादेहाद्भव काश्यपीकुमार, काकनदच्छवि, क्रूरविलोचन क्षितितनुजनि, जगतीनन्दन, तीव्रविलोचन धरणिकुमार, धरणितनय, धरणीतनूज, धरादेहभव, धरित्रीतनय, धात्रीतनुजनि, पृथिवीतनूज, पृथिवीसम्भव, मेदिनीनन्दन, रुधिरकिरण, लोहितदीधिति, लोहितविग्रह, वसुन्धरात्मज, वसुन्धरापुत्र, वसुन्धराभव, वसुन्धरासुत, वसुधातनूज, वसुधात्मजात, वसुमतीपुत्र, वसुमतीसुत, विश्वम्भराजनि, सर्वंसहात्मज, सर्वंसहायोनि, सर्वंसहासूनु। (७) महिमूर्तिसम्भव, मेदिनीगर्भभूत, मेदिनीतनुजन्मा (अन्), वसुन्धरानन्दन, वसुमतीतनय, विपुलातनुजात, विश्वम्भरानन्दन, शोणितसहनन, सर्वंसहातनूज, सागराम्बरासुत, (८) अचलाविग्रहोद्भव, वसुन्धराङ्गसम्भव, सर्वंसहाशरीरज। (९) काश्यपीकलेवरोद्भव, (१०) विश्वम्भराविग्रहसम्भव।

१–२६ ३०–५८

रक्तपर्याया—असृक् (ज्), अस्रम्, आग्नेयम्, आसुरम्, कीलालम्, क्षतजम्, प्राणदम्, मासकरम्, मासकारि, रक्तम्, रसतेज (अस्), रसभवम्, रसोद्भवम्, रुधिरम्, रोचयम्, लोहितम्, वाशिष्ठम, विस्रम्, शोणितम्, शोध्यम्।

रक्तवर्णप०—अरुण, अव्यक्तराग, कोकनदच्छवि, वालसन्ध्याभ, माञ्जिष्ठ, रक्त, राहित, लोहित, शोण, सन्ध्याभ।

ऋणप०—उद्धार, ऋणम्, पर्युदञ्चनम्, प्रमात्यम् ?, प्रामार्ज्यम्, प्रामित्यम्, ? प्रामीत्यम्।

अङ्गप०—अङ्गम्, काय, तनु, देह, शेषस्त्वन्यत्र।

भूमिप०—अचलकीला, अचला, अदिति, अद्रिकीला, अनन्ता अन्तरिक्षम्, अब्धिद्वीपा, अब्धिमेखला, अब्धिवस्त्रा, अम्बरस्थली, अवनि—

नी, आदिमा, आद्या, इडा, इडिका इरा इला, इलिका, ईला, उदधिवस्त्रा, उर्वरा, उर्वी, कान्ता, काश्यपी, कौलिनी, कु कुम्भिनी, कुह्वरी, केलिनी, क्रोडकान्ता, क्षमा, क्षरि, क्षान्ता, क्षान्ति, क्षिति, क्षोणि —णी, क्षौणि —णी, क्ष्मा, खगवती, खण्डनी, गन्धमाता (तृ), गन्धवती, गह्वरी, गातु, गिरिकर्णिका, गिरिस्तनी, गौ (गो), गोत्रकीला, गोत्रा, ग्मा, घनश्रेणी, जगती, जगद्वहा, ज्या, दक्षा, देहिनी द्विरा, धरणि —णी, धरणीधरा, धरा, धराधारा, धरित्री, धात्री, धारणी, धारयित्री, नगाधारा, निर्ऋति, निश्चला, पर्वतकीला, पर्वताधारा, पारा, पूषा, पृथवी, पृथिवी, पृथु, पृथ्वी, पेरा, बला, बीजप्रसू, बीजसू, भुवनमाता (तृ), भू, (स्) (अ०), भूतधात्री, भूतमाता (तृ) भूमि -मी, मध्यमलोक, मध्यमलोकवर्त्मा (अन्), मध्यलोक, मर्त्य, महाकाण्डा, महास्थाली, महि ही, माधवी, मेदिनी, मेरुद्रिकीला, रत्नगर्भा, रत्नवती, रत्नसू रत्नावती, रसा, वरा, वसुन्धरा, वसुधा, वसुधारिणी, वसुमती, विपुला, विश्वम्भरा, विश्वा, शैलाधारा, श्यामा, समुद्रकाञ्ची, समुद्रमेखलना, समुद्ररसना, समुद्रवसना, समुद्राम्बरा, सर्वभृता, सर्वंसहा, सलिलेशाम्बरा, सहा, सागरनेमी, सागरमेखला, सागराम्बर, सुधा, स्थगणा, स्थिरा, स्वसू, स्वस्थली, हेमा।

**एकयोक्त्या द्यावापृथिवीपर्याया**—अपारे, घृतवती, घृतवत्यौ, दिव पृथिव्यौ, दिवस्पृथिव्यौ, द्यावाक्षमे, द्यावापृथिवी द्यावापृथिव्यौ, द्यावाभूमी, बृहती बृहत्यौ, भूद्यावौ, रोदसी, रोदसौ, रोदस्यौ, रोधसी, रोधस्यौ।
१—२६

**पुत्रपर्याया**—अङ्गज, अङ्गभू, आत्मज, आत्मजन्मा (अन्), आत्मजात, आत्मनीन, उद्वह, कुलधारक, तनय, तनुज, तनूज, दायाद, दारक, द्वितीय, नन्दन, पिण्डद, पुत्र, सुत, सूनु, स्वज।

**एकयोक्त्या पुत्रपुत्रीपर्याया**—अपत्यम् (न०) (अजहल्लिङ्गम्), तुक् (ज्) (पु०), तोकम् (न०), प्रजा (स्त्री०), प्रसूति, (स्त्री०), बीजम् (न०), सन्तति (स्त्री०) सन्तान (पु०)

**बुधपर्याया** (१) ज्ञ, विद (द्), सत् (त), (२) आङ्गिर, ग्लौज, ग्लौभू, चान्द्रि, बुध, मर्ज, राज्य, वर्चा (अस्) शान्त, सौम्य, हेमा (अन्) ?, हेम्न, (३) अब्जभू, आत्रेय, इन्दुज, इन्दुभू, इन्दूत्थ, इलेश एकाङ्ग, ऐन्दव, कुमार, कोविद, चन्द्रज, ताराज, तारेय, नेमिज, पञ्चार्चि (स्), पण्डित, बोधन, मार्गाङ्कि, रोधन, विधुज, विधुभू, विधूत्थ, विबुध, वैधव, वैबुध, शशिज, शशिभू शशाङ्कि, श्यामाङ्ग, हर्युल, (४) अतिदीर्घ, अत्रिपौत्र, दुक्पथ, अब्जजन्मा (अन्), अब्जसुत, अब्जसूनु, अब्जापत्यम्, इन्दुजनि, इन्दुपुत्र, इन्दुभव, इन्दुसुत, इन्दुसूनु, इलाजानि, इलानाथ, इलेश्वर, एकदेह, चन्द्रजनि, चन्द्रजन्मा (अन्), चन्द्रपुत्र, चन्द्रसुत, चन्द्राङ्गज, चन्द्रात्मज, चान्द्रमस, जैवातृकि, तारकेय, तारासुत, द्वंजराजि, धनिष्ठाभू, प्रहपण प्रहर्पुल, भेदाजात, मृगाङ्कज, राजपुत्र, राजसुत, रोहिणीज, रौहिणेय,
३०—५८

विधुजनि, विधुसुत, शशाङ्कज, शार्वरीशि, शशधरि, शीतांशुज, शीतांशुभू, श्यामगात्र श्रविष्ठाज, श्रविष्ठाभू, सोमजनि, सोमसुत सोमसूनु, हिमांशुज, हैमांशव, (५) अब्ज-नन्दन, इन्दुतनय, इन्दुनन्दन, इलारमण, इलावल्लभ, उपेशजात, ऋक्षपजनि, कलाप जनि कलेशजनि, क्लेशपुत्र, चन्द्रतनय, जडांशुजन्मा (अत्), जडांशुभव, जडांशुसूनु, जैवातृकज, तारकासूनु, ताराङ्कजात, तारा-तनय, तारानन्दन, तौहिनांशुज, तौहिनांशव, द्विजराजज, धनिष्ठाभव, परिज्वपुत्र, पर्वरि पुत्र पालाशवासा (अस्), पालाशाम्बर, मृगाङ्कसूनु, यामिनीशज, रजनीशभू, राके-शात्मज, रोहिणीभव, रोहिणीसुत, विधुतनय, विधुदारक, शशाङ्कसूनु, शशिकुमार, शशि तनुज, शशिनन्दन, शिशिरांशुज, शीतगुसूनु, शीतभानुज, शीतलांशुज शीतांशुजात, शीतां-शुपुत्र, शीतांशुसूनु, शैतलांशव, शैशिरांशव, श्रविष्ठाभव, सोमनन्दन, हरिणाङ्कज, हिम करज, हिमांशुजन्मा (अन्), हिमांशुसूनु, हिमांशो सुत, (६) अत्रिजनु सुत, अमृत-रश्मिज, अमृतांशुजन्मा (अन्), अमृतांशुसूनु, इन्दुदेहभव, उडुनाथपुत्र, उपाधिताथज, ऋक्षे-श्वरजन्मा (अत्) एणाङ्कतनूज, ओषधीशसुत, कलाधरपुत्र, कलानिधिसुत, चन्द्रमस सुत, चान्द्रमसायन, चान्द्रमसायनि, छायाङ्कतनय, जैवातृकजनि, तमिस्राकरज, तमीनाथजात, तमीभर्तृपुत्र, तमीशतनय, तुषारांशुजनि, तुषा राशुसुत, तुहिनोस्रसुत, द्विजराजपुत्र, द्विजराज-

१–२९

सूनु, धनिष्ठासम्भव, नक्षत्रेशसुत, निशानाथ-सुत, पीयूषरश्मिज, प्रालेयभानव, प्रालेयभा-नुज, भनाथनन्दन, मृगधरजनि, मृगाङ्कदेहज, यामिनीशसूनु, यामवतीशज, रजनीश्वरभू, रात्रिनाथात्मज, रोहिणीनन्दन, लोकम्पृणा-त्मज, वलक्षगुपुत्र, वार्मण्डलभव, विधुतनुभव, विधुदेहजात, शशाङ्कतनय, शशिशरीरज, शिशिरांशुसूनु, शीतकरात्मज, सितकेतुसूनु, सितांशुतनुभू, सुधाकराङ्गज, सूर्यसहचर, हरिणाङ्कजन्मा (अन्), हिमकरजनि, हिम-किरणभू, हिमरश्मिपुत्र, (७) अत्रिदृग्जात-सूनु, अत्रीतजन्माङ्गज, अमृतभानुसूनु, गौर-मरीचिपुत्र, जडमयूखसुत, जैवातृकतनय, तुषा-रकरपुत्र, तुहिनदीधितिज, द्विजराजदेहज, धवलभानुभव, पर्वरिदेहजात, पीयूषांशुतनय, प्रालेयरश्मिसुत मिहिकाकरजनि, मृगधरदेहभू, यामवतीशसुत, रजनीकरपुत्र, राकाधिराज-जन्मा (अन्), वलक्षवृष्णिभव, शर्वरीशप्रसूत, शिशिरगुतनय शीतदीधितिसुत, शीतलभानु भव, हिममरीचिजनि, (८) अमृतकिरणजन्मा (अन्), कलावतोदेहभव, कुमुदिनीपतिपुत्र, कुरङ्गलक्ष्मप्रभव, तारकराजतनूज, द्विज राजाङ्कसम्भव, धवलदीधितिपुत्र, नक्षत्रनाथ नन्दन, निशीथिनीनाथसुत, निशीथिनीवल्ल भज, नीहारकरप्रसूति, रोहिणीरमणात्मज, हिमकिरणतनूज (९) क्षणदाधिनाथनन्दन, (१०) दक्षजारमणात्मसम्भव, (११) दाक्षा-यणीनायकदेहजन्मा (अन्), (१२) दाक्षायणी-परिवृढाङ्कसमुद्भव ।

३०–५८

**बुधपितृपर्य्यायाः**—अब्ज, इन्दु, चन्द्र, चन्द्रमा (अस्), विधु, सोम, शेषस्तु चन्द्रे ।

**बुधमातृप०**—तारा, रोहिणी, शेषस्तु चन्द्रे ।

**बुधपत्नीप०**—इला, वेला ।

**बुधपुत्रप०**—उर्वशीरमण, ऐलेय, पुरूरवा (अन्), बौध ।

**पण्डितप०**—कोविद, पण्डित, बुध, विद् शेषस्तु प्रकीर्णे ।

**हरितवर्णप०**—पलाश, पालाश, पीतनील, हरित् (त्), हरित ।

**बृहस्पतिपर्य्याया**—(१) ज्योग्, भ, (२) अर्च्य, मार्य, इज्य, ईड्य, गुरु, गौर, चक्षा (अस्), जीव, तपा, (अस्), धीमान् (मतु०), धीश, पूज्य, प्रख्या (अस्), मन्त्री (इन्) वाग्मी (इन्), सूरि, (३) अङ्गिरा (अस्), अमात्य, अर्चित, आचार्य, इन्द्रार्च्य, इन्द्रेज्य, गिरीश, गी पति, गीष्पति, गीरथ, गोपति गोविन्द, दीदिवि, देवार्च्य, देवेज्य, देवेड्य, धिषण, पारुष्य, पुरोधा (अस्), पूजित, प्रस्पावाक् (च्), प्रवक्षा (अस्), प्रशान्त, मतिमान् (मतु०), लेखार्च्य, लेखेज्य, वाक्पति, वागीश, वाग्वाग्मी (इन्), सचिव, सिन्धुज, सुरार्च्य, सुरार्य, सुरेज्य, सुरेड्य, सुरेय, हरीज्य, हरीड्य, हर्य्यर्च्य, (४) अङ्गिरोज, अङ्गिरोभू, अनिर्वाप, अमरार्च्य, अमरेज्य, अमर्त्येज्य, आङ्गिरस, आदित्यार्च्य, आदित्येज्य, इन्द्रमंत्री (इन्), इन्द्रवन्द्य, इन्द्राचार्य्य, इन्द्रार्चित, गिरापति गिरास्वामी (इन्), गीर्वाणेज्य, गीर्वाणेड्य, ताराजानि, त्रिदशार्च्य, त्रिदशेज्य, त्रिदशेड्य, दिविजेज्य, देवगुरु, देवनुत, देवपूज्य, देवमन्त्री (इन्), देववन्द्य, देवाचार्य्य, देवामात्य, देवार्चित, देवोपनी, दैवतेज्य, द्वादशार्चि (ष्), निर्जरेज्य, पीतवासा (अस्), बृहस्पति, मतिसखा, मरुत्पूज्य, मरुदार्च्य, मरुदीड्य, मरुद्गुरु, मरुद्वन्द्य, मरुन्नुत, मरुन्मन्त्री (इन्), महामति, यूपध्वज, लेखगुरु, लेखवन्द्य, वागधीश, वागीश्वर, वाचापति, वाचाप्रभु वाचामीश, वाचाविभु, वासवेज्य, वासवेड्य, शक्रगुरु, शक्रपूज्य, शक्रमन्त्री (इन्), शेमुषीश, सुरगुरु, सुरनुत सुरपूज्य, सुरसेज्य, सुरमन्त्री (इन्), सुरवन्द्य, सुरसूरि, सुराचार्य्य, सुरार्चित, सुरेशार्य्य, सुरेशेड्य, हरिप्रिय, (५) अङ्गिर पुत्र, अङ्गिर सुत, अङ्गिरोभव, अद्रिभिन्मन्त्री (इन्), अमरगुरु, अमरनुत, अमरपूज्य अमरमन्त्री (इन्), अमराचार्य्य, अमरार्चित, अमर्त्यगुरु, अमर्त्यामात्य, आखण्डलेज्य, इन्द्रपूजित, इन्द्रमहित, इन्द्रयाजक, इन्द्रवन्दित, इन्द्रसचिव, उतथ्यसोदर्य, उतथ्यानुज, गिरोरमण, गीर्वाणगुरु, गीर्वाणवन्द्य, गोपतिवन्द्य, जम्भारिगुरु, त्रिदशगुरु, त्रिदशवन्द्य, त्रिदशाचार्य्य, त्रिदशार्चित, दिविजगुरु, देवतापूज्य, देवनमस्य, देवयाजक, देवोपाध्याय, दैवताचार्य्य, द्वादशवर, निर्जरगुरु, निलिम्पमन्त्री (इन्), निलिम्पाचार्य्य, पर्जन्यपूज्य, पाखण्डकर्त्ता (तृ), पीतवसन, पीताम्बरभृत्, पुरन्दरेज्य, पुरहूतार्च्य, प्राक्फाल्गुनेय, फाल्गुनीभव, बृहतापति, मघवद्गुरु, मरुदर्चित, मरुदा-

चार्य्य, मरुन्नमस्य, मरुद्याजक, महेन्द्रगुरु, वचसांपति, वाचामधीश, वासवगुरु, वासवपूज्य, वासवार्चित, विबुधपूज्य, विबुधाचार्य्य, विबुधामात्य, वृत्रारिपूज्य, वृत्रारिवन्द्य, वृषवन्दित, शक्रस्य मन्त्री (इन्), शासितदेव, सरस्वतीश, सुरनमस्य, सुरपूजित, सुरमहेज्य, सुरयाजक, सुराणांगुरु, सुराधिदेव, सुरेन्द्रगुरु, सुरेन्द्रवन्द्य, सुरेशगुरु, सुरेशनुत, सुरेशपूज्य, सुरेशमन्त्री (इन्), सुरेशाचार्य्य, सुरेशार्चित, सुरोपाध्याय, स्वर्वार्चिताङ्घ्रि, (६) अनिमिषाचार्य, अनिमिषार्चित, अमरपुरोधा (अस्), अमरार्चिताङ्घ्रि, अमरेशमन्त्री (इन्), आदितेयगुरु, आदितेयार्चिताङ्घ्रि, इन्द्रपुरोहित, इन्द्रसुवस्तिक, उतथ्यसोदर, उतथ्यावरज, गीर्वाणेशवन्द्य, चित्रशिखण्डिज, त्रिदशपगुरु, त्रिदशपतीज्य, त्रिदशसचिव, दम्भोलिभृदिज्य, दम्भोलिभृन्मन्त्री (इन्), दिविचराचार्य्य, देवपतिपूज्य, देवपतिमन्त्री (इन्), देवपुरोहित, देवराजार्चित, देवसमर्चित, निर्जरसचिव, पर्जन्यार्चितपद् (द्), पविपाणिपूज्य, पविपाणिमन्त्री (इन्), पुरन्दरगुरु, पुरन्दराचार्य्य, पुरन्दरामात्य, पुरुहूतपूज्य, पुरुहूतवन्द्य, प्राक्फाल्गुनीसुत, बलारातिगुरु, मघोनः सचिव, मघोनः पुरोधा, (अस्) मरुतामभात्य, मरुत्पुरोहित, मरुदधिदेव, मरुदुपाध्याय, महेन्द्रसचिव, लेखपुरोहित, वचसामधीश, विबुधवन्दित, विबुधसचिव, विबुधेन्द्रमन्त्री (इन्), शक्रपुरोहित, शक्रसुवस्तिक, शच्याः प्रभोर्मन्त्री (इन्), शतक्रतुगुरु, सवर्तपूर्वज, सुमनोनमस्य, सुरनाथगुरु, सुरपतिगुरु, सुरपपुरोधा (अस्), सुरपुरोहित, सुरराजगुरु, सुरराजपूज्य, सुरराजवन्द्य, सुरवन्द्यमान, सुरार्च्यचरण, सुरेन्द्रयाजक, सुरेशनमस्य, सुरेशपूजित, सुरेशयाजक, सुरेशसचिव, सुरेशाधिदेव, सुरेशोपाध्याय, (७) अदितिजनिगुरु, अदितिसुतामात्य, अमरनाथपूज्य, अमरपार्चिताङ्घ्रि, अमरपूजिताङ्घ्रि, अमरपूज्यपाद, अमरराजपूज्य, अमरराजमन्त्री (इन), अमरवन्द्यमान, अमरघोसहाय, अमरेन्द्रोपाध्याय, इन्द्रस्यपुरोहित, कुलिशधरनुत, कुलिशभृत्सचिव, गणपतिगणक, गीर्वाणराजार्चित, चित्रशिखण्डिसूनु, त्रिदशपतिगुरु, त्रिदशराजगुरु, त्रिदिवेशवन्दित, दानवारिसचिव, देवताराजपूज्य, देवदेवसचिव, देवदेवाधिदेव, देवनायकगुरु, देवेशपुरोहित, निर्जरराजपूज्य, पविपाणिपूजित, मरुत्पतिपूजित, मरुद्वन्दितपद, मेघयानार्चिताङ्घ्रि, वचसापरिवृढ, विबुधपतिगुरु, शचीपते पुरोधा (अस्), सनन्दनसचिव सुनासीरपुरोधा (अस्), सुरनाथपूजित, सुरनाथयाजक, सुरपतिवन्दित, सुरराजपुरोधा, (अस्), सुरराजवन्दित, सुरवन्दितपद, सुरेशपुरोहित, (८) अदितिनन्दनपूज्य, अमरनायकवन्दित, अमर्त्यपूज्यचरण, अमृतान्धपूजित, अम्बरपिसचिव, ऋभुविभुवन्दिताङ्घ्रि, अनुभुजापतिपूज्य, गीर्वाणनायसचिव, चित्रशिखण्डिप्रसूत, दिविषन्नुतचरण, दिवौकसादवगुरु निर्जरराजवन्दित, निलिम्पराजपूजित, बर्हिर्मुख-

वन्दिताङ्घ्रि, यज्ञभुजां सौवस्तिक, वृन्दारकार्चितपद, सुपर्वनायमहित, सुरकुलपतिपूज्य, सुरेशवन्दितपद, सुरेश्वरपूजिताङ्घ्रि, स्वर्लोकराज सचिवः, (९) असृनादनार्चितपद, नाकनायक-याजक, निलिम्पेश्वरपूजिताङ्घ्रि, शचीपति-बुद्धिसहाय, सुरराजवन्दितपद, सुरवृन्दवन्दितपद, (१०) अनिमिषेशपूजितपाद, निलिम्प-नायकपुरोहित, (११) अदितिनन्दननाथपुरोधा, (अस्), निर्जरनायकपूजितपाद, वृन्दारकवृन्दवन्दितपद, (१२) अदितिदारकदेववन्दितपाद, (१३) अदितिदारकदेववन्दितचरण ।

गुरुपर्याया — उपनी, क्षाणी (इन्), गुरु, तीर्थ, दिशात, देशिक, देशिकोत्तम, धर्मोपदेशक, निषेकादिकृत् (त्), बोधान, ब्राह्मिक ।

आचार्यप०—अनुयोगकृत् (त्), आचार्य, गुरु, मन्त्रव्याख्याकार, मन्त्रव्याख्याकृत् (त्) ।

उपाध्यायप०—अध्यापक, उपाध्याय, पाठक ।

पूज्यप०—अञ्चितम्, अर्चितम्, अर्घ्य, इज्य । ईड्य नमस्य, नुत, पूजितम्, पूज्य, महितम्, वन्दितम्, वन्द्य, वन्द्यमान, समर्चितम्, सम्पूजितम् ।

मन्त्रिप०—अमात्य, धीकर्मसहाय, धीसख, धीसचिव, बुद्धिसहाय, मन्त्री (इन्), सचिव, सामवयिक ।

पुरोहितप०—ऋत्विक् (ज्) पुरोधा (अस्), पुरोहित, याजक, सौवस्तिक (सौवस्तिक ?) ।

सदस्यप०—देशिक, देशिकोत्तम सदस्य, सभासद् (द्), सभास्तार सभ्य, सामाजिक रथेयः ।

याजकनामानि—(१) अध्वर्यु, (२) प्रशास्ता (तृ), (३) नेष्टा (ष्टृ), (४) उन्नेता (तृ), (५) ब्रह्मा (ब्रन्), (६) ब्राह्मणाच्छंसी (इन्), (७) अग्नीध्र, (८) पोता (तृ), (९) उद्गाता (तृ), (१०) प्रस्तोता (तृ) (११) प्रतिहर्ता (तृ), (१२) अच्छावाक, (१३) होता (तृ) (१४) मैत्रावरुण, (१५) अच्छावाक, (१६) ग्रावस्तुत् (त्) ।

वैजयन्त्यां तु —

याजका, भरता', यज्ञलिह, ध्रुवस, ऋत्विज, यतस्रुच, देवयव, वाघत, वृक्तबर्हिष, अध्वयव, उद्गातार, होतार, ब्रह्मा चेति महर्त्विज ।

वाक्पर्याया —गिर्, गिरा, गौ, (गो), ब्राह्मी, भारती, भाषा, वच (अस्), वाक् (च्), वाणी, श्रुतदेवी, सरस्वती ।

पादप०—अङ्घ्रि, अंघ्रि, क्रम, क्रमण, चरण, चलन, पत् (द्), पदम्, पात् (द्), पाद ।

पीतवर्णप०—गौर, तालकाभ, पीत, पीतक, मितरम्जन, सितरङ्ग, हरिद्राभ, हरिद्रासदृश, हारिद्र ।

गुरुपितृप०—अङ्गिरा (अस्), (रूपान्तरविशेष), चित्रशिखण्डी (इन्) ।

गुरुज्येष्ठभ्रातृप०—उतथ्य, जीवाग्रज ।

गुरुपत्नीप०—तारा ।

गुरुपुत्रप०—कच ।

गुरुरथप०—नीतिघोष ।

शुक्रपर्याया —(१) ज्ञ, म, (२) [illegible] दन, कवि, काण, क म ?, काव्य, दूर, दिवस्य, मग, भृगु, शुक्र, शुक्ल, दक्ष, [illegible],

ब्राध्नि, भागि, भाग्य, मन्द, मृदु, मैत्र, मैत्रि, यम, वक्र, शनि, शने (स्) (अ०), शौर, शौरि, श्याम, सौर, सौरि, स्थिर, हासि, (३) अगुज, अशुभू, अन्तक, अर्कज, अर्कभू, अशुक्लज, अश्वेत, असित, आशव, आरुणि, इनज, इनभू, इनोत्थ, कृशाङ्ग, क्रूरात्मा (अन्), घटप, घटेश, छायाज, छायाभू, छायेय, तापनि, नीलरुक् (च्), पपीभू, पातङ्गि, पैङ्गल, प्रभाज, प्रभाभू, प्राभेय, ब्रध्नज, ब्रह्मण्य, भगज, भगभू, भगोत्थ, भानव, भानुज, भानुभू, भास्करि, भास्वज्ज, भास्वद्भू, मन्दग, मन्देति, मार्तण्डि, मार्ताण्डि, मित्रज, मृदुग, मेचक, मैहिरि, रविज, रविभू, रावेय, सप्तार्चि (ष्), सप्ताशु, सप्तोस्र, हमज, हेलिज, हैल्य, (४) अरुणज, अरुणोत्थ, अर्कजनि, अर्कजन्मा (अन्), अर्कपुत्र, अर्कभूत, अर्कसुत, अर्कात्मज, असितगु, अमितमा (अस्), अमितरुक् (च्), आदित्यज, आदित्योत्थ, इनजनि, इनजनु (ष्), इनसुत, इनात्मज, उष्णांशुज, औष्णांशव, कपिलाक्ष कृष्णप्रभ, कृष्णरुचि, कृष्णवासा (अस्), कृष्णाम्बर, खरांशुज, खरोस्रभू, खारांशव, गभस्तिज, गाभस्तेय, घटनाथ, घटविभु, घटाधिप, चण्डांशुज, चाण्डकरि, चाण्डांशव, छायाजनि, छायात्मज, छायापुत्र, छायाभव, छायासुत, छायासूनु तपनज, तारणेय, त्रिमूर्तिभू, त्रैमूर्तेय, दैनकरि, दैनाकरि, ध्वान्तद्विड्भू, नीलद्युति, नीलरुचि, नीलरोचि (ष्), नील-वस्त्र, नीलवासा (अस्), नीलाम्बर, नीलांशुक, पतङ्गज, पतङ्गभू, पपीजनि, पप्यपुत्र, पीथपुत्र, पूषजात, प्रभासुत, प्राभाकरि, ब्रध्नजनि, ब्रध्नभव, भगभव, भगात्मज, भानुजन्मा (अन्), भानुपुत्र, भास्करज, भास्वद्भव, मन्दगति, मन्दगामी (इन्), मन्दचर, मन्दभुक्ति, मन्दमार्ग, मन्दरय महाग्रह, मृदुगति, मृदुगामी (इन्), मार्तण्डज, मार्ताण्डभू, मित्रपुत्र, मिहिरज, यमानुज, रविजन्मा (अन्), रविभव, रवेः सुत, रेवतीज, रेवतीभू, वैकर्त्तनि, वैरोचनि, वैवस्वत, शनैश्चर, शनैश्चारी (इन्), शितिदीप्ति, शितिरुचि, शितिवासा (अस्), श्यामतनु, श्यामलाङ्ग, श्यामवासा (अस्), श्रुतकर्मा (अन्), सूनुपुत्र, सूनुसूनु, सूरसुत, सूर्यपुत्र, सूर्यात्मज, हसजनि, हेलिसुत, (५) अर्कतनय, अगुभ्ररोचि (ष्), असितशोचि (ष्), असिताम्बर अहेरङ्गभू, आदित्यसुत, इनप्रसूत, उष्णांशुपुत्र, क्रूरदृक्पथ, खरांशुपुत्र, ग्रहनायक, चण्डांशुसूनु, छायाकुमार, जगज्जन्मज, तपनात्मज, तरणिपुत्र, तरणिबन्धु, तिग्ममहोभू, त्रिमूर्तिपुत्र, दिनमणिज, दिनेशसूनु, दिवानाथज, दैनमणेय, द्युमणिसुत, नलिनीशज, नीलवसन, नीलाम्बरभृत् (त्), पतङ्गपुत्र, पिङ्गलात्मज, प्रेतपुरीश, भगसम्भव, भानुतनय मार्तण्डाङ्गज, मिहिरात्मज, मेचकरुचि, यमावरज, युगवर्त्तक, रेवतीभव, लोकबन्धुभू, विकर्त्तनज, विरोचनभू, वैभावसव, श्यामलशोचि (ष्), सप्ताश्वसूनु, सवितृसुत, सह-

१–२६ ३०–५८

साग्रुज साहस्राशव हंससन्तति, हेलिनन्दन, (६) अरुणतनय, अर्कतनुजन्मा (अन्), असितवसन, आदित्यतनूज, इनदेहजन्मा (अन्), उष्णांशुतनय, कपिलनयन, कपिललोचन, कमलिनीशज, खररश्मिसूनु, गभस्तिसम्भव, षट्रूपभर्त्ता (तृ), तपननन्दन, तमोहृत सुत, तरणितनूज, तीक्ष्णोस्रतनुभू, तीव्रकरजात, दिनकरात्मज, दिननायकोत्थ, दिनपतिपुत्र, दिनेशतनय, दिवसेशसूनु दिवाकरसुत, द्युमणि नन्दन, नलिनीशजनि, पतङ्गतनय, पिङ्गला त्मभव, ब्रध्नतनुजन्मा (अन्), भास्करात्मभव, भास्वत्तनुजनि, मिहिराङ्गजात, यमसहोदर, लोकबन्धुपुत्र, विभावसुसुत, विवस्वत्तनूज, श्रुतश्रवोऽनुज, सप्ताश्वपुङ्गव, सवितृकुमार, सहस्रांशुसुत, हंसशरीरज, हेलिविग्रहभू, (७) अर्कसहूनतज, अहस्करनन्दन, आदित्यसमुद्भव, उष्णदीधितिसूनु कमलिनीशजन्मा (अन्), जगत्साक्षिसन्तति, तपनतनुभव, तरणिदेहजात, पद्मिनीपालपुत्र, प्रखरकरजन्मा (अन्), मार्तण्डकायभव, मिहिराङ्ग सम्भव, वासरनाथपुत्र, वासरमणिसूनु, सप्तगन्धर्वगात्र, सप्तसप्त्यङ्गजन्मा (अन्), सुवर्चलाजानिभू, (८) अम्बुजहितप्रभव, अम्भोजमित्रतनय, अम्भोजिनीपतिसुत, दशशत करपुत्र, (९) अम्भोभवमित्रनन्दन, घर्मघृण्यात्मसमुद्भव, नलिनीश्वरशरीरज, पद्मिनी प्राणपतिपुत्र, (११) सरोजिनीनायकशरीरजन्मा (अन्), पुटकिनीशकलेवरजात, (१२) मृणालिनीनायकलेवरोद्भव, नालीकिनीनायकदेह सम्भव, (१४) पङ्केरुहाधिपतिसहननप्रसूति ।

शनिपितृपर्याया —अर्क, इन, पूषा, रवि, सूर्य, शेषस्तु रवौ ।

शनिमातृप०—छाया, प्रभा, विभा, शेषस्तु रवौ ।

शनिभ्रातृप०—अन्तक, काल, यम, शेषस्तु यमे ।

शनिपत्नीप०—चित्ररथकन्या, चित्ररथपुत्री, शनिपत्नी ।

कृष्णवर्णप०—अशुक्ल, अशुभ्र, अश्वेत, असित, काल, कृष्ण, नील, मेचक, राम, शिति, श्याम, श्यामल ।

राहुपर्याया —(१) ,व, (२) अगु, अहि, चक्री (इन्), तम तम, (अस्) (न०), दैत्य, धाता (तृ), ध्वान्त, नाग, पङ्क, पात, फणी (इन्), भोगी (इन्) राहु, वक्र, विदु व्याल, सर्प, (३) अनगु अब्जारि अरश्मि, अहिराट् (ज्), उरग, कुण्डली (इन), ग्रहारि, गूढपात् (द), जिह्मग, तिमिर, दनुज, दानव, नागराट् (ज्), पन्नग पृदाकु, फणिप, फणीन्द्र, फणीश, भानुभुक् (ज), भुजग, भुजङ्ग, भुजङ्गेट्, भोगिप, भोगीन्द्र, भोगीश, व्यालेश, शश्यरि, शीर्षक, सर्पेन्द्र, सुरद्विट् (ष्), सैंहेय, स्वर्भाणु स्वर्भानु, (४) अन्धकार, अमयूख, असुरेश, अहिनाथ, अहिपति, अहिविभु, अहे प्रभु आशीविष इन्दुतप (अस्), इन्दुतुद, इन्दुद्रुहंत् (द्), इन्दुरिपु उपप्लव, उपराग, उरगप, उरगेश काकोदर, कृष्णवर्ण, चक्षु श्रवा (अस्), चन्द्रन्तुद, चन्द्रन्दुन, चन्द्रपात, चन्द्रमर्दी,

(३) ग्रास्फुजि, ग्रास्फुजित् (त) उशना (ग्रस्) एकदृग् (श्), एकाक्ष, दैत्यत्विक, (ज्), दैत्याचार्य, दैत्येज्य, दैत्येड्य, दैत्येश, वलीज्य, भमञ्ज भागवान् (मतु०), भार्गव, भृगुज, भृगुभू, भृगूत्य, मघाज मघाभू, मघोत्य, सुकवि, (४) ग्रसुराच्र्य, ग्रसुरेज्य, ग्रसुरेड्य ग्रासुरेज्य एकचक्षु (स्), एकनेत्र, कविसूनु, काव्यसुत, चित्रवासा (ग्रस), चित्राम्बर, तिर्यग्गामी (इन्), दनुजार्च्य, दानवेज्य, दानवेड्य दिनदृश्य, दिवाचर दैतेयार्च्य, दैतेयेज्य दैतेयेन्य दैत्यगुरु, दैत्यनुत, दैत्य पूज्य दैत्यप्रिय, दैत्यभर्त्ता (त), दैत्यमन्त्री (इन्), दैत्यवन्द्य, दैत्यसुहृत् (द), दैत्याचार्य्य, दैत्यामात्य, दैत्यार्चित दैत्येन्द्रदृच, दैत्ये शेज्य दैत्येशेड्य, दैत्योपनी प्राक्सुरेज्य, प्राग्देवेज्य, वलिगुरु, वलिपूज्य, वलिमन्त्री (इन्), वलिवन्द्य, वल्यमात्य, भृगुजनि, भृगुजन्मा (ग्रन), भृगुपुत्र भृगुभव, भृगुसुत, भृगुसूनु, भार्गवपत्यम्, मघाजनि, मघाजन्मा (ग्रन) मघाभव मदग्रह, श्वेतरथ, षोडशार्चि (ष) षोडशांशु, सितरय, (५) ग्रसुरगुरु, ग्रसुरप्रिय ग्रसुरसूरि, ग्रसुराचार्य्य, ग्रसु रार्चित, एकनयन, एकलाचन, चित्रवसन दनुजगुरु, दनुजनुत, दनुजपूज्य दनुजमन्त्री (इन्), दनुजवन्द्य, दनुजसूरि, दनुजाचार्य्य दनुजामात्य, दनुजार्च्चित, दानवगुरु दानवपूज्य, दानवप्रिय, दानवमन्त्री (इन्), दानववन्द्य, दानवसुहृत (द), दानवाचार्य्य, दानवामात्य, दानवार्चित्त, दितिज्गुरु, दितिजपूज्य, दितिजमन्त्री (इन्), दितिजाचार्य्य, दितिजामात्य, दैतेयपूज्य दैतेयवन्द्य, दैतेयार्च्चित, दैत्यनमस्य, दैत्यपुरोधा (ग्रस) दैत्यपूजित, दैत्यमहित, दैत्यवन्दित, दैत्यसचिव, दैत्येन्द्रमन्त्री (इन्), दैत्यन्द्रवन्द्य, पूर्वदेवेज्य, पूर्वसुरेज्य, प्रावसुरवन्द्य, प्राग्देवतेज्य, प्राग्देवपूज्य, प्राग्देवाचार्य, प्राग्दैवतार्च्य, प्राग्दैवतेज्य, वलिपूजित, वलिवन्दित, वलिसचिव, वलेपुरोधा (ग्रस), भार्गवदेव, भृगुतनय, भृगुनन्दन भृगुप्रसूति, भृगुवशज, भृगोरपत्यम्, भृगोर्नन्दन, शतपर्वेश, सुरारिवन्द्य, (६) ग्रमरारिगुरु, ग्रमरारिपूज्य, ग्रमर्त्यारिमन्त्री (इन्), ग्रमर्त्यारिवन्द्य, ग्रसुरदयित, ग्रसुरनमस्य, ग्रसुरपूजित, ग्रसुरमहेज्य, ग्रसुरवन्दित, ग्रसुरेन्द्रगुरु, ग्रासुरपूजित, इन्द्ररिपुमन्त्री (इन्), इन्द्रारिवन्दित, त्रिदशारातीज्य, त्रिदिवेशारीड्य, दनुजनायार्च्य, दनुजसचिव, दनुजाधिपेज्य, दनुजेन्द्रमन्त्री (इन्), दानवपूजित दानवयाजक दानववन्दित, दानवोपाध्याय, दितितनयेज्य, दितिसुताचार्य्य, देवरिपुपनी, दैतेयनमस्य, दैतेयमहित दैत्यपुरोहित पूर्वदेवतेज्य पूर्वदेवपूज्य, पूर्वदैवतेड्य, प्रथमदेवार्च्य, प्रथमगुरेज्य, प्राग्देवतावन्द्य, प्राग्देववन्दित प्राग्दैवतार्चित, वलिपूज्यपाद, भार्गवनन्दन, भृगुनन्दकर, विवुधारातीज्य, विवुधारिपूज्य, विवुधारिवन्द्य, शतपर्वाजानि, शतपर्वानाथ, शतपर्वापति शासितदानव, सुरारिदयित, सुरारिसचिव (७) ग्रनिमिषारातीज्य, ग्रनिमेषारिपूज्य, ग्रमरवैरिवन्द्य,

१–२६ ३०–५८

अमर्त्यसपत्नेज्य, असुरकुलगुरु, असुराणां दयित, असुरेन्द्रपुरोधा (अस्), असुरेन्द्रमहित, असुरेन्द्रसचिव, दनुजराजगुरु, दनुतनयार्चित, दनुनन्दनमंत्री (इन्), दानवराजपूज्य, दानवाधीश्वर, दानववृन्ददेव, दानवार्च्यचरण दानवेन्द्रार्चिताङ्घ्रि, दितिनन्दनवन्द्य, दितिसुतसचिव, दितिसूनुपूजित दैत्यराजार्चित, दैत्यपतिपुरोधा (अस्), दैत्यराजवन्दित, पूर्वदेवसचिव, पूर्वदेवार्चिताङ्घ्रि प्रथमदेवगुरु, प्रथमसुरनुत प्रथमसुरपूज्य प्राग्देवतार्चिताङ्घ्रि, प्राग्देवतावन्दित, (८) अनिमिषारिपूज्य, असुरपूज्यचरण, असुरराजपूजित, असुरवन्दित पाद, असुराधिपपूजित, दनुजनुत सौवस्तिक, दानवनाथनमस्य दानवराजवन्दित, दितिसूनुपुरोहित, देवेन्द्रसपत्नगुरु, दैत्यपते पुरोहित, दैत्येन्द्रपूजितपाद पूर्वदेवार्चितपाद, प्रथमदेव पुरोधा (अस्), प्राग्दैवतपुरोहित, सुरेन्द्रशत्रुमहित, सुरेशसपत्नसचिव, (९) अनिमिषद्विडर्चित, अमरराजरिपूपनतो, अमरवैरिपुरोहित, दनुजराजपुरोहित, (१०) अनिमिषेश्वरवैरिवन्द्य, अमरशात्रवपूजिताङ्घ्रि, असुरवृन्दवन्दितपद, दानवराजपूजितपाद. (११) अदितिसूनुसपत्नसचिव असुरनायकपूजितपाद, प्रथम दैवतवन्दितपाद, प्राग्देवतापूजितपादपद्म (क), प्राग्देवताराजसुपूजिताङ्घ्रि, दितिजवृद्धिमहाय नभश्चर, वृन्दारकवैरिवृन्दवन्दितपाद वृन्दारकवैरिवृन्दवन्दितपद ।

शुक्रपितृपर्याया—भृगु महर्षिविशेष भगवद्विभूति ।

शुक्रपत्नीप०—शतपर्वा, शतपर्विका, शतपर्वी ।

शुक्रपुत्रप०—असुरपुरोहित, शण्ड ।

शुक्रपुत्रीप०—देवयानी, ययातिपत्नी, शुक्राचार्यपुत्री ।

चित्रवर्णप०—एत, कर्बुर, कल्माष, किर्मीर, चित्रम्, चित्रल, शबल ।

शिष्यप०—अन्तेवासी (इन्), अन्तेषद् (द्), छात्र, मौक, विनेय, शिष्य ।

दैत्यप०—असुर, इन्द्रारि, कश्यपापत्यम्, क्षार ?, दितिज, दितिसुत, दित्यपत्यम्, दृष्टि मुट् (ष्), देवशत्रु, दैतेय, दैत्य, पातालौका (अस), पूर्वदेव, पूर्वदेवता, पूर्वसुर, प्रथमदेव, प्रथमदेवता, प्रथमसुर प्राग्देव, प्राग्देवता, प्राक्सुर यज्ञशत्रु रसागेह, वेदविद्विट (ष्), शुक्रशिष्य, सुरद्विट् (ष्), सुरारि, हरिद्विट् (ष्) ।

दानवप०—असुर इन्द्रारि, दनुज, दनुतनुजन्मा (अन्), दनुपुत्र, दनुभव, दनुभू दनुसूनु, दानव, शुक्रशिष्य ।

कालेयपर्याया—असुर, इन्द्रारि, कालोज, कालीतनय, कालीपुत्र, कालीभव, कालीभू, कालीसूनु, कालेय, महिषासुर, महिषीज, महिषीभव, महिषीभू, महिषीसुत, माहिषेय, सुरद्विट (ष) ।

दैत्यवर्द्धकिप०—असुरशिल्पी, दैत्यवर्द्धकि, मय, सूर्य सिद्धान्तकर्ता (तृ) ।

शनिपर्याया—(२) अर्कि आर, आर्कि, ऐनि, कान, कृष्ण, कोण, कोल, क्रूर, क्रोड, क्षोड, दीर्घ, नील, पङ्गु, पौष्ण,

चन्द्ररिपु, तम खेट, तमोगुण, दन्दशूक, दनुजेश, दर्वीकर, दानवप, दानवेन्द्र, देवरिपु, देवशत्रु, दैत्यग्रह, दैत्यच्छाया, दैत्याधिभू, नागराज, फणिपति, फणीश्वर, ब्रध्नवैरी (इन्), भरणीभू, भुजङ्गम, भुजगराट (ज्), भुजगेन्द्र, भोगिनाथ, भोगिपति, मलयज, रविरिपु, विधुन्तुद, विधुमर्दी, विधुवैरी (इन्), विलेशय, विषधर, व्यालपति, व्यालपाल, शशिमर्दी (इन्), शिरोग्रह, शिरोवक्त्रम्, शीर्षदेह, सिंहिकाभू, सिंहीसूनु, सैंहिकेय, सोमशत्रु, (५) अभ्रपिशाचम्, अमृतचोर, असुरनाथ, असुराधीश, इन्दुप्रत्यर्थी (इन्), उरगाधिप, उरगाधिभू, ग्रहकल्लोल, तिमिरदीप्ति, दनुजनाथ, दानवेश्वर, नागाधिराज, निशाकरारि, पवनाशन, फणिनायक, भुजगपति, भुजगविभु, भुजङ्गनाथ, भुजङ्गमेश, भुजङ्गविभु, भुजङ्गाधिभू, विधुबाधक, शिरोधुचर, सिंहिकापुत्र, सिंहिकासुत, सिंहिकासूनु, सिंहीतनूज, सिंहीनन्दन, सोमसपत्न, (६) अभ्रपिशाचकम्, इन्दुविमर्दन, उरगाधिनाथ, उपाविभुवनु, तुहिनांशुतुद, दानवाधिपति, पवनभुक्पति, फणिनामधिप, भरणीसम्भव, भुजगनायक, रविचन्द्ररिपु, विहङ्गकल्लोल, सिंहिकानन्दन, सिंहीतनुजन्मा (अन्), स्वर्गदिवामणि, हिमकररिपु, (७) कुमुदपतिरिपु, तमोनाथसपत्न, दानववृन्दनाथ, दिवसकररिपु, फणिनामधीश्वर, सिंहिकाकायजात, सिंहिकागर्भभूत, सिंहिकादेहभव, सिंहीसहननभू, (८) कुमुदिनीपतिपात, त्रिदशसद्मदिवाकृत् (त्), धवलकरसपत्न, रविचन्द्रविमर्दन, सूर्याचन्द्रमसोर्रि, (१) देवनिकेतनभास्कर, रजनीश्वररश्मिहर, (११) विभावरीनाथमरीचिहर्ता (तृ), दाक्षायणीनाथकररश्मिहर्त्ता (तृ), (१२) निशीथिनीनाथकरदीधितिहर ।

सर्पपर्याया—अहि, नाग, सर्प, दीर्घरसनन्यन ।

अन्धकारप०—अन्धकारम्, अन्धतमसम्, अन्धातमसम्, अवतमसम्, आतति, आसक्तम्, तम, तम (अस्) (न०), तमिस्रम्, तामिस्रम्, तिमिरम्, दिगम्बर, दिनवैमर, दिनाण्डम्, ध्वान्तम्, निशावर्म(अन्), नीलपङ्कम्, भूच्छायम्, भूच्छाया, रजोवलम्, रात्रिराग, विश्वद्रू ति, वृन, शार्वरम्, सन्तमसम् ।

केतुपर्यायाः—(२) अहि, कृश, केतु, गुदम्, गुह्यम्, चूडी (इन्), तटम्, ध्वज, पुच्छम्, वक्र, शिखी (इन्), श्रीमान् (मतु०), सर्प, (३) अकच, अनिल, आह्निक, उत्पात, कबन्ध, केतन, केतव, धूमज, पताक, मृत्युभू, वारुण, विकच, विकेश, शिखाभृत् (त्), शिखावान् (मतु०), (४) अचिकुर, आश्लेषाभू, ऊर्ध्वकच, केशपाशी (इन्), ग्रहान्तिम, चन्द्राराति, तम पुच्छ, धूम्रकाय, बिलेशय, ब्रह्मपुत्र, मृत्युपुत्र, मृत्युसुत, राहुपुच्छ, विषगर्भ, वैजयन्त, (५) अश्लेषाभव, आर्द्रालुब्धक, कबन्धखग, कबन्धग्रह, वैजयन्तक, शिखिविकामी (इन्), (६) उपप्लवाकच, विभावसुसुत, (७) अकचनाकवाह, कबन्धनभश्चर, कमलजतनय, केशपाशिखचर,

१—२६ ३०—५८

हिमकरदमन, (८) विधुवर्गविमोचन।

**प्रकाशकग्रहनामनी**—सूर्य चन्द्रश्चेति द्वौ प्रकाशको ग्रहौ स्त।

**ताराग्रहनामानि**—भौम, बुध, बृहस्पति, शुक्र शनिश्चैते पञ्च ताराग्रहा सन्ति।

**तमःस्वरूपग्रहनामनी**—राहु, केतुश्चैतौ द्वौ तमःस्वरूपग्रहौ स्त।

**शुभग्रहनामानि**—अर्द्धबिम्बाधिकेन्दु, निष्पाप बुध गुरु शुक्रश्चैते शुभग्रहा सन्ति।

**अतिशुभग्रहनामानि**—बृहस्पति, शुक्र, यमक (घ) ण्टकश्चैतेऽतिशुभग्रहा सन्ति।

**पापग्रहनामानि**—अर्द्धबिम्बोनेन्दु, भौम, रवि सपापबुध शनि, राहु, केतुश्चैते पापग्रहा सन्ति।

**क्रूरग्रहनामनी**—भौम, शनिश्चैतौ द्वौ क्रूरग्रहौ स्त।

**अतिपापग्रहनामानि**—केतु, गुलिक, मान्दि राहुश्चैतेऽतिपापग्रहा सन्ति।

**गुलिकपर्याया**—अतिपापी (इन्), गुलिक प्राणहर।

**मान्दिप०**—आर्किज, आर्किपुत्र, आर्किसूनु, आर्कजनि कालसुत कृष्णात्मज, दिनकरसुत पुत्र पङ्गुज, प्रेतपुरीशज, प्रेतपुरीशसूनु, भास्वज्जभू, मन्दज, मन्दपुत्र, मन्दसुत मन्दोत्थ, मान्दि यमात्मज, शनिसुत शने सूनु, शनेस्तनूज।

**प्राणपर्याया**—असु प्राण, प्राणपद।

**ताजिकशास्त्रीयमुन्थाग्रहप०**—मन्थिहा इन्था इथहा, मुथा, मुन्था, मुथिहा।

**उपग्रहनामानि**—(१) काल, (२) परिवेष (परिधि), (३) धूम, (४) अर्द्धयाम, (अर्द्धप्रहर), (५) यमघण्टक (यमकण्टक), (६) इन्द्रधनु, (शक्रचाप), (७) गुलिक (मान्दि), (८) व्यतिपातक (व्यतीपात) (९) ध्वज (उपकेतु) इत्येते नवोपग्रहा सन्ति।

**रव्याद्यंशानां नामानि**—रव्यंश (काल), भौमांश (मृत्यु) बुधांश (अर्द्धप्रहर), गुर्वंश (यमघण्टक), शन्यंश (गुलिको मान्दिर्वा), चैते रव्याद्यंशनामानि सन्ति।

**नूतनग्रहनामानि**—(१) हर्शल (इन्द्र) (२) नेप्च्यून (वरुण) प्लोटो (?), चैते नव्यग्रहा सन्ति।

**एकयोक्त्याग्रहाणां पर्यायाः**—

**रवीन्द्वो पर्याया**—गावौ, ग्रहराजौ, तिमिरारी, दस्रौ, ध्वान्तारी, पवतौ, पीतू, पुष्पदन्तौ, पुष्पवन्तौ भगौ भासन्तौ, मेनौ, हरी, उष्णहिमकरौ।

**चन्द्रगुर्वो प०**—गौरी, सिन्धुजौ, सिन्धुमथौ।

**शार्क्यो प०**—हरिजौ।

**शेन्द्वो प०**—बुधौ।

**रवीज्ययो प०**—गोपती।

**रव्यारयो प०**—अरुणौ, काश्यपेयौ।

**तमोऽर्कयोः प०**—असुरौ, अही।

**राहुकेत्वो प०**—अर्केन्दुवैरिणौ उपप्लवौ, उपग्रहौ, तमोग्रहौ रवीन्दुरश्मिहरौ, रवीन्दुविमर्दनौ।

**भेन्द्वो प०**—भमौ।

चन्द्रेज्ययो प०—भेज्यौ ।

चन्द्राच्छ्यो प०—माच्छौ ।

गुरुभयो प०—— अनिमिषानिमिषद्विषदर्चितौ, अमात्यौ, अर्चितौ, अर्च्यौ, आचार्य्यौ, उपनिया, उपाध्यायौ, गुरू, पूजितौ, पूज्यौ, मन्त्रिणौ, महितौ, वन्दितौ, वन्द्यौ वाडवखगौ, विप्रौ, शासिनदेवदैत्यौ ।

शुक्रगुर्वो प०—भेज्यौ ।

शुक्रशन्यो प०—शुक्लाशुक्लौ, सितासितौ, सित सौरी ।

गुरुशुक्ररविभौमप०—द्विजराजखेचरा ।

सूर्यारमन्दप०—विषमग्रहा ।

रविभौमप०—राजग्रहौ ।

भौमार्कप०—भूमीसूर्यपुत्रौ ।

भौमबुधप०—भूचन्द्रसूनू ।

उच्चराशिपर्याया —उच्चम्, (पु०, न०) उच्च गृहम्, उच्चभम्, उच्चभवनम्, उच्चराशि, उच्चर्क्षम्, तुङ्गम्, तुङ्गगृहम्, तुङ्गभम्, तुङ्ग-भवनम्, तुङ्गराशि, तुङ्गर्क्षम् ।

ग्रहोच्चराशिनामानि—(१) मेष, (२) वृष, (३) मकर, (४) कन्या, (५) कर्क, (६) मीन, (७) तुला, एतेऽर्कात्क्रमत उच्चराशय सन्ति ।

ग्रहोच्चांशसख्या —दश, अष्ट, । अष्टाविंशति, पञ्चदश, पञ्च, सप्तविंशति, विंशतिश्चैते रवे क्रमादुक्तोच्चराशिषूच्चांशा सन्ति ।

नीचराशिपर्याया —अधरम्, अधरगृहम्, अधर-भम्, अधरभवनम्, अधरराशि, अधरर्क्षम्, निम्नम्, निम्नगृहम्, निम्नभम्, निम्नभवनम्, निम्नराशि, निम्नर्क्षम् नीच, नीचगृहम्, नीच-भम्, नीचभवनम्, नीचराशि, नीचर्क्षम् ।

ग्रहनीचराशिनामानि—(१) तुला, (२) वृश्चिक, (३) कर्क, (४) मीन, (५) मकर, (६) कन्या, (७) मेष, एतेऽर्कात् क्रमतो नीच-राशय, सन्ति, नीचांशास्तूच्चांशवद् बोध्या ।

मूलत्रिकोणराशिपर्याया—त्रिकोणम, त्रिकोण-गृहम्, त्रिकोणभम्, त्रिकोणभवनम्, त्रिकोण-राशि, त्रिकोणर्क्षम्, मूलत्रिकोणम्, मूलत्रिकोण-गृहम् मूलत्रिकोणभम, मूलत्रिकोणभवनम्, मूल-त्रिकोणराशि, मूलत्रिकोणर्क्षम् ।

ग्रहमूलत्रिकोणराशिनामानि——(१) सिंह, (२) वृष, (३) मेष, (४) कन्या, (५) धनु, (६) तुला, (७) कुम्भ, इत्येतेऽर्कात क्रमतो ग्रहाणा मूलत्रिकोणराशय सन्ति ।

ग्रहमूलत्रिकोणांशसख्या —विंशति, सप्तविंशति, द्वादश, पञ्च, दश, पञ्चदश, विंशतिश्चैते रवे क्रमान्मूलत्रिकोणांशा सन्ति ।

कालपुरुषाङ्गे ग्रहविभागो यथा—(१) शीर्ष, मुख च, (२) गल, (३) पृष्ठ उदर च, (४) कर अङ्घ्रिश्च, (५) कटी जघने च, (६) गुह्य मुष्क च, (७)जानू, इत्येतेषु कालपुरुष-शरीरावयवेषु एकादिसख्याक्रमतो रव्यादिग्रहाणा विभागो बोध्य ।

ग्रहधातुनामानि—(१) अस्थि, (२) रुधिरम्, (३) मज्जा, (४) त्वचा, (५) वसा, (६) वीर्यम्, (७) स्नायुश्चैते धातवोऽर्कात् क्रमात्सन्ति ।

ग्रहवर्णनामानि—(१) रक्त, (२) श्वेत, (३) लोहित, (४) हरित, (५) पीत,

(६) सित, (७) श्यामल, चैते वर्णा रवे क्रमात्सन्ति ।

दिगीशनामानि—(१) रवि (२) शुक्र, (३) मङ्गल, (४) राहु, (५) शनि, (६) चन्द्र, (७) बुध, (८) गुरुश्चैते पूर्वादीनां दिशां प्रदक्षिणक्रमेण रव्यादयोऽधिपाः सन्ति।

पुरुषग्रहनामानि—रवि, कुज, गुरुश्चैते पुरुषग्रहा सन्ति ।

स्त्रीग्रहनामनी—चन्द्र शुक्रश्चैतौ स्त्रीग्रहौ स्त ।

नपुंसकग्रहनामनी—बुध, शनिश्चैतौ क्लीवग्रहौ स्त ।

सजल (आर्द्र) ग्रहनामनी—चन्द्र शुक्रश्चैतौ सजलावार्द्रग्रहौ स्त ।

निर्जल (शुष्क) ग्रहनामानि—रवि, मङ्गल शनिश्चैते निर्जल (शुष्क) ग्रहा सन्ति।

सजलनिर्जलग्रहनामनी—बुध, गुरुश्चैतौ सजलनिर्जलग्रहावर्थात्सजलराशिगौ सजलौ निर्जलराशिगौ निर्जलाविरयाशय ।

ग्रहावस्थानामानि—(१) वृद्ध, (२) स्तनपानम, (३) बाल्यम, (४) कौमारम् (व्रतस्थितम्), (५) यौवनम् (६) मध्य, (७) अतिवृद्धश्चैतानि ग्रहाणां वयांसीनात् क्रमाज्ज्ञेयानि ।

ग्रहरसनामानि—(१) कटु (२) क्षारम्, (३) कटुक, (४) कषाय, (५) मधुर, (६) अम्ल (७) तीक्ष्णम, चैतेऽर्कात् क्रमात् रसा सन्ति ।

ग्रहद्रव्यनामानि—(१) ताम्रम्, (२) मणि, (३) सुवर्णम् (४) शुक्ति (५) रौप्यम् (६) मुक्ताफलम, (७) लौहचैतानीनात् क्रमाद् द्रव्याणि सन्ति ।

ग्रहरत्ननामानि - (१) माणिक्यम्, (२) मुक्ता, (३) प्रवालम्, (४) पुष्पराग (५) गारुत्मनम, (६) वज्रम्, (७) नीलञ्चैतानीनात क्रमाद् रत्नानि सन्ति ।

ग्रहवस्त्रनामानि—(१) स्थूलम्, (२) रम्यनूतनम् (३) अग्निहतम, (दग्ध) (४) जलहतम् (आर्द्र), (५) मध्यमम् (६) दृढम् (७) जीर्णम् चैतानीनात् क्रमाद् वस्त्राणि सन्ति ।

ग्रहक्रीडास्थाननामानि —(१) देवालय, (२) जलतटम (३) अग्निस्थानम (४) विहारस्थानम्, (५) कोशस्थानम (६) शयनस्थानम (७) उत्करप्रदेशश्चैतानीनात, क्रमात् क्रीडास्थानानि सन्ति ।

ग्रहाधिदेवनामानि—(१) अग्नि, (२) जलम्, (३) स्कन्द, (४) विष्णु (५) शक्र, (६) शची, (७) ब्रह्मा चैतेऽर्कात् क्रमादधिदेवा सन्ति।

सुखप्रदग्रहनामानि—चन्द्र, बुध, गुरु, शुक्र श्चैते ग्रहा प्रकृत्या नृणां सुखप्रदा स्यु ।

दुःखप्रदग्रहनामानि—रवि, मङ्गल शनि, राहु, केतुश्चैतेग्रहा प्रकृत्या नृणां दुःखप्रदा स्यु ।

सत्त्वगुणप्रधानग्रहनामानि—रवि, चन्द्र, गुरु श्चैते सत्त्वगुणप्रधानग्रहा सन्ति ।

रजोगुणप्रधानग्रहनामनी—बुध, शुक्रश्चैतौ रजोगुणप्रधानग्रहौ स्त ।

तमोगुणप्रधानग्रहनामनी—भौम, शनि, राहु, केतुश्चैते तमोगुणप्रधानग्रहा सन्ति।

ग्रहवर्णनामानि—(१) क्षत्रिय, (२) वैश्य,

(३) क्षत्रिय, (४) शूद्र, (५) ब्राह्मण, (६) ब्राह्मण, (७) अन्त्यजश्चेतेऽर्कात् क्रमाद् वर्णाधिपा सन्ति।

**ग्रहजातिनामानि**—(१) क्षत्रिय, (२) तपस्वी, (३) सुवर्णकार, (४) ब्राह्मण, (५) वणिक्, (जू) (६) वैश्य (७) शूद्रश्चेता अर्कात् क्रमाद् ग्रहजातय सन्ति।

**द्विपदग्रहनामनी**—गुरु शुक्रश्चैतो द्विपदौ स्त।

**चतुष्पदग्रहनामनी**—भौम शनिश्चैतो चतुष्पदौ स्त।

**पक्षिग्रहनामनी**—रवि, बुधश्चैतो विहङ्गमौ स्त।

**सरीसृपाकारग्रहनाम**—चन्द्रोऽयमरीसृपाकारोऽस्ति।

इति श्रीमुकुन्दवल्लभविरचिते ज्योतिषशब्दकोषे पञ्चमो ग्रहवर्ग समाप्त।

— ० —

## मानवर्गः।

**मानपर्याया**—इयत्ता, परिमाणम्, परिमिति, प्रमाणम्, (अजहल्लिङ्गम्) प्रमिति, मानम्।

**मानार्थवाचकशब्दा**—(१) पौतवम् (पोतवम्), (२) द्रुवयम्, (३) पाय्यम्, चेति त्रयो मानार्थवाचकशब्दा स्यु।

तदुक्तममरेण—

'यौ (पौ) तव द्रुवय पाय्यमिति मानार्थक त्रयम्' इति अम० २।९।८५

**मानभेदा**—(१) तुलामानम्, (२) प्रस्थमानम्, (३) अङ्गुलिमानम्, चेति मानस्य त्रयो भेदा स्यु।

अत्राहामरसिंह—

'मान तुलाङ्गुलिप्रस्थै' इति अम० २।९।८५

हेमचन्द्रेण तु स्पष्टमुक्तम्—

'तुलाद्यं पौ (यौ) तव मान द्रुवय कुडुवादिभिः। पाय्य हस्तादिभि' इति अभि० चि० ४।२००। ८८३

**मानप्रभेदाः**—(१) उन्मानम्, (२) परिमाणम्, (३) प्रमाण चेति मानस्य त्रय. प्रभेदा. स्यु।

तदुक्तममरस्यामरविवेकविवृतौ—

'ऊर्ध्वमान किलोन्मान, परिमाण तु सर्वत.। आयामस्तु प्रमाण, स्यात्सख्या भिन्नार्थसर्वत॥' इति। अमरस्यामरविवेकटीकायाम् ६।८५।२३१।

**उन्मानपर्याया**—उन्मानम्, ऊर्ध्वमानम्, तुलामानम्, वट्ट' 'वाट' इति च भाषा।

**परिमाणप०**—परिमाणम्, प्रस्थमानम्, सर्वतोमानम्।

**प्रमाणप०**—अङ्गुलिमानम्, आयाम, प्रमाणम्।

**शास्त्रीयमाने तुलामानभेदा**[1]—(१) गुञ्जा, (२) माष, (३) कर्ष, (४) पलम्, (५) सुव-

१–२२ २३–४७

(१) तदुक्त नामलिङ्गानुशासने—'गुञ्जा पञ्चाद्यमाषक.। ते षोडशाऽक्षकर्षोऽस्त्री पल कर्षचतुष्टयम्। सुवर्णविस्तौ 'हेम्नोऽक्षे' कुरुविस्तस्तु तत्पले॥ तुला स्त्रियां पलशत भार स्याद्विंशतिस्तुला। आचितो दश भारा स्यु शाकटो भार आचित॥ कार्षापण कार्षिक स्यात्कार्षिके ताम्रिके पण।' इति नामलिङ्गानुशासने सुधाव्याख्यायाम् ६।८५, ८६,८७,८८। ३३०।

(शेष पृष्ठ ५९ पर)—

र्णम् (६) कुरुविस्त, (७) तुला, (८) भार, (९) आचित, (१०) शाकटभार, (११) राजतकर्ष, (१२) ताम्रकर्ष-चेत्येते तुलामानभेदा स्यु ।

गुञ्जापर्याया —काकचिञ्चा, काकचिञ्चि काकचिञ्ची, कृष्णला, गुञ्जा रक्तिका । 'घु घु ची' इति भाषा ।

माषप०—माष, माषक, हेम, धान्यक, 'मासा' इति भाषा' ।

तदुक्तम्—

'दशार्द्धगुञ्ज प्रवदन्ति माष माषाह्वयै षोडश भिश्च कर्षम् ।' इति लीलावती ।

'गुञ्जाभिर्दशभिर्माप शाणो माषचतुष्टयम् ।' इति वैद्यकपरिभाषा । श० चि० पृ ६०१ स्त०१ ।

'षड्भिस्तु रक्तिकाभि स्यान्माषको हेमधान्यका। माषो गुञ्जाभिरष्टाभि सप्तभिर्वा भवेत्क्वचित् ।।' इति भावप्रकाशे च ५।६।३०६

कर्षप०—अक्ष, उदुम्बरम्, करमध्य, कष, कवलग्रह, किञ्चित्पाणि तिन्दुकम् पाणितलम्, पाणिमानिका, पिचु, बिडालपदकम्, षोडशिका, सुवर्णम् हसपदम् ।' इति ।

तदुक्तम्—

'ते षोडशाक्ष कर्षोऽस्त्री इत्यमरसु० व्या० ३।८६।३३० भिषजा व्यवहारे तु कष स्यात्तोल कद्वयम् ।' इति श० चि० २।५१९ अक्षोनिर रक्तिका । 'राजनिर्घंटुमते—'कर्ष स्याद्दश माषक ।' इति श० चि० १ ५१९

कोलद्वय तु कर्षं स्यात्स प्रोक्त पाणिमानिका। अक्ष पिचु पाणितल किञ्चित्पाणिश्च तिं दुकम् ।। बिडालपदक चैव तथा षोडशिका मता। करमध्यो हसपद सुवर्णं कवलग्रह ।। उदुम्बर च पर्यायै कर्षमेव निगद्यते ।' इति भावप्रकाश ५।८,९,१०।३८९

पलप०—आम्रम्, कर्षचतुष्टयम्, चतुर्थिका, निकुञ्चक, पलम्, प्रकुञ्च, बिल्वम्, मुष्टि, मुष्टी, षोडशी, सुपाट ।

तदुक्तम्—

'शुक्तिभ्यां च पल ज्ञेय मुष्टिराम्र चतुर्थिका । प्रकुञ्च षोडशी बिल्व पलमेवात्र कीर्त्यते ।।' इति भावप्रकाश । ५।११।३८ ।

'तत्तुशास्त्र तोलकचतुष्टयम् । वैद्यके अष्टतोलकम् । लौकिके साष्टरक्तिद्विमाषकतोलकमित यम् ।। यथा—'पल तु लौकिकैर्मानै साष्टरक्ति द्विमाषकम् । तोलकत्रितय ज्ञय ज्योतिर्शे स्मृतिसम्मतम् ' इति तिथितत्वे ।।' पल सुवर्णाश्च-

१–२२ २३–४४

—(पृष्ठ ५८ से)

न्यास —

| | | |
|---|---|---|
| ५ गुञ्जा = १ माष । | १६ माषा = १ कर्ष । | ४ कर्षा = १ पलम् । |
| सुवर्णस्य कर्ष— | १६ माषा = १ सुवर्ण । | ४ सुवर्णा = १ कुरुविस्त । |
| १०० पलानि = १ तुला । | २० तुला = १ भार । | १० भारा = १ आचित । |
| १ आचित — १ शाकटभार । | १६ माषा = १ राजतकर्ष । | ,, = १ ताम्रकर्ष । |

स्वारः पञ्च वापि प्रकीर्तिताः ।' इति श-चि० स्त १पृ ६४ ।

सुवर्णप०—विस्त., सुवर्णम् ।

अत्राह हेमचन्द्रः—

'विस्त. सुवर्णो हेम्नोऽक्षे' इत्यभि चि० ३।२०१। ८८४

कुरुविस्तप०—कुरुविस्त , सुवर्णपलम् ।

तुलाप०—तुला, पलशतम् ।

भारप०—भर., भार. ।

आचितप०—आचित , आचिति', शलाटः, शाकट., भार. शाकटीनः ।

तदुक्तम्—

'कुरुविस्तस्तु तत्पले ॥ तुला पलशतं तासां विंशत्या भार आचितः । शाकटः शाकटीनश्च शलाटस्ते दशाचितः ।' इत्यभि० चि० ३।२०१। ८८५

'आचितो दशभाराः स्युः' इति हलायुधः ।

'भारैर्दशभिराचितिः ।' इति रत्नकोषः । 'आचितः शकटोन्मेये पलानामयुतद्वये ।' इति च मेदिनी ।

इत्यमरसु० व्या० ६।३३१।८७

राजतकर्षप०—कार्षापणः, कार्षापणकः, कार्षिकः, राजतकर्षः ।

उक्तञ्च—

'कार्षापणः कार्षिकः स्यात्' इत्यमरसु० व्या० ६।३३१।८८।

ताम्रकर्षप०—ताम्रकर्षः, ताम्रिक.. पणः ("पैसा" इ० भा०) ।

उक्तञ्च—

'कार्षिके ताम्रिके पणः ।' इत्यम० सु० व्या० ६।३३१।८८।

मागधीयमाने 'तुलामानभेदाः'—(१) त्रसरेणु , (२) मरीचिः, (३) राजिका, (४) सर्षप., (५) यवः, (६) गुञ्जा, (७) माषकः, (८) शाण., (९) कोलः, (१०) कर्षः ।

---

१-१७ १८-३४

(१) मागधमानमाह भावमिश्रः—'त्रसरेणुर्बुधैः प्रोक्तस्त्रिंशता परमाणुभिः । त्रसरेणुस्तु पर्यायनाम्ना वंशी निगद्यते ॥ जालान्तरगतैः सूर्यकरैर्वंशी विलोक्यते । षड्वंशीभिर्मरीचिः स्यात्ताभिः षड्भिश्च राजिका ॥ तिसृभी राजिकाभिश्च सर्षपः प्रोच्यते बुधैः । यवोऽष्टसर्षपैः प्रोक्तो गुञ्जा स्यात्तच्चतुष्टयम् ॥ षड्भिस्तु रक्तिकाभिः स्यान्माषको हेमधान्यकौ । माषैश्चतुर्भिः शाण. स्याद्धरणः सः निगद्यते ॥ टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते । क्षुद्रको वटकश्चैव द्रंक्षणः स निगद्यते ॥' इति भावप्रकाशः ५।३८६। ३,४,५,६,७।

न्यासः—

३० परमाणवः=१ त्रसरेणुः ।
६ वंशयः=१ मरीचिः ।
६ मरीचयः=१ राजिका ।
३ राजिकाः=१ सर्षपः ।
८ सर्षपाः=१ यवः ।
४ यवाः=१ गुञ्जा ।
६ गुञ्जाः=१ माषकः ।
४ माषाः=१ शाणः ।
२ शाणौ=१ कोलः ।
२ कोलौ=१ कर्षः ।

त्रसरेणुपर्याया —त्रसरेणु, वशी ।
मरीचिप०—किरण, भानु मरीचि, शेषस्तु रवौ ।
राजिकाप०—असुरी, कृष्णिका, क्षव, क्षता-भिजनन, राजसर्षप, राजिका।

तदुक्तम्—

'क्षव क्षुताभिजनना राजिका राजसर्षप । असुरी कृष्णिका चासौ इत्यभि० चिं० ३।१०१। ४१८-१९।
सर्षपप०—श्वेतसर्षप, सर्षप, सिद्धार्थ ।

तदुक्तम्—

'अथ सिद्धार्थ श्वेतसर्षप ॥' इत्यभि० चिं० ४२१० ११८०।
यवप०—तीक्ष्णशूक, यव, हयप्रिय ।

तदुक्तम्—

'यवो हयप्रियस्तीक्ष्णशूक' इत्यभि० चिं० ४। २६८।११७०

शाणपर्याया —टङ्क, धरण, निष्क, शाण, शाणक ।

तदुक्तम्—

'तै (माषै) श्चतुर्भिस्तु शाणक । टङ्कोऽस्त्री धरणम इति कल्पद्रौ १६०।५१५ १६।
कोलप०—कोल, क्षुद्रक, द्रक्षण वटक ।

तदुक्तम्—

शाणद्वय कोलस्तु द्रक्षण । क्षुद्रको वटक इति कल्पद्रौ १६०।५१६
कालिङ्गीयमान तुलामानभेदा —(१) गौर (श्वेत) सर्षप, (२) यव, (३) गुञ्जा, (४) वल्ल (५) माष, (६) शाण, (७) गद्याणक, (८) कर्ष, (९) पलम्, (१०) कुडव ।
शास्त्रीयमाने प्रस्थमानभेदा[1]—(१) मुष्टि, (२) कुडव, (३) प्रस्थ, (४) आढक, (५) द्रोण, (६) शूर्प, (७) खारी, (८) प्रव

१-१७ १८-३४

(१) प्रस्थमानमाहामर – अस्त्रियामाढकद्रोणौ खारी वाहो निकुञ्चक । कुडव प्रस्थ इत्याद्या परिमाणार्थका पृथक ।' इत्यमरामरविवेकटीकायाम ।९। २३२।८८ ६ कुडव इत्येक पावशेर इति ख्यातस्य।' कुडप इति मुकुट । कुडवो वा । कुडवप्रमाणन्तु मृद्वेणुकाष्ठलोहादे पात्र यच्चतुरङ्गुलम । विस्तीर्ण च तथोच्च च तन्मान कुडव वदेत । प्रस्थ ' इत्येक सेर इति ख्यातस्य । माधवाद्वाच्छूर्पभाराविग्रह । यदाहु – पल प्रकुञ्चक मुष्टि कुडवस्तच्चतुष्टम । चत्वार कुडव प्रस्थश्चतु प्रस्थ तथाढकम् ॥ अष्टाढको भवेद्द्रोणो द्विद्रोण शूर्प उच्यते । सार्द्धशूर्पो भवेत्खारी द्विशूर्पी द्रोण्युदाहृता ॥ तमेव भार कानीयाद्वाहो भारचतुष्टयमिति ।" अन्यच्च । अष्टमुष्टिभवेत्किञ्चित्किञ्चिदष्टौ तु पुष्कलम । पुष्कलानीति चत्वारि आढक परिकीर्तित । चतुराढको भवेद द्रोण इत्येत मानलक्षणम्' इत्युक्तम ॥' इत्यमरस्यामरविवेकटीकायाम् ९।२३३।८९

न्यास —

४ मुष्टय =१ कुडव (कुडप)। ४ कुडवा =१ प्रस्थ ।
४ प्रस्था =१ आढक । ४ आढका =१ द्रोण ।
४ द्रोणा =१ खारी। ५ खार्य्य =१ प्रवर्त्त । (प्रवर्तिका) ।
२० खार्य्य =१ वाह (भविका)

तिका, (९) वाह ।

मुष्टिपर्याया —१ मुष्टि (पु० स्त्री०) मुष्टी मुचुटि, मुचुटी मुस्तु, सग्राह ।

तदुक्तम्—

'सम्पिण्डिताङ्गुलि पाणिर्मुष्टिर्मुस्तुर्मुचुट्यपि ।' इत्यभि० चि० ३।१३७।५९७।

मुष्टिवाचकशब्दा —आम्रम्, चतुर्थिका, निकुञ्चकम्, पलम्, प्रकुञ्चकम्, बिल्वम्, मुष्टि, षोडशी, सुपाट ।

उदमानप०—उदमान, आढकस्य पञ्चाश त्तमो भाग ।

तदुक्तम्—

'कुल्या स्यादष्टभिर्द्रोणैर्द्रोणपादेन चाढक । अतोऽद्धशतिको भाग उदमानउदाहृत ॥' इति शा० चि० २।३५७

कुडवपर्याया —अर्द्धशरावक, अष्टमानम् कुटप कुडप, कुडव पाद, प्रस्थतुर्यांश । 'माणा' इति। पौवा' इति च भाषा।

प्रस्थप०—कुडवचतुष्टयम् प्रस्थ, शेटक, शेर-सेर,। "पाथा' इति। 'सेर' इति च भाषा।

आढकप०—आढक, कास्यपात्र, चतुःषष्टिपल, द्रोणचतुर्थांश, प्रस्थचतुष्टयम्, भाजनम्।

द्रोणप०—अर्मण आढकचतुष्टयम्, उन्मानम्, कलश, खारीतुर्यभाग, घट, द्रोण, नल्वण, राशि ।

खारीप०—खार, खारि, खारिका, खारी, द्रोण चतुष्टयम्, प्रवर्तिकपञ्चमाश, वाहविंशत्यश, षण्णवत्यधिका चतु सहस्रपालिका ।

प्रवर्त्तप०—खारिपञ्चकम्, प्रवर्त्त, प्रवर्तिका।

वाहप०—खारिविंशम्, वाह ।

मागधीयमाने प्रस्थमानभेदा —(१) कर्ष, (२)

---

१-१५

१ मागधीयमाने तुला (प्रस्थ) मानस्य

ज्ञात —

२ कर्षौ =१ शुक्ति ।

२ शुक्ती=१ पलम ।

२ पले =१ प्रसृति ।

२ प्रसृती =१ अञ्जलि ।

२ अञ्जली=१ मानिका । (कुडव)

२ मानिके=१ प्रस्थ ।

४ प्रस्था =१ आढक ।

४ आढका =१ द्रोण ।

२ द्रोणौ=१ शूर्प ।

२ शूर्पौ =१ द्रोणी।

४ द्रोण्य =१ खारी।

२००० पलानां द्विसहस्र=१ भार ।

१०० पलानां शत= १ तुला ।

१६-३१

अथवा—

४ माषा=१ टङ्क ।

४ टङ्का =१ अक्ष ।

४ अक्षा =१ बिल्वम् ।

४ बिल्वानि=१ कुडव ।

४ कुडवा =१ प्रस्था ।

४ प्रस्था =१ आढक ।

४ आढका =१ राशि ।

४ राशय =१ गोण्य ।

४ गोण्य =१ खारि ।

शुक्ति, (३) पलम्, (४) प्रसृति, (५) अजलि, (६) कुडव, (७) मानिका, (८) प्रस्थ, (९) आढक, (१०) द्रोण, (११) शूर्प, (१२) द्रोणी. (१३) खारी, (१४) भार, (१५) तुला, चेति मागधीयमाने प्रस्थमानभेदा ।

कर्षपर्याया —कर्ष, कोलद्वयम् ।

शुक्तिप०—अर्द्धपलम्, अष्टमिका शुक्ति ।

प्रसृतिप०—अर्द्धाञ्जलि, प्रसृतम्, प्रसृति ।

अञ्जलिप०—अञ्जलि, अर्द्धशरावक, अष्टमानम्, कुडव ।

मानिकाप०—अष्टपलम्, शराव ।

शूर्पप०—कुम्भ, गोणी, चतुःषष्टिशरावक भार, शूर्प ।

द्रोणीप०—गोणी, द्रोणी, वाह ।

भारप०—पलद्विसहस्रम्, भर भार ।

तुलाप०—तुला पलशतम् ।

कालिङ्गीयमाने प्रस्थभेदा —(१) कुडव, (२) प्रस्थ (३) आढकश्चेत्यादय पूर्ववन्मता ।

चतुष्पलं कुडय स्यात् ।

तदुक्तम्—

'चतुष्पलैश्च कुडव प्रस्थाद्या पूर्ववन्मता । इति भावप्रकाशे ५।३८७।२७ ।

१–११

१२–२२

उक्त च—

१ 'स्यात्कर्षाभ्यामर्द्धपल शुक्तिरष्टमिका तथा ।। शुक्तिभ्या च पल ज्ञेय मुष्टिराम्र चतुर्थिका । प्रकुञ्च षोडशी बिल्व पलमेवात्र कीर्त्यते ।। पलाभ्या प्रसृतिर्ज्ञेया प्रसृत च निगद्यते । प्रसृतिभ्यामञ्जलि स्यात्कुडवोऽर्द्ध शरावक ।। अष्टमान च स ज्ञेय कुडवाभ्या च मानिका । शरावोऽष्टपल तद्वज्ज्ञेयमत्र विचक्षणै ।। शरावाभ्या भवेत्प्रस्थश्चतु प्रस्थैस्तथाढक । भाजन कास्य पात्र च चतु षष्टिपलश्च स ।। चतुर्भिराढकैर्द्रोण कलशो नल्वणोऽर्मण । उन्मान च घटो राशिर्द्रोणपर्यायसज्ञित ।। द्रोणाभ्या शूर्पकुम्भौ च चतु षष्टिशरावक । शूर्पाभ्या च भवेद् द्रोणी वाहो गोणी च सा स्मृता । द्रोणीचतुष्टय खारी कथिता सूक्ष्मबुद्धिभि । चतु सहस्रपलिका षण्णवत्यधिका च सा ।। पलाना द्विसहस्र च भार एक प्रकीर्तित । तुलापलशत ज्ञेय सर्वत्रैवैष निश्चय ।। माषटङ्काक्षबिल्वानि कुडव प्रस्थमाढकम् । राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम् इति भा प्र ७।३८७।१० स १६ पा ।

२. मतान्तरे तुलामानस्य

न्यास —

४ मुष्टय = १ कुडव ।
४ कुडवा = १ प्रस्थ ।
४ प्रस्था = १ आढक ।
८ आढका = १ द्रोण ।
२ द्रोणौ = १ शूर्प ।
१।। सार्द्धशूर्प = १ खारी ।
४ भारा = १ वाह ।

३ पुनर्मतान्तरे तुलामानस्य

न्यास —

८ मुष्टय = १ किञ्चित ।
८ किञ्चित् = १ पुष्कलम् ।
४ पुष्कलानि = १ आढक ।
४ आढका = १ द्रोण ।

**अङ्गुलमानभेदा**[1]—(१) रज (स्), (२) परमाणु, (३) त्रसरेणु, (४) ध्वसी (वशी), (५) वालाग्रम्, (६) लिक्षा, (७) यूका, (८) यव, (९) अङ्गुलम्, (१०) वितस्ति, (११) हस्त, (१२) चाप, (दण्ड), (१३) क्रोश, (१४) योजनम् ।

**रज पर्याया**—धूलि, धूली, पांशु, पांसु रज (स्), रेणु ।

**ध्वसीप**[1]०—त्रसरेणु, ध्वसी, वशी ।

**वालाग्रप**०—कचाग्रम् वालाग्रम् त्रसरेणत्रष्टकम् ।

**लिक्षाप**०—यूकाण्ड, रिक्षा, लिख्या, लिक्षा लिक्षिका ।

**यूकाप**०—केशकीट, यूका, षट्पदी ।

---

१–७  ८–११

(१) उक्तञ्च—'जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रज । प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ।' इति । वैद्यकपरिभाषया त्रिंशत्परमाणुपरिमाणं ध्वसी । 'जालान्तरगते सूर्यकरे ध्व (व) सी (शी) विलोक्यते । त्रसरेणुस्तु विज्ञेयस्त्रिंशता परमाणुभि ॥' इति श० चि० २।१२२०

मनुस्मृतौ तु—'त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणत ।' इति मनु । इति श० चि० १।१५६

अपि च—'जालान्तरगते भानौ यच्चाणु दृश्यते रज । तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिश्च सर्षप ।' इति श० चि० १।१५६

अस्य न्यास यथा—

६ षड्भि परमाणुभि =१ त्रसरेणु ।  ८ त्रसरेणुभि =१ कचाग्रम् ।
८ कचाग्रै =१ लिक्षा ।  ८ लिक्षाभि =१ यूका ।
८ यूकाभि =१ यव ।  ८ यवोदरै =१ अङ्गुलम् ।
१२ अङ्गुलै =१ वितस्ति । (शङ्कु)  २ वितस्तिभ्यां वा २४ अङ्गुलै =१ हस्त । (किष्कु),
२ हस्ताभ्यां =१ गज । (हस्तद्वय)  ४ हस्तै =१ चाप (दण्ड),
१० हस्तै =१ वश  ४०० चतु सहस्रं हस्तै =१ नल्व ।
२००० द्विसहस्रमितैर्धनुभि =१ क्रोश ।  २ द्वाभ्यां क्रोशाभ्यां =१ गव्यूति ।
४ चतु क्रोश्या =१ योजनम् ।

मतान्तरे तु—

१ रज =१ परमाणु ।  ३० परमाणु =१ त्रसरेणु ।
८ त्रसरेणव =१ लिक्षा ।

पुनर्मतान्तरे—

१ परमाणु =१ रज ।  ४ परमाणव =१ लिक्षा ।  ६ लिक्षा =१ सर्षप ।

यवप० अश्वप्रिय, तीक्ष्णशूक, यव ।

इह षड्भिर्गौरसर्षपैः परिमित यवपरिमाणमुक्त मनुना—'सर्षपा षडयवो मध्य 'मध्यो न स्थूलो नापि सूक्ष्म' यवो भवतीत्यर्थ ।

अपि च—

'जालान्तरगते भानौ यच्चाणुर्दृश्यते रज ।
तैश्चतुर्भिर्भवेल्लिक्षा लिक्षाषड्भिश्च सर्षप ।
षटसर्षपैर्यवस्त्वेको गुञ्जैका तु यवैस्त्रिभि ।'
इति श० चि० १।१५

अङ्गुलप० अगुलम्, शकुद्वदशभाग, हस्त चतुर्विशत्यश, अष्टसख्ययवोदरमानम् ।

तदुक्तम्—

अष्टभिस्तैर्भवेज्ज्यैष्ठ मध्यम सप्तभिर्यवै, कन्यस षडिभरुद्दिष्टमङ्गुल मुनिसत्तम ।।' इति । मान तु पार्श्वेन—'षड्यवा पार्श्वसम्मिता ।' इति कात्यायनदर्शनात् । इति श० चि० १।२५ ।

वितस्तिप० कनिष्ठया सह विततोऽङ्गुष्ठ, द्वादशागुलपरिमाणम्, वितस्ति, हस्तार्द्धम्, शकुतुल्यम्, 'वालिस्त' इति भाषा ।

हस्तप०—कर, किष्कु, पञ्चशाख, पाणि, शय, हस्त । 'हाथ'' इति भाषा ।

तदुक्तम्—

'यवाना तण्डुलरेकमगुल चाष्टभिर्भवेत् । अर्दोर्धयाजितैर्हस्तश्चतुर्विशदभिरगुले । इति कालिकापुराणे' इति श० चि० २।१००२।

गजप०—गज, हस्तद्वयम्, षट्त्रिंशदगुलपरिमितम् ।

चापप०—चाप, धनु, मतान्तरे तु 'दण्ड' ।

१–२८

तदुक्तम्—

चतुर्विशागुलो हस्तस्तच्चतुष्क धनु स्मृतम ।'
इति श० चि० १।१२८६

वशप०—वश, हस्तदशकम्, 'वाँस' इति भाषा ।

उक्त च—

'तथा कराणा दशकेन वश ।' इति लीलावत्याम् ।

नल्वप०—किष्कुचतु शतम्, नल्व, हस्तचतु – शतम् ।

उक्त च—

नल्व किष्कुचतु शतम् ।' इत्यमर १८।११६ अम० सु० व्या० 'कात्यस्तु' 'नल्व हस्तशतम्' इत्याह । भट्टक्षीरस्वामी तु 'नल्व विंशहस्तशतम्' इति दर्शितवान् । मुकुटस्तु—'नल्वो विंश हस्त शतम्' इति च दर्शितवान् इत्यमर सु० व्या० टिप्पण्याम् १८।११६

क्रोशप०—क्रोश क्रोशम्, क्रोशी, दण्डसहस्रद्वितयम्, सहस्रधनु, 'कोस' इति भाषा ।

उक्त च—

धन्व तर सहस्र तु क्रोश' इति वाचस्पति' इत्यमरसु० व्या० २।१।११५।१८ 'स्यादङ्गुल तैर्द्वादशभिर्वितस्तिस्तद्युगेन च । हस्तो हस्तैश्चतुर्भिः स्याद्धनुर्दण्डश्च तै पुन । द्विसहस्रमितै क्रोश क्रोशाभ्या गोरुत पुन । गव्यूत च स्त्रियां गव्या द्वयोर्गव्यूतिरित्यपि ।' इति कल्पद्रौ २०।१०३।

गव्यूति प०—क्रोशद्वयम्, क्रोशयुगम्, गव्या, गव्यूतम्, गव्यूति, गोमतम्, गोरुतम्, द्विसहस्रधनु । 'दो कोस ।' इति भाषा ।

२६–५६

उक्त च—

'गव्यूति स्त्री क्रोशयुगम्' इत्यमर । सु० व्या० २।१।११५।१८ 'धन्वन्तरसहस्र तु क्रोश क्रोशद्वय पुन । गव्यूत स्त्री तु गव्यूतिर्गोरुत गोमत च तत्।' इति वाचस्पति । धनुर्हस्तचतुष्टयम् । द्वाभ्या धनु सहस्राभ्या गव्यूति पुंसि भाषित ।' इति शब्दार्णव ।' इत्यमरसु० व्या० २।१।११६। १८।

योजनप०—चतु क्रोशी, क्रोशचतुष्टयम्, योजनम् ।

उक्त च—

'योजन परमात्मनि । चतुष्क्रोश्या च योगे च' इति मेदिन्याम् ६१ ११-१२।

दिनमानपर्याया.—अहर्मिति, दिनप्रमाणम्, दिनमानम्, दिनमिति, दिवसप्रमाणम् दिवसमानम्, दिवसमिति, द्युप्रमाणम्, द्युमानम, द्युमिति, वासरप्रमाणम्, वासरमानम्, वासरमिति,

दिनार्द्धप०—अहर्दलम्, घस्रार्द्धम् दिनखण्डम्, दिनदलम्, दिनशकलम्, दिनार्द्धम्, दिवसखण्डम्, दिवसदलम्, दिवसशकलम् दिवसार्द्धम् वासरखण्डम्, वासरदलम्, वासरशकलम्, वासरार्द्धम् ।

रात्रिमानप०—रजनीप्रमाणम्, रजनीमानम्, रजनीमिति रात्रिप्रमाणम्, रात्रिमानम् रात्रिमिति, निशाप्रमाणम्, निशामानम्, निशामिति, शर्वरीमानम् तमीमानम् ।

अर्द्धरात्रिमानप०—अर्द्धरात्र, निशीथ, निशीथमानम् ।

रात्र्यर्द्धप०—निशाखण्डम्, निशादलम्, निशार्द्धम्, निशाशकलम्, रात्रिखण्डम् रात्रिदलम्, रात्रिशकलम्, रात्र्यर्द्धम् शर्वरीखण्डम्, शर्वरीदलम् शर्वरीशकलम् शर्वर्यर्द्धम् ।

कालप० -अनेहा, काल दिष्ट, शेषस्तु कालवर्गे।

कालमानप०—अनेहोमानम्, कालमानम, दिष्टमिति, समयप्रमाणम् ।

कालभेदौ—(१) मूर्त, (२) अमूर्तश्चेत्येतौ कालस्य द्वौ भेदौ स्याताम् ।

तदुक्तम्—

प्राणादि कथितो मूर्तस्त्रुट्याद्योऽमूर्तसज्ञक ।' इति सूर्यसिद्धान्ते १।११॥

कालप्रभेदा.—(१) ब्राह्मम्, (२) दैवम्, (३) मानव चैते कालस्य त्रय प्रभेदा स्यु ।

मूर्तकालभेदा —(१) निमेष. (२) काष्ठा,

१–२१ २२–४२

(१) मूर्तकालभेदानां

न्यास —

१८ निमेषै =१ काष्ठा ।

३० काष्ठाभि =१ कला ।

३० कलाभि =१ घटिका ।

२ घटिकाभ्या=१ मुहूर्त ।

३० मुहूर्त.=१ दिनम् । (नाक्षत्रम्)-

मूर्तकालान्यभेदानां

न्यास —

१० गुर्वक्षरै =१ असु (प्राण),

६ असुभि =१ पलम् ।

६० पलै =१ घटी।

६० घटीभि =१ दिनम् (नाक्षत्रम्),

३० दिनै =१ मास ।

१२ मासै =१ वर्षम् ।

(३) कला, (४) घटिका, (५) मुहूर्त (६) दिनम् (नाक्षत्रम्), चैते मूर्तकालस्य षड् भेदा स्यु ।

मूर्तकालस्यान्यभेदा —(१) गुर्वक्षरम्, (२) असु, (३) पलम्, (४) घटी, (५) क्षण, (६) दिनम् (नाक्षत्रम्), (७) मास, (८) वर्षम्, चैते मूर्तकालस्यान्यभेदा स्यु ।

तदुक्तम्—

'योऽक्ष्णोर्निमेषस्य खरामभाग स तत्परस्तच्छत-भाग उक्ता । त्रुटिर्निमेषैर्धृतिभिश्च काष्ठा तत्त्रि-शता सद्गणकै कलोक्ता । त्रिंशत्कलाऽक्षी घटिका क्षण स्यान्नाडीद्वय तै खगुणैर्दिन च । गुर्वक्षरै खेन्दुमितैरसुस्तै षड्भि पल तैर्घटिका-रसपड्भि । स्याद्वा घटीषष्टिरह खरामैर्मासो दिनैस्तैर्द्विकुभिश्चवर्षम् । इति सिद्धान्तशिरो-मणौ ।

अपि च—

'षड्भि प्राणैर्विनाडी स्यात्तत्षष्ट्या नाडिका स्मृता । नाडीषष्ट्या तु नाक्षत्रमहोरात्र प्रकी-र्तितम् । तत्त्रिंशता भवेन्मास , इति ।' मासैर्द्वा दशभिर्वर्ष दिव्य तदह उच्यते । इति च- सू सि. १।११, १२, १३ ।

मासभेदा —(१) चान्द्र , (२) सौर , (३) सावन (४) नाक्षत्र (आर्क्ष), चैते मासस्य चत्वारो भेदा स्यु ।

तदुक्तम्—

'दर्शावधि माममुशन्ति चान्द्रं सौर तथा भास्कर-राशिचारात् । त्रिंशद्दिन सावनसंज्ञमार्या नाक्षत्र मिन्दोर्भगणाश्रयाच्च ।' इति ग्रन्थान्तरे ।

'तत्त्रिंशता भवेन्मास सावनोऽर्कोदयैस्तथा । ऐन्दवस्तिथिभिस्तद्वत्सक्रान्त्या सौर उच्यते । मासैर्द्वादशभिर्वर्ष दिव्य तदह उच्यते ।' इति च सू सि १।१२, १३ ।

चान्द्रमासभेदौ—(१) दर्शान्त , (२) पूर्णिमान्त-श्चैतौ चान्द्रमासस्य द्वौ भेदौ स्याताम् ।

तदुक्तम्—

'चान्द्रस्तु द्विविधो मासो दर्शान्त पूर्णिमान्तिम । देवार्थे पौर्णमास्यन्तो दर्शान्त पितृकर्मणि ।' इति ग्रन्थान्तरे ।

वर्षभेदा —(१) ब्राह्मम्, (२) दिव्यम् (दैवम्), (३) पित्र्यम्, (पैत्रम्), (४) प्राजापत्यम् (मानवम्), (५) गौरवम् (बार्हस्पत्य, जैवम्), (६) सौरम्, (७) सावनम्, (८) चान्द्रम् ऐन्दवम्), (९) आर्क्षम् (नाक्षत्रम्), चैतानि वर्षाणा नवमानानि स्यु ।

तदुक्तम्—

'ब्राह्म दिव्य तथा पित्र्य प्राजापत्य (मानव) गुरोस्तथा (जैवम्) । सौर च सावन चान्द्रमार्क्ष मानानि वै नव ।' इति सू सि ।

अपि च—

एव पृथङ्मानव दैव-जैव-पैत्रा-ऽऽर्क्ष-सौरै-न्दव-सावनानि । ब्राह्म च काले नवम प्रमाण ग्रहास्तु साध्या मनुजै स्वमानात् । ज्ञेय विमिश्र तु मनु-ष्यमान मानैश्चतुर्भिर्व्यवहारवृत्ते । एवं सौर-चान्द्र-सावन-नाक्षत्रमानैश्चतुर्भिरेभिर्मिश्रितैर्मनु-ष्यमान ज्ञेयम् । इति सि शि ।

तत्रैव सौरादिमासप्रयोजनमुक्तम्—

'वर्षायनर्तुयुगपूर्वकमत्र सौरान्मासास्तथा च तिथयस्तुहिनांशुमानात् । यत्कृच्छ्रसूतकचिकित्सितवासराद्य तत्सावनाच्च घटिकादिकमार्क्षमानात् ।' इति सि शि ।

प्राजापत्यब्राह्ममानयोर्ज्ञानमित्थम

'मन्वन्तरव्यवस्था च प्राजापत्यमुदाहृतम् । न तत्र द्युनिशोर्भेदो ब्राह्म कल्पस्ततो नृणाम् ।' इति सू सि. ।

इह ग्रहगणिते 'विकलादिसज्ञा —(१) विकला, (२) कला, (३) अश (भाग), 'त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते ।' इति श चिं ११४२० । (४) राशि, (५) भगण-इत्येता विकलादिसज्ञा स्यु ।

अत्र कलौ शककारकनृपनामानि—(१) युधि-

१—७ ८—१५

(१) विकलादिसज्ञाक्रममाह भास्कर — क्षेत्रे समाधेन समांविभागा स्युश्चक्रराश्यंशकलाविलिप्ता ।' इति सिद्धान्तशिरोमणौ ।

(१) विकलादिसज्ञामान—

न्यास —

६० विकला =१ कला । ६० कला =१ अश ।

३० अशा =१ राशि । १२ राशय =१ चक्रम ।

उक्त च—

विकलाना कला षष्ट्या तत्षष्ट्या भाग उच्यते । तत्त्रिंशता भवेद्राशिर्भगणो द्वादशैव ते' इति सू० सि० ११२८ ।

(२) शककारकनृपाणा मानाना

न्यास —

| नृपतय — | तद्वर्षाणि— |
|---|---|
| (१) युधिष्ठिर — | ३०४४ |
| (२) विक्रम — | १३५ |
| (३) शालिवाहन — | १८००० |
| (४) विजयाभिनन्दन — | १०००० |
| (५) नागार्जुन — | ४००००० |
| (६) कल्कि — | ८२१ |
| योग | ४३२००० |

(शेष पृष्ठ ७० पर)—

ष्ठिरः, (२) विक्रमः, (३) शालिवाहन, (४) विजयाभिनन्दन, (५) नागार्जुन., (६) कल्कि—इत्येते कलौ षट्शक (संवत्सर) कर्तारो नृपतयः स्युः ।

युगना'मानि—(१) सत्यम्, (२) त्रेता, (३) द्वापर, (४) कलि—इत्येतानि चत्वारि युगानि स्यु ।

इति श्रीमुकुन्ददैवज्ञविरचिते ज्यौतिषशब्दकोषे षष्ठो मानवर्गः समाप्त. ।

—ः०ः—

## गणनादिवर्गः—

अङ्कवाचकशब्दाः—अङ्कः, एकद्वयादि, सख्या ।

अ'ङ्कभेदाः—(१) एक, एका, एकम् । (२) द्वौ, द्वे, द्वे । (३) त्रयः, तिस्र, त्रीणि । (४) चत्वारः, चतस्रः, चतुर । (५) पञ्च (अन्) (नि. ब.) ।

१–६ ७–१२

—(पृष्ठ ६६ मे)

उक्तं च—

'युधिष्ठिरो विक्रमशालिवाहनौ, ततस्तु राजा विजयाभिनन्दनः । ततस्तु नागार्जुनकल्किभूपतिः, कलौ षडेते शककारका नृपाः । क्रमादमीषा कृतवेदखाग्नयः, शरत्रिचन्द्राः खखखाब्धभूमयः । ततोऽयुतं लक्षचतुष्टय च कुंदलनागा शकमानवत्सराः ।' इति ज्योतिर्विदाभरणे ।

(१) युगमानाना न्यास.—

४३२००० वर्ष=कलियुगम् ।
८६४००० ,, =द्वापरयुगम् ।
१२९६००० ,, =त्रेतायुगम् ।
१७२८००० ,, =सत्ययुगम् ।
४३२०००० ,, =चतुर्युगम् ।
७१ महायुगः=१ मन्वन्तरम् ।
३०६७२०००० सौरवर्ष =१ मन्वन्तरम् ।

उक्तं च—

'युगानां सप्तति- सैका मन्वन्तरमिहोच्यते ।' इति सू० सि० १।१८

(२) जैमिनीये जातकशास्त्रे सङ्ख्याद्योतनार्थं सङ्केतमाह यथा—

'क, ट, प, य,—वर्गभवैरिह, पिण्डान्त्यैरक्षरैरङ्काः ।
निञ्यचि शून्य ज्ञेय, तथा स्वरे केवले कथितम ॥' इति जै. टी. ।

अस्यार्थः—

काद्याः ६, टाद्या. ६, पाद्याः ५, याद्याः ८, यथा—१ क, २ ख, ३ ग, ४ घ, ५ ङ, ६ च, ७ छ, ८

(शेष पृष्ट ७१ पर)

(६) षट् (पु) (त्रि ब)। (७) सप्त (अन्) (त्रि ब)। (८) अष्ट (अन्) (त्रि ब)। (९) नव (अन्) (त्रि ब,)। इत्येतेऽङ्कानां नवभेदा सन्ति।
संख्याप०—सङ्ख्या (स्त्री), सङ्ख्यातम् (न), सङ्ख्यानम् (न)।
सङ्ख्याभेदौ—(१) गणना, (२) अङ्कश्चेति सङ्ख्याया द्वौ भेदौ स्याताम्।
गणनापर्याया—अङ्कगणितम् (न), गणनम् (न), गणना (स्त्री), गणितम् (न), परिग

१-५　　६-१०

(७० पृष्ठ से)

ञ, ९ ण ॥ १ ट, २ ठ, ३ ड, ४ ढ, ५ ण, ६ त, ७ थ, ८ द, ९ ध ॥ १ प, २ फ, ३ ब, ४ भ, ५ म ॥ १ य, २ र, ३ ल, ४ व, ५ श, ६ ष, ७ स, ८ ह ॥ इत्यक्षरसङ्ख्याविन्यासः। इहास्मिन् शास्त्रे वर्गभवं कादिवर्गोत्पन्नं पिण्डानां यौगिकशब्दानां यानि अन्त्यानि अक्षराणि तेऽङ्का बोध्याः। नि=नकार, ञि=ञकार, अचि अकारादिस्वरे च शून्यं ज्ञेयम्। यत्र केवले स्वरे वर्णयोगरहिते स्वरे तत्रैव तथा (शून्य) कथितमुक्तमित्यर्थः।

उदाहरणं प्रदर्शयति—

'देवा ४८, धवो ४९, योग ३१, धन ५४, लक्ष्मी ५६, रमा ५२, धूलि ३९ क्रमादुष्णकरादिबिम्बम्। सालोलसङ्ख्या ३३७ समुदायबिम्बम्' इति जातकपारिजाते १०।२ यथा—दकारोऽष्टौ, वकारश्चत्वारः 'अङ्कानां वामतो गतिः' इति परिभाषया जाता अष्टचत्वारिंशन्मिता रविबिम्बम्, एवमन्येऽपि ज्ञेयाः।

महासिद्धान्ते तु सङ्ख्याद्योतनार्थं सङ्केतमाह—

'रूपात् क, ट, प, य, पूर्वा, वर्णा वर्णक्रमाद् भवन्त्यङ्काः।
ञनौ शून्यं प्रथमार्थे, आ छेदे, ऐ तृतीयार्थे ॥१॥ इति।

अस्यार्थः—

'क, ट, प, य पूर्वा वर्णा वर्णक्रमादक्षरक्रमादेकत अङ्का भवन्ति। क, का, कि　　क् इत्यादिभिरेक। ख, खा, खि　　ख् इत्यादिभिर्द्वौ इत्यादि। अत्र व्यञ्जनेषु स्वराणां योगेन सङ्ख्यायां न भेदो भवतीति ज्ञेयम्। यथा—क=का=कि=　,=१। अत्रेतदुक्तं भवति।

अत्र प्रथमो वर्गः—क ख ग घ ङ च छ ज झ ञ।
द्वितीयो वर्गः—ट ठ ड ढ ण त थ द ध न।
तृतीयो वर्गः—प फ ब भ म।
चतुर्थो वर्गः—य र ल व श ष स ह।

एवमत्र वर्णक्रमतोऽङ्का वर्गाक्षरं क्रमेण च एकस्थानीय-दशस्थानीय-शतस्थानीयेत्यादि-दक्षिणक्रमेण सङ्ख्या भवन्ति। 'अङ्कानां वामतो गतिः' इत्येषा परिभाषा नादरणीया। ञ्, नौ वर्णौ शून्यद्योतकौ ज्ञेयौ। पदविग्रहे तु आ प्रथमाबहुवचनविभक्त्यर्थम्। ऐ च तृतीयाबहुवचनविभक्त्यर्थं बोध्या न 'आ' 'ऐ' इति।

(१) भिन्नो।

णनम् (न), परिगणना (स्त्री), परिगणितम् (न), सख्या (स्त्री), सख्यानम् (न)।

**अङ्कगणितभेदौ**—(१) व्यक्तगणितम् (पाटीगणितम्), (२) अव्यक्तगणितम् (बीजगणित रेखागणित च), इत्येतौ अङ्कगणितस्य द्वौ भेदौ, स्याताम्।

**गणितपर्याया**—कृतसख्यकम्, गणित, परिगणित, सख्यात, सख्यावत् (मतु) एते त्रिलिङ्गा स्यु।

**सख्येय (गण्य)**पु०—गणनीय, गणितव्य, गणेय गण्य, परिगणनीय, परिगणितव्य, परिगण्य, सख्यातुमर्ह, सख्यातु योग्य, सख्यायोग्य, सख्येय। एते त्रिलिङ्गा स्यु।

सख्येयम्=द्रव्यम्, 'अत्राहामरसिह —

' · · सख्या, सख्येये ह्यादश त्रिपु। विंशत्याद्या सदैकत्वे सर्वा सख्येयसख्ययो १।२, ६, ८३। सख्यार्थे द्विबहुत्वे स्त–स्तासु चानवते स्त्रिय। पक्ते शतसहस्रादि क्रमाद्दशगुणोत्तरम। २, ६, ८४ इति।

अस्यार्थ —

आदश दशशब्दमभिवाप्य। आङ्मर्यादाभिविध्योरित्यव्ययीभाव। 'नपुसकादन्यतरस्याम्' इति पक्षे टच न। एकादिका नवदशपर्यन्ता सख्या सख्येये त्रिलिङ्गा च। तेन सख्यासख्येययो समानाधिकरण्येन वृत्ति। यथा—एक पट। एका शाटी। एक वस्त्रम। हि शब्दोऽवधारणे सख्येय एव, न तु सख्यायामित्यर्थ। तन एका विप्र इत्यादि भवति न तु विप्रस्यैक इत्यादि। १–२८

'किन्तु' 'द्व्येकयोर्द्विवचनैकवचने' इति सूत्रे द्व्येकयोरितिनिर्देशात् सख्यामात्रेऽपि सम्भव। तेन घटाना पञ्चेत्यपि स्यादिति सुभूति। 'वार्ताकुरेया गुणसप्तयुक्ते ति वंद्यक च सङ्गच्छते। विंशतिराद्या या शतान्ता सख्या, सख्येयसख्ययोर्वर्त्तन्ते, एकवचनान्तास्च, यथा—विंशति गाव, गवा विंशति। विंशत्यादीना यदा सख्यार्थस्तदा द्विवचनबहुवचनेऽपि स्त। यथा—द्वे विंशती गाव, गवा वा तिस्रो विंशतय इति। तासु विंशत्या नवतिमभिव्याप्य स्त्रीलिङ्गा। भिन्नलिङ्गेनापि समानाधिकरण्ये स्त्रीलिङ्गा। यथा—विंशत्या पुरुषै कृतम्। विंशति कुण्डानीति। इति सुखानन्दनाथ। श चि २–६८५। १–६८६।

भाष्येऽपि—

'आदशभ्य सख्या सख्येये वर्तते। ऊर्ध्वं सख्याने सख्येये च' इति। विंशति पटा। विंशति पटानाम्। शत गाव। शत गवाम्–इति क्षीरस्वामी। विंशत्याद्यास्तु सख्याशब्दा एकत्वे वर्त्तमाना सख्येये सख्याने च वर्त्तन्ते। यथा—विंशतिर्घटा, विंशतिर्घटानाम्। शत गाव, शत गवाम्' इति। यदाह वाचस्पति —ऊनविंशत्यादिकास्तु सर्वा सख्येयसख्ययो' इति—इति हेमचन्द्राचार्य। 'पक्तेर्दशगुणोत्तर क्रमात् शतसहस्रादि विज्ञेयम्। यथा—एक दशगुणित पक्तिरुच्यत, दशपक्तय शतम् दशशतानि सहस्रम्, दशसहस्राण्ययुत मित्यादि ज्ञेयम। अ सु व्या टि ८३–३२६।

यथा हि लीलावत्याम्–

२९–५६

एक–दश–शत–सहस्रा–युत–लक्ष–प्रयुत–कोटय. क्रमश । अर्बुद–मब्ज खर्व–निखर्व–महापद्म–शङ्कवस्तस्मात् ॥ जलधि–श्चान्त्य मध्य परार्द्धमिति दशगुणोत्तरा सज्ञा । सख्याया स्थानाना व्यवहारार्थं कृता पूर्वं ॥' इति ली० व० ।

सख्यास्थानभेदा —(१) एकम्, (२) दश (३) शतम् (दशदशकम्), (४) सहस्रम् (दशशतानि), (५) अयुतम् (दशसहस्राणि), (६) लक्षम् (शतसहस्राणि), (७) प्रयुतम् (दशलक्षाणि), (८) कोटि (शतलक्षाणि), (९) अर्बुदम् (दशकोटय), (१०) अब्जम (शतकोटय), (११) खर्वम् (दशाब्जानि), (१२) निखर्वम् (शताब्जानि), (१३) महापद्मम् (दशनिखर्वाणि), (१४) शङ्कु (शतनिखर्वाणि), (१५) जलधि, (दशशङ्कव), (१६) अन्त्यकम् (शतशङ्कव), (१७) मध्यम् (दशान्त्यकानि), (१८) परार्द्धम् (शतान्त्यकानि), इति ।

सख्याभेदा —(१) एक, एका, एकम्, (२) द्वौ, द्वे, द्वे, (३) त्रय, तिस्र, त्रीणि (४) चत्वार, चतस्र, चत्वारि, (५) पञ्च, (६) षट् (ष्), (७) सप्त, (८) अष्ट, (९) नव, (१०) दश, (११) एकादश, (१२) द्वादश, (१३) त्रयोदश, (१४) चतुर्दश, (१५) पञ्चदश, (१६) षोडश, (१७) सप्तदश, (१८) अष्टादश, (१९) नवदश (ऊनविंशति), इह पञ्चतो नवदशान्ता सख्या अनन्ता त्रिलिङ्गा स्यु । अत ऊर्ध्व सर्वा नवनवत्यन्ता सख्या स्त्रीषु वर्त्तन्ते । यथा—(२०) विंशति, (२१) एकविंशति, (२२) द्वाविंशति, (२३) त्रयोविंशति, (२४) चतुर्विंशति, (२५) पञ्चविंशति, (२६) षड्विंशति, (२७) सप्तविंशति, (२८) अष्टाविंशति, (२९) नवविंशति (ऊनत्रिंशत), (३०) त्रिंशत्, (३१) एकत्रिंशत्, (३२) द्वात्रिंशत्, (३३) त्रयस्त्रिंशत्, (३४) चतुस्त्रिंशत्, (३५) पञ्चत्रिंशत्, (३६) षट्त्रिंशत्, (३७) सप्तत्रिंशत्, (३८) अष्टत्रिंशत्, (३९) नवत्रिंशत् (ऊनचत्वारिंशत्), (४०) चत्वारिंशत, (४१) एकचत्वारिंशत्, (४२) द्वि (द्वा) चत्वारिंशत्, (४३) त्रयश्चत्वारिंशत्, (४४) चतुश्चत्वारिंशत, (४५) पञ्चचत्वारिंशत्, (४६) षट्चत्वारिंशत्, (४७) सप्तचत्वारिंशत्, (४८) अष्टचत्वारिंशत्, (४९) नवचत्वारिंशत् (ऊनपञ्चाशत्), (५०) पञ्चाशत्, (५१) एकपञ्चाशत, (५२) द्वि (द्वा) पञ्चाशत्, (५३) त्रयःपञ्चाशत्, (५४) चतुःपञ्चाशत्, (५५) पञ्चपञ्चाशत्, (५६) षट्पञ्चाशत्, (५७) सप्तपञ्चाशत, (५८) अष्टपञ्चाशत्, (५९) नवपञ्चाशत् (ऊनषष्टि), (६०) षष्टि, (६१) एकषष्टि, (६२) द्वि (द्वा) षष्टि, (६३) त्रयःषष्टि, (६४) चतुःषष्टि, (६५) पञ्चषष्टि, (६६) षट्षष्टि, (६७) सप्तषष्टि, (६८) अष्टषष्टि, (६९) नवषष्टि (ऊनसप्तति), (७०) सप्तति, (७१) एकसप्तति, (७२) द्वि (द्वा) सप्तति, (७३) त्रयःसप्तति, (७४) चतुःसप्तति, (७५) पञ्चसप्तति, (७६) षट्

सप्तति, (७७) सप्तसप्तति, (७८) अष्टसप्तति, (७९) नवसप्तति (ऊनाशीति), (८०) अशीति, (८१) एकाशीति, (८२) द्वय (द्वा) शीति, (८३) त्र्यशीती, (८४) चतुरशीति, (८५) पञ्चाशीति, (८६) षडशीति, (८७) सप्ताशीति, (८८) अष्टाशीति, (८९) नवाशीति (ऊननवति), (९०) नवति, (९१) एकनवति (९२) द्वि (द्वा) नवति, (९३) त्रयोनवति, (९४) चतुर्णवति, (९५) पञ्चनवति, (९६) षण्णवति, (९७) सप्तनवति, (९८) अष्टनवति, (९९) नवनवति (ऊनशतम), (१००) शतम्, इति।

**शून्यपर्याया**—पूर्णम्, बिन्दु, शून्यम्।

**शून्यवाचकशब्द**'—आकाशनाम' ।

**एकपर्याय**—एक (पु०) एका (स्त्री), एकम् (न०)।

**एकवाचकशब्दा**—इन्द्रहस्तिनाम, इन्द्राश्वनाम, उरगा (स्त्री०) (छन्दोजातिविशेष), गणेशदन्तनाम, चन्द्रप, चन्द्रनाम, पृथ्वीनाम, ब्रह्म (ब्रन्) (न०), रूपम् (न०), शाली (इन्) (त्रि०), शुक्राक्षिनाम, चैते शब्दा एकवाचका विज्ञेया ।

**द्विपर्याया**—द्वौ (पु०), द्वे (स्त्री०), द्वे (न०), द्वयम्, द्विकम्, द्वितयम, एते त्रिलिङ्गा ।

**द्विवाचकशब्दा**—ओष्ठौ, कर्णौ चरणौ, दलौ, नयने, बाहू, स्तनौ, हस्तौ चेत्येषा नामानि ।

अत्युक्ता (स्त्री०) (छन्दोजातिविशेष), असिधारे, इन्द्राग्नी, उभौ, जकुटे, द्वन्द्वे, द्वैते, द्वयात्मकम्, नदीकूले, नारदपर्वतौ, पक्षौ, भार्यापत्नी, यमले, यमे, यमौ, यामले, युग्मे, रामनन्दनौ, सहचरौ, चेत्येते द्विवाचकशब्दा बोध्या ।

**त्रिपर्याया**—त्रय (पु०ब०), तिस्र (स्त्री०ब०) त्रीणि (न० ब०), त्रयम्, त्रिकम्, त्रितयम्, एते वलीत्रलिङ्गा ।

**त्रिवाचकशब्दा**—अनलाख्या, कालाख्या, क्रमा, गङ्गामार्गा, गुणा, ग्रामा, त्रिपुष्करा, पुर, पुराणि, भुवनानि, मध्या (स्त्री०) छन्दोजातिविशेष, रामा, लोकाख्या, विष्णुक्रमा, शिवनयनाख्या, चेत्यते त्रिवाचका शब्दा ।

**त्रिपुष्करभेदा**—(१) भद्रातिथय, क्रूरवारा, (३) त्रिपादनक्षत्राणि, चैते त्रिपुष्करा स्यु ।

**चतु पर्याया**—चत्वार (पु० ब०), चतस्र (स्त्री०), चत्वारि (न० ब०), द्विद्वति (स्त्री०), द्विद्विकम् (न०), द्विवर्ग, (पु०), चतुष्कम् (त्रि०)।

---

१–२३ २४–४५

(१) आख्या नाम, संज्ञा इत्यादयो नामपर्याया येषां शब्दानामन्ते स्युस्तेषां सर्वे पर्यायास्तत्संख्या नामानि ज्ञेयानि । येषां शब्दानामन्ते नामपर्याया न स्युस्ते केवलं तत्संख्यावाचका बोध्या ।' इति ।

**चतुर्वाचकशब्दा** —अब्धिसञ्ज्ञा[1] (नाम), आश्रमा[2], उपाया[3], ऐरावतदन्तनाम, कृता, कृनाया (उभौ द्यूतक्रीडासाधनीभूताक्षशब्दितस्य चतुरङ्कभाग' इति श० चि०) । जातय[4] (वर्णा), प्रतिष्ठा (स्त्री०) (छन्दोजातिविशेष), ब्रह्ममुखनाम, यामनाम, युगानि, वेदाख्या, सुखभाव, सेनाङ्गानि, हरिवाहवश्चेत्येते चतुर्वाचका, शब्दा स्यु ।

**पञ्चपर्यायौ**—पञ्च (अन्) अस्य त्रिषु लिङ्गेषु त्रिषु वचनेषु च समानरूपाणि । पञ्चकम् (त्रि०) ।

अनाह यादव —

'षट्सञ्ज्ञा युष्म दस्म च्च त्रिषु लिङ्गेष्वभेदवत् ।' इति वैजयन्ती । 'ष्णान्ता षट् १।१।२४ षान्ता नान्ता च सख्या षट् सञ्ज्ञा स्यात् । इति पाणिनीयेऽपि षान्ता (षष्), नान्ता (पञ्चन्नादय) सख्या त्रिषु लिङ्गेषु वचनेषु च समानरूपाणि भवन्तीत्यर्थं ।

**पञ्चवाचकशब्दा** —अग्नय, अर्था[5], असुसञ्ज्ञा, इन्द्रियाख्या, एता, पाण्डवा[6], भूता (पञ्चमहाभूता), रुद्रमुखनाम, वाताख्या, विषया, शरनाम, सुप्रतिष्ठा (स्त्री०) (छन्दोजातिविशेष), स्मरबाणा, स्वर्गतरवश्चेत्येते पञ्चवाचकशब्दा ।

**षट्पर्यायौ**—षट् (ष्) त्रिषु लिङ्गवचनेषु समानरूपाणि । षट्कम् (त्रि०) ।

**षड्वाचकशब्दा** —अङ्गानि, अरिसञ्ज्ञा, ऋतुनाम, कार्तिकेयमुखनाम, गायत्री (स्त्री०) (छन्दोजातिविशेष), गुणा[7], चक्रवर्तिन[8], चक्रार्द्धम्, ज्वरबाहुनाम, तर्का[9], त्रिशिरानेत्रनाम, दर्शना न, भदलम्, भार्द्धम्, भ्रमरपादनाम,

१–१५ १६–३१

(१) समुद्रस्य सर्वे पर्यायाश्चतु सख्यावाचका बोध्या । चतु समुद्रभेदाः—

(२) ब्रह्मचर्याश्रम, गार्हस्थ्याश्रम, वानप्रस्थाश्रम, सन्यासा (भैक्षुका) श्रम —श्चेति चत्वार आश्रमा स्यु ।

(३) भेद, दण्ड, साम (अन्), दानम् चेति चत्वार उपाया स्यु ।

(४) ब्राह्मण, क्षत्रिय, वैश्य, शूद्रश्चेति चतस्रो जातय (वर्णा.), स्यु ।

(५) अर्था =विषया,

(६) युधिष्ठिर, भीम, अर्जुन, नकुल, सहदेव,—श्चैतेऽपञ्चपाण्डवा स्यु ।

(७) उक्त च (१) सन्धि-(२) विग्रह-(३) यानानि—(४) सस्थाप्या-(५) ऽऽसनमेव च । (६) द्वैधीभावश्च विज्ञेया षड्गुणा नीतिवेदिनाम् ॥' इ० श० चि० १।६।६।

(८) उक्त च—(१) मान्धाता (२) धुन्धुमारश्च (३) हरिश्चन्द्र (४) पुरूरवा. । (५) भरत (६) कार्तवीर्यश्च षडेते चक्रवर्तिन ॥, इति ग्रन्थान्तरे ।

(९) षट्तर्कभेदा —

रसा[1], रागा, वज्रकोणानि, शास्त्राणि, समयाख्या, चेत्येते षड्वाचका शब्दा ।

सप्तपर्यायौ—सप्त (अन्) (त्रि० ब०), सप्तकम् (त्रि०)।

सप्तवाचकशब्दा —अश्वनाम, उष्णिक (ह्) (छन्दोजातिविशेष), ऋषिसञ्ज्ञा, द्वीपा[2], धान्यानि, नृपा[3], पर्वताख्या, पातालाख्या, भारतीयकुलाचला, राज्याङ्गानि[4], लोका, वह्निशिखा (जिह्व), वायव, वारा, समुद्रा, सूर्याश्वा, स्वराश्चेत्येते सप्तवाचकशब्दा ।

अष्टपर्याया —अष्ट (अन्) (त्रि० ब०), अष्टकम् (त्रि०), चतुर्द्विकम् त्रि०), द्विघन (पु०), द्विचतुष्कम (त्रि०) ।

अष्टवाचकशब्दा —अनुष्टुब (भ्) (स्त्री०) (छन्दोजातिविशेष), कुलाचला, दिक्पाला (लोकपाला), दिग्गजा, मङ्गलानि[5], योगाङ्गानि[6], वसव, शिवमूर्तय, सर्पाख्या, सिद्धय हस्त्याख्या,-चैतेऽष्टवाचकशब्दा ।

नवपर्याया —नव (अन) (त्रि० ब०), त्रिकृत्ति (स्त्री०), त्रित्रिकम् (त्रि०), त्रिवर्ग (पु०), नवकम् (त्रि०) ।

नववाचकशब्दा –अङ्का, गाव[7] (गो), ग्रहाख्या,

१–११ १२–२२

(१) मधुर, अम्ल, लवण, कटुक, कषाय,-श्चैते षड्रसा स्यु ।

(२) जम्बूद्वीप,-प्लक्षद्वीप,-शाल्मलिद्वीप,-कुशद्वीप,-क्रौञ्चद्वीप,-पुष्करद्वीप,— इत्येते सप्त द्वीपा स्यु ।

(३) तदुक्त ग्रन्यान्तरे (१) भरता-(२) र्जुन-(३) मान्धातृ-(४) भगीरथ-(५) युधिष्ठिरा । (६)सगरो (७) नहुषश्चैवसप्तैते चक्रवर्तिन ॥' इति ।

(४) तदुक्तञ्च कामन्दकीये—स्वाम्यमात्यश्च राष्ट्र च दुर्ग कोशो बल सुहृत् । परस्परोपकारीद सप्ताङ्ग राज्यमुच्यते ॥' इति श० चि० ११६६ ।

(५) मङ्गलभेदा —(१) ब्राह्मण, (२) गौ, (३) अग्नि (४) सुवर्णम् (५) घृतम् (६) सूर्य, (७) जलानि, (८) राजा, चैतान्यष्टौ मङ्गलानि स्यु । उक्त च—'मत्स्यसूक्त-महातन्त्र ४३ पटले—'लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशन । हिरण्य सर्पिरादित्य आपो राजा तथाष्टम । एतानि सतत पश्येन्नमस्येदर्चयेतत । प्रदक्षिणतु कुर्वीत तथा चायुर्न हीयते ॥' इति ।

(६) (१) यम-(२) नियमा-(३) सन-(४) प्राणायाम-(५) प्रत्याहार-(६) धारणा (७) ध्यान (८) समाधय, इत्येतान्यष्टौ योगाङ्गानि स्यु ।

(७) गो भेदा —

छिन्नरावणमस्तकनाम, नन्दा[1], निधिसञ्ज्ञा, बृहती (स्त्री०) (छन्दोजातिविशेष), भारतीयवर्षाणि[2] (भूखण्डानि), रन्ध्रनाम[3], रसा[4], वर्षाणि[5], व्याघ्रीस्तना,—चेत्येते नववाचकशब्दा ।

**दशपर्याया**—दश (अन्) (त्रि ब), दशकम् (त्रि), दशत् (त्) (स्त्री०) दशतय (त्रि०), द्विपञ्चकम् (त्रि०), ।

**दशवाचकशब्दा**—अवस्था, आशाख्या, कराङ्गुलय, कृष्णावतारा, चन्द्राश्वा, पङ्क्ति (स्त्री०) (छ० जा० वि०), रावणमौलिनाम, विश्वदेवा, शम्भुबाहुनाम, सुशर्म्मणिदश्चेत्येते, दशवाचकशब्दा ।

**एकादशपर्याया**—एकादश (अन) (त्रि० ब०), एकादशकम् (त्रि०), एकाधिकदश (त्रि०), ।

**एकादशवाचकशब्दाः**—कुरुराजसेना, त्रिष्टुभ् (भ्) (स्त्री०) (छ० जा० वि०), शिवनाम, चेत्येते एकादशवाचकशब्दा ।

**द्वादशपर्याया**—द्वादश (अन्) (त्रि० ब०), त्रिचतुष्कम् (त्रि०), द्विदश (अन्) (त्रि० ब०), द्विषट् (ष्) (त्रि० ब०), द्विषट्कम् (त्रि०), द्व्यधिकदश (अन्) (त्रि० ब०), ।

**द्वादशवाचकशब्दा**—कार्त्तिकेयनेत्रबाहुर्नामचक्रम् (न०), जगती (स्त्री०) (छ० जा० वि०), भगणनाम, भावा, मासा, रविनाम, राजमण्डलानि, राशय, राशिगणनाम, संक्रान्तय, साध्या, सारिकोष्ठानि चेत्येते, द्वादशवाचकशब्दा ।

१–१३ १४–२७

(१) नन्दभेदो —

(२) भारतीयभूखण्डभेदा—(१) ऐन्द्रम् (२) कशेरुशकलम्, (३) ताम्रपर्णम्, (४) गभस्तिमन्, (५) कुमारिकाख्या (भरतखण्डम्) (अत्रैव वर्णव्यवस्था), (६) नागम् (७) सौम्यम्, (८) वारुणम्, (९) गान्धर्वम् चेते नव भारतीयवर्षभेदा ।

(३) रन्ध्रपर्याया—छिद्रम्, द्वारम्, रन्ध्रम् ।

रन्ध्रभेदा—(२)नेत्र-(२) श्रवण-(२)नासानां द्वे द्वे रन्ध्रे प्रकीर्तिते ।(१)मुख-(१) मेहन-(१) पायूनामेकं रन्ध्रमुच्यते ॥' इति भावप्रकाशे ।२।३१४।५७।

(४) उक्त च शृङ्गार-हास्य-करुणा, रौद्र-वीर भयानका । बीभत्सा-द्भुत शान्ताश्च रसा भावा पुनस्त्रिधा ॥ इत्यभिधानचिन्तामणी पृ० ७४, श्लो० २९४-५ ।

(५) वर्षभेदा—(१) भारतवर्षम् (नाभिवर्षम्) (अजनाभवर्षम्), (२) किम्पुरुषवर्षम्, (३) हरिवर्षम्, (४) कुरुवर्षम्, (५) हिरण्मयवर्षम्, (६) रम्यकवर्षम्, (७) भद्राश्ववर्षम्, (८) केतुमालवर्षम् (९) इलावृतवर्षम्, चैतानि नव वर्षाणि [illegible] ।

**त्रयोदशपर्याया**—त्रयोदश, त्र्यधिकदश, मानलदश, एतेऽन्नन्ता, त्रिलिङ्गा ।

**त्रयोदशवाचकशब्दा**—गुणा,[1] ताम्बुलानि, [2]विश्वेदेवा, विश्वधम्नपक्ष,-श्चैते त्रयोदशवाचक शब्दा ।

**चतुर्दशपर्याया**—चतुर्दश (अन्) (त्रि० व०), चतुरधिकदश (अन्) (त्रि० व०), द्विसप्त (अन्) (त्रि० व०), द्विसप्तकम् (त्रि०), ।

**चतुर्दशवाचकशब्दा**—इन्द्रगाम त्रिदिवा, ध्रुवतारका, भुवनानि, मनव, रत्नसञ्ज्ञा, राजान, विद्या, वैकुण्ठा, शक्वरी (स्त्री०) (छ० जा० वि०), चेत्येते चतुर्दशवाचका शब्दा ।

**पञ्चदशपर्याया**—पञ्चदश (अन्) त्रि० व०), पञ्चाधिकदश (अन्) (त्रि० व०), त्रिपञ्च (अन्) (त्रि० व०), त्रिपञ्चकम् (त्रि० ) सेषुदश (अन्) (त्रि० व०), ।

**पञ्चदशवाचकशब्दा**—अतिशक्वरी (स्त्री०) (छ० जा० वि०), तिथिसञ्ज्ञा, दिनाख्या, सामिधेनी, चेत्येते पञ्चदशवाचकशब्दा ।

**षोडशपर्याया**—षोडश (अन्) (त्रि० ब०), षोडश (पु० व०) नित्यबहुवचनान्त, एकाधिकपञ्चदशसङ्ख्या, चतुश्चतुष्कम् (त्रि०), द्व्यष्ट (त्रि० व०), षडधिकदश (अन्) त्रि० व०), ।

**षोडशवाचकशब्दा**—अष्टि (स्त्री०) (छ० जा० वि०) कर्कटपादा (पु०) कला (स्त्री०), चन्द्रकला, (स्त्री०), चतुष्कृति (स्त्री०), चतुर्वर्ग ((पु०), नृपाश्चेत्येते षोडशवाचका शब्दा, ।

**सप्तदशपर्याया**—सप्तदश, सप्ताधिकदश, सागदश एतेऽन्नन्ता त्रिलिङ्गा ।

**सप्तदशवाचकशब्दा**—अत्यष्टि (स्त्री०) (छ०



(१) उक्त च— (१) मानुष्य, (२) वरकुलजन्म, (३) श्रिमयो, (४) दीर्घायु, (५) शरीरयता (६) सन्मित्र, (७) सुसुत, (८) सती प्रियतमा, (९) भक्तिरचनारायणे । (१०) विद्वत्त्व, (११) सुजनत्व, (१२) जितेन्द्रियजय, सत्पात्रदाने रति—स्ते पुण्येन विना त्रयोदश गुणा ससारिणा दुर्लभा ॥' इति ग्रन्थान्तरे ।

(२) विश्वेदेवभेदा—(१) क्रतु, (२) दक्ष, (३) सत्य, (४) वसु, (५) काम, (६) काल (७) धूरि, (८) लोचन, (९) पुरूरव, (१०) आद्रव, (११) धनु, (१२) रुचि (१३) रुद्रश्चैते त्रयोदश विश्वेदेवा सन्ति । तदुक्त हेमाद्रौ शङ्खबृहस्पती—

दृष्टिश्राद्धे क्रतुदक्षौ सत्यौ नान्दीमुखे वसू । सापिण्ड्यके कामकालौ तीर्थे च धूरिलोचनौ ॥
पुरूरवार्द्रवौ चैतौ पार्वणे समुदाहृतौ । हेमश्राद्धे धनरुचौ कथ्येते विश्वदेवकौ ॥
एकोद्दिष्टे रुद्रसञ्ज्ञो विश्वेदेवास्त्रयोदश इति ॥

जा० वि०), धान्यानि, मेघनाम¹ चैते सप्तदश वाचकशब्दा ।

**अष्टादशपर्याया**—अष्टादश अष्टाधिकदश, सेभदश चैतेऽन्नन्ता त्रिलिङ्गा । द्विनवकम (त्रि०) त्रिषट्कम् (त्रि०), ।

**अष्टादशवाचकशब्दा**—खगयुक् (ज) ग्रहद्वयम् द्वीपा,² धान्यानि,³ धृति (स्त्री०) (छ० जा० वि०), पुराणानि⁴, विद्या,⁵ स्मृतय⁶-श्चेत्येतेऽष्टा दशवाचकशब्दा ।

**एकोनविंशतिपर्याया**—ऊनविंशति, एकादूनविंशति, एकान्नविंशति, एकोनविंशतिश्चैते स्त्री लिङ्गा, नवदश, नवाधिकदश, साङ्कदश चैते ऽन्नन्तास्त्रिलिङ्गा ।

**एकोनविंशतिवाचकशब्द**—अतिधृति (स्त्री०) (छ० जा० वि०),

**विंशतिपर्याया**—विंशकम् (त्रि०) विंशत्, विंशति विंशतिका, विंशती चैते स्त्रीलिङ्गा । चतुःपञ्चकम् (त्रि०), द्विदशकम (त्रि०) द्विदशत परिमाणमस्य ।

**विंशतिवाचकशब्दा**—अङ्गुलिनाम, आशाद्वयम् काष्ठायुक् (ज्), कृति (स्त्री०) (छ० जा० वि०), नखाख्या, रावणहस्तनाम चैते विंशतिवाचकशब्दा ।

**एकविंशतिपर्याया**—एकविंशत् एकविंशति, एकाधिकविंशतिश्चैते स्त्रीलिङ्गा । त्रिसप्त ((अन्) (त्रि० ब०) त्रिसप्तकम् (त्रि०) ।

**एकविंशतिवाचकशब्दा**—प्रकृति (स्त्री०) (छ० जा० वि०) ⁷मूर्छना (स्त्री०), समिन्नाम⁸, स्वर्गा⁹, चेत्यते एकविंशतिवाचक शब्दा ।

**द्वाविंशतिपर्याया**—द्वाविंशत, द्वाविंशति, द्वयधिकविंशतिश्चैते स्त्रीलिङ्गा ।

**द्वाविंशतिवाचकशब्दा**—आकृति (स्त्री०), (छ० जा० वि०) जातय¹⁰ (स्त्री०), रुद्रयुक (ज्), शिवद्वयम्' चैत द्वाविंशतिवाचकशब्दा ।

**त्रयोविंशतिपर्याया**—त्रयोविंशत् त्रयोविंशति त्र्यधिकविंशति, साग्निविंशत्, चैते स्त्रीलिङ्गा ।

**त्रयोविंशतिवाचकशब्द**—विकृति (स्त्री०) (छ० जा० वि०),

**चतुर्विंशतिपर्याया** चतुर्विंशत्, चतुर्विंशति, चतुरधिकविंशतिश्चैते, स्त्रीलिङ्गा, चतुःषट्कम् (त्रि०), त्र्यष्टकम् (त्रि०), ।

१—२१ २२—४२

(१) मेघभेदा—
(२) एषां भेदा अन्यत्र ।
(३) एषां भेदा अन्यत्र ।
(४) एषां भेदा अन्यत्र ।
(५) एषां भेदा अन्यत्र ।
(६) एषां भेदा अन्यत्र ।
(७) आसां भेदा अन्यत्र ।
(८) समिद्भेदा—
(९) स्वर्गभेदा—
(१०) आसां भेदा अन्यत्र ।

**चतुर्विंशतिवाचकशब्दा** —जिननाम, रवियुक् (ज्), सङ्कृति (स्त्री०) (छ० जा० वि०), सिद्धा,[1] सूर्यद्वयम, चैते चतुर्विंशतिवाचक शब्दा ।

**पञ्चविंशतिपर्याया**.—पञ्चविंशत्, पञ्चविंशति,–पञ्चाधिकविंशतिश्चैते स्त्रीलिङ्गा । पञ्चपञ्चकम् (त्रि०),

**पञ्चविंशतिवाचकशब्दा**.—अतिकृति, अभिकृति–श्चेमौ स्त्रीलिङ्गौ (छ० जा० वि०), तत्त्वानि[2], पञ्चकृति (स्त्री०) पञ्चवर्ग (पु०), चैते पञ्चविंशतिवाचकशब्दा ।

**षड्विंशतिपर्याया** —षड्विंशत् षड्विंशति, षडधिकविंशति, साङ्गविंशति,–श्चैते स्त्रीलिङ्गा ।

**षड्विंशतिवाचकशब्दा**.—अहोकृति, उत्कृतिश्च स्त्रीलिङ्गौ (छ० जा० वि०), विश्वद्वयम्, विश्वयुक् (ज्), विश्वयुगम् (त्रि०), चैते षड्विंशतिवाचकशब्दा ।

**सप्तविंशतिपर्याया** —सप्तविंशत्, सप्तविंशति, सप्ताधिकविंशति, मार्गविंशति,–श्चैते स्त्रीलिङ्गा, त्रिनवकम् (त्रि०), ।

**सप्तविंशतिवाचकशब्दौ**:—निघन, नक्षत्रनाम, चैतौ सप्तविंशतिवाचकशब्दौ ।

**अष्टाविंशतिपर्याया**.—अष्टाविंशत्, अष्टाविंशति, अष्टाधिकविंशति सेभविंशति,–श्चैते स्त्रीलिङ्गा ।

**अष्टाविंशतिवाचकशब्दा**.—इन्द्रद्वयम्, इन्द्रयुक्, इन्द्रयुगम् मनुद्वयम्, मनुद्वितयम्, मनुयुक्, मनुयुगम्, मोह,–श्चेत्येतेऽष्टाविंशतिवाचकशब्दा ।

**ऊनत्रिंशत्पर्याया** —ऊनत्रिंशत्, ऊनत्रिंशति, एकाद् नत्रिंशत, एकान्नत्रिंशत, एकोनत्रिंशत् चैते (स्त्री०) ।

**त्रिंशत्पर्याया** —त्रिंशत्, त्रिंशति, साष्टाविंशति–श्चैते स्त्रीलिङ्गा । त्रिदशकम् (त्रि०), पञ्च षट्कम् (त्रि०), त्रिदशत परिमाणमस्य ।

**त्रिंशद्वाचकशब्दा**.—ग्रहद्वयम्, तिथिद्वयम् तिथियुक्, दिनयुक्, द्युद्वितयम्, चैते त्रिंशद्वाचक शब्दा ।

**एकत्रिंशत्पर्याया** —एकत्रिंशत्, एकत्रिंशति, एकाधिकत्रिंशति, सेशविंशति,–श्चैते स्त्रीलिङ्गा ।

**द्वात्रिंशत्पर्याया** —द्वात्रिंशत्, द्वात्रिंशति, द्व्यधिकत्रिंशति–श्चैते स्त्रीलिङ्गा, चतुरष्टकम् (त्रि०), ।

**द्वात्रिंशद्वाचकशब्दा** —अष्टिद्वयम् दन्तनाम, नृपयुक्, चैते द्वात्रिंशद्वाचकशब्दा ।

**त्रयस्त्रिंशत्पर्याया** —त्रयस्त्रिंशत्, त्रयस्त्रिंशति, त्र्यधिकत्रिंशति, सविश्वविंशति चैते (स्त्री०)

**त्रयस्त्रिंशद्वाचकशब्दा**.—देवाख्या, रुद्राग्निकम्, शिवत्रितय,–चैते त्रयस्त्रिंशद्वाचकशब्दा ।

**चतुस्त्रिंशत्पर्याया** —चतुस्त्रिंशत, चतुस्त्रिंशति., चतुरधिकत्रिंशत्, सेन्द्रविंशति चैते स्त्री० ।

**चतुस्त्रिंशद्वाचकशब्दा**·—अत्यष्टिद्वयम्, घनयुक्,

१–२६ २७–५२

(१) सिद्धभेदा — (२) तत्त्वभेदा —

मेघयुग, चैते चतुस्त्रिंशद्वाचकशब्दा ।

**पञ्चत्रिंशत्पर्याया** —पञ्चत्रिंशत्, पञ्चत्रिंशति, पञ्चाधिकत्रिंशति, सतिथिविंशति, सतत्त्वपङ्क्तिश्चैते स्त्रीलिङ्गा, पञ्चसप्तकम् (त्रि०)।

**षट्त्रिंशत्पर्याया** —षट्त्रिंशत्, षट्त्रिंशति, षडधिकत्रिंशति–इत्येते स्त्रीलिङ्गा चतुर्णवकम (त्रि०), नवचतुष्कम (त्रि०), षट्षट्कम् (त्रि०)।

**षट्त्रिंशद्वाचकशब्दा** —नृपिता, धृतिद्वयम, पुराणयुक् रागिण्य, विद्यायुगम् षट्कृति, षड्वर्ग, स्मृतिद्वयम् चैते षट्त्रिंशद्वाचकशब्दा ।

**सप्तत्रिंशत्पर्याया** —सप्तत्रिंशत् सप्तत्रिंशति, सप्ताधिकत्रिंशति, साम्बुदविंशति–इत्येते स्त्रीलिङ्गा ।

**अष्टत्रिंशत्पर्याया** —अष्टत्रिंशत अष्टात्रिंशत् अष्टत्रिंशति, अष्टात्रिंशति, अष्टाधिकत्रिंशति–इत्येते स्त्रियाम् ।

**अष्टात्रिंशद्वाचकशब्दा** —अतिधृतिद्वयम्, अतिधृतियुक्, अतिधृतियुगम् (त्रि०), चैतेऽष्टात्रिंशद्वाचकशब्दा ।

**ऊनचत्वारिंशत्पर्याया** —ऊनचत्वारिंशत एकादूनचत्वारिंशत्, एकान्नचत्वारिंशत्, एकोनचत्वारिंशत्, नवत्रिंशतिश्चैते स्त्रियाम् ।

**चत्वारिंशत्पर्याया** —अष्टपञ्चकम् (त्रि०), चतुर्दशकम (त्रि०), चत्वारिंशत (स्त्री०), पञ्चाष्टकम (त्रि०) चतुर्दशत * परिमाणमस्य ।

**चत्वारिंशद्वाचकशब्दा** —कृतिद्वयम् कृतियुक नखद्वयम् नखरयुगम चैते त्रिलिङ्गा चत्वारिंशद्वाचकशब्दा ।

**एकचत्वारिंशत्पर्याया** —एकचत्वारिंशत्, एकाधिकचत्वारिंशत सेशत्रिंशत्, सस्वर्गविंशत् स्त्रियाम ।

**द्विचत्वारिंशत्प०**–द्वाचत्वारिंशत्, द्विचत्वारिंशत, द्व्यधिकचत्वारिंशत सेनत्रिंशत, स्त्रियाम ।

**द्वाचत्वारिंशद्वाचकशब्दा** —प्रकृतियुक् मूर्च्छनाद्वयम्, स्वर्गयुगम्, चैते त्रिलिङ्गा द्वाचत्वारिंशद्वाचकशब्दा ।

**त्रयश्चत्वारिंशत्पर्याया** त्रयश्चत्वारिंशत, त्रिचत्वारिंशत् त्र्यधिकचत्वारिंशत हयिश्वत्रिंशत स्त्रियाम् ।

**चतुश्चत्वारिंशत्पर्याया** —चतुश्चत्वारिंशत चतुरधिकचत्वारिंशत्, ससिद्धविंशति सेन्द्रत्रिंशत् स्त्रियाम् । रुद्रचतुष्कम (त्रि०)।

**चतुश्चत्वारिंशद्वाचकशब्दा** —आकृतिद्वयम्, आकृतियुक् जातिद्वितयम् जातियुग चैते त्रिलिङ्गाश्चतुश्चत्वारिंशद्वाचकशब्दा ।

**पञ्चचत्वारिंशत्पर्याया** —पञ्चचत्वारिंशत् पञ्चाधिकचत्वारिंशत्, स्त्रियाम्, नवपञ्चकम, पञ्चनवकम्, तिथित्रिकम् चैते त्रिलिङ्गा ।

**षट्चत्वारिंशत्पर्याया** —षट्चत्वारिंशत, षडधिकचत्वारिंशत्, साब्धित्रिंशत्, स्त्रियाम् ।

**षट्चत्वारिंशद्वाचकशब्दा** —विकृतिद्वयम विकृतियुक विकृतियुगम् चैते त्रिलिङ्गा ।

**सप्तचत्वारिंशत्पर्याया** —सप्तचत्वारिंशत्, सप्ताधिकचत्वारिंशत्, सर्क्षविंशति, स्त्रियाम् ।

**अष्टचत्वारिंशत्पर्याया** —अष्टचत्वारिंशत, अष्टाचत्वारिंशत अष्टाधिकचत्वारिंशत्

स्त्रियाम्।

अष्टषट्कम्, षडष्टकम्, चैतौ त्रिलिङ्गौ।

अष्टचत्वारिंशद्वाचकशब्दा.—जिनद्वयम्, जिनयुक्, सिद्धद्वितयम्, सिद्धयुगम्, चैते त्रिलिङ्गा।

एकोनपञ्चाशत्पर्यायाः—ऊनपञ्चाशत्, एकादृनपञ्चाशत्, एकान्नपञ्चाशत्, एकोनपञ्चाशत्, नवचत्वारिंशत् स्त्रियाम्।

ऊनपञ्चाशद्वाचकशब्दाः—ताना (पु० ब०), मरुद्गण (पु०), सप्तकृति (स्त्री०), सप्तवर्ग- (पु०) इत्येते ऊनपञ्चाशद्वाचकशब्दा।

पञ्चाशत्पर्यायाः—पञ्चाशत्, दशाधिकचत्वारिंशत्, स्त्रियाम्। पञ्चदशकम् (त्रि०) पञ्चदशान परिमाणमस्य।

पञ्चाशद्वाचकशब्दाः—अतिकृतिद्वयम्, अभिकृतिद्वयम् तत्त्वयुगम् चैते त्रिलिङ्गा।

एकपञ्चाशत्पर्यायाः—एकपञ्चाशत् (स्त्री०), एकाधिकपञ्चाशत् (स्त्री०), अत्यष्टित्रिकम् (त्रि०), मेघत्रिकम् (त्रि०)।

द्वापञ्चाशत्पर्याया—द्वापञ्चाशत् द्विपञ्चाशत्, द्व्यधिकपञ्चाशत् स्त्रियाम्।

त्रयःपञ्चाशत्पर्याया.—त्रयःपञ्चाशत्, त्रिपञ्चाशत्, त्र्यधिकपञ्चाशत् स्त्रियाम्।

चतुःपञ्चाशत्पर्याया·—चतुःपञ्चाशत्, चतुरधिकपञ्चाशत्, स्त्रियाम्। नवषट्कम् (त्रि०) षण्णवकम् (त्रि०)।

चतुःपञ्चाशद्वाचकशब्दा—धिष्ण्ययुक, नक्षत्रद्वयम्, भयुगम् (त्रिपु)।

पञ्चपञ्चाशत्प०—पञ्चपञ्चाशत्, पञ्चाधिकपञ्चाशत्, सतिथिचत्वारिंशत् (स्त्रियाम्)।

षट्पञ्चाशत्पर्यायाः—षट्पञ्चाशत्, षडधिकपञ्चाशत् स्त्रियाम्। अष्टसप्तकम् (त्रि०), सप्ताष्टकम् (त्रि०)।

सप्तपञ्चाशत्प०—सप्तपञ्चाशत्, सप्ताधिकपञ्चाशत् स्त्रियाम्। अतिधृतित्रिकम् (त्रि०)।

अष्टपञ्चाशत्प०—अष्टपञ्चाशत्, अष्टापञ्चाशत्, अष्टाधिकपञ्चाशत् स्त्रियाम्।

एकोनषष्टिप०—ऊनषष्टि, एकादृनषष्टि, एकान्नषष्टि, एकोनषष्टि, नवपञ्चाशत् स्त्रियाम्।

षष्टिप०—षष्टि (स्त्री०) एकाधिकोनषष्टि (स्त्री०) षड्दशकम् (त्रि०), षड्दशतः परिमाणमस्य।

एकषष्टिप०—एकषष्टि, एकाधिकषष्टि स्त्रियाम्।

द्विषष्टिप०—द्वाषष्टि, द्विषष्टि, द्व्यधिकषष्टि (स्त्री०)।

त्रयःषष्टिप०—त्रयःषष्टि, त्रिषष्टि, त्र्यधिकषष्टि स्त्रियाम्। नवसप्तकम् (त्रि०), सप्तनवकम् (त्रि०)।

चतुःषष्टिप०—चतुःषष्टि, चतुरधिकषष्टि, स्त्रियाम्। अष्टाष्टकम्, (त्रि०), षोडशचतुष्कम् (त्रि०)।

चतुःषष्टिवाचकशब्दा.—अष्टकृति (स्त्री०), अष्टवर्ग (पु०), आभास्वरा (पु० ब०), कला. (स्त्री० ब०), चतुर्घन (पु०), दन्तद्वयम् (त्रि०)।

पञ्चषष्टिपर्याया—पञ्चषष्टि. (स्त्री०),

पञ्चाधिकषष्टि (स्त्री०) त्रयोदशपञ्चकम् (त्रि०)।

षट्षष्टिप०—षट्षष्टि (स्त्री०), षडधिकषष्टि (स्त्री०)। एकादशषट्कम् (त्रि०)।

सप्तषष्टिप०—सप्तषष्टि (स्त्री०) सप्ताधिकषष्टि (स्त्री०)।

अष्टषष्टिप०—अष्टषष्टि, अष्टाषष्टि, अष्टाधिकषष्टि (स्त्री०)।

एकोनसप्ततिप०—ऊनसप्तति, एकाद्नसप्तति, एकान्नसप्तति, एकोनसप्तति, नवषष्टि स्त्रियाम्।

सप्ततिप० सप्तति (स्त्री०), एकाधिकोनसप्तति (स्त्री) सप्तदशकम् (त्रि०), सप्तदशत परिमाणमस्य।

एकसप्ततिप०—एकसप्तति, एकाधिकसप्तति (स्त्री०)।

एकसप्ततियाचकशब्दा -मन्वन्तरम् (न०)।

द्विसप्ततिप०—द्वासप्तति, द्विसप्तति द्व्यधिकसप्तति (स्त्री०), अष्टनवकम्, द्वादशषट्कम्, नवाष्टकम् (त्रि०)।

त्रिसप्ततिप०—त्रय सप्तति, त्रिसप्तति, त्र्यधिकसप्तति (स्त्री०)।

चतुःसप्ततिप०—चतुःसप्तति, चतुर्धिकसप्तति (स्त्री०)।

पञ्चसप्ततिप०-पञ्चसप्तति पञ्चाधिकसप्तति (स्त्री०), पञ्चदशपञ्चकम् (त्रि०)।

षट्सप्ततिप०—षट्सप्तति, षडधिकसप्तति (स्त्री०)।

सप्तसप्ततिप०-सप्तसप्तति, सप्ताधिकसप्तति (स्त्री०), एकादशसप्तकम् (त्रि०)।

अष्टसप्ततिप०—अष्टसप्तति, अष्टासप्तति, अष्टाधिकसप्तति (स्त्री०)।

ऊनाशीतिप०—ऊनाशीति, एकाद्नाशीति, एकान्नाशीति, एकोनाशीति, नवसप्तति (स्त्री०)।

अशीतिप०—अशीति, एकाधिकोनाशीति (स्त्री), अष्टदशकम् दशाष्टकम्, विंशतिचतुष्कम्, षोडशपञ्चकम् (त्रि०)। अष्टदशत परिमाणमस्य।

एकाशीतिप०—एकाशीति, एकाधिकाशीति (स्त्री०), नवनवकम् (त्रि०)।

एकाशीतिवा०—नवकृति (स्त्री०), नववर्ग (पु०)।

द्व्यशीतिप०—द्व्यशीति, द्व्यधिकाशीति (स्त्री०)।

त्र्यशीतिप०—त्र्यशीति, त्र्यधिकाशीति (स्त्री)।

चतुरशीतिप०—चतुरधिकाशीति (स्त्री०), द्वादशसप्तकम् (त्रि०)।

पञ्चाशीतिप०—पञ्चाशीति, पञ्चाधिकाशीति (स्त्री), सप्तदशपञ्चकम् (त्रि०)।

षडशीतिप०—षडशीति, षडधिकाशीति (स्त्री)।

सप्ताशीतिप०—सप्ताशीति, सप्ताधिकाशीति (स्त्री)।

अष्टाशीतिप०—अष्टाशीति, अष्टाधिकाशीति (स्त्री०), एकादशाष्टकम् (त्रि०)।

ऊननवतिप०—नवनवति एकाद् ऊननवति एकान्न

पूर्णार्थकशिप०—'तृतीय (त्रि०), तृतीया (स्त्री०) ति० वि० ।

पू० चतुप०—'चतुर्थ (त्रि०), चतुर्थी (स्त्री०) ति० वि० ।

पू० पञ्चप०—'पञ्चम (त्रि०),पञ्चमी (स्त्री०)। ति० वी० ।

पू०षट्प०—'षष्ठ (त्रि०) षष्ठी (स्त्री०) । ति० वि० ।

पू०सप्तप०—'सप्तम० (त्रि०) सप्तमी (स्त्री०), ति० वि० ।

पू० अष्टप०:—अष्टम' (त्रि०), अष्टमी (स्त्री०) ति. वि ।

पू० नवप०—नवम' (त्रि०), नवमी (स्त्री) ति वि ।

पू० दशप०--दशम' (त्रि०), दशमी (स्त्री), ति वि ।

पू० एकादशप०—एकादश,' एकादशक, एकादशतम (त्रि०), एकादशी (स्त्री०), तिथिविशेष ।

पू० द्वादशप०—द्वादश," द्वादशक द्वादशतम (त्रि०), द्वादशी (स्त्री) ति वि ।

पू० त्रयोदशप०—त्रयोदश," त्रयोदशक, त्रयोदशतम (त्रि०), त्रयोदशी(स्त्री) तिथिविशेष ।

पू० चतुर्दशप०—चतुर्दश," चतुर्दशक,चतुर्दशतम (त्रि०) । चतुर्दशी (स्त्री०) ति वि ।

पू० पञ्चदशप०—पञ्चदश,"पञ्चदशक, पञ्चदशतम (त्रि) । पञ्चदशी (स्त्री०) अमावास्या, पूर्णमासी ।

पू० षोडशप०—षोडश "षोडशक, षोडशतम (त्रि०) ।

पू० सप्तदशप०—सप्तदश," सप्तदशक, सप्तदशतम (त्रि०) ।

पू० अष्टादशप०—अष्टादश," अष्टादशक, अष्टादशतम (त्रि०) ।

पू० एकोनविंशति—ऊनविंश," ऊनविंशतितम, एकोनविंश, एकोनविंशतम, एकोनविंशतितम (त्रि०) ।

पू० विंशतिप०—विंश," विंशतम, विंशतितम (त्रि०) ।

१-२० २१-३९

(१) 'तीसरा=री' इ भा ।
(२) 'चौथा=थी' इ भा ।
(३) 'पांचवां=वीं' इ भा ।
(४) 'छठा=ठी' इ भा ।
(५) सातवां=वीं' इति भाषा ।
(६) आठवा=वीं (इ भा) ।
(७) नवा=वीं (इ भा) ।
(८) दसवां=वीं (इ भा) ।
(९) ग्यारहवा=वीं (इ भा) ।
(१०) बारहवां=वीं (इ भा) ।
(११) तेरहवां=वीं (इ भा) ।
(१२) चौदहवां=वीं (इ भा) ।
(१३) पन्दरहवा=वीं (इ भा) ।
(१४) सोलहवां=वीं (इ भा) ।
(१५) सत्रहवा=वीं (इ भा) ।
(१६) अट्ठारहवां=वीं (इ भा) ।
(१७) उन्नीसवां=वीं (इ भा)
(१८) बीसवां=वीं (इ भा) ।

पू० एकविंशतिप०—एकविंश एकविंशत्तम, एकविंशतितम (त्रि०)।

पू० द्वाविंशतिप०—द्वाविंश, द्वाविंशत्तम, द्वाविंशतितम (त्रि०)।

पू० त्रयोविंशतिप०—त्रयोविंश, त्रयोविंशत्तम, त्रयोविंशतितम (त्रि०)।

पू० चतुर्विंशतिप०—चतुर्विंश चतुर्विंशत्तम, चतुर्विंशतितम (त्रि०)।

पू० पञ्चविंशतिप०—पञ्चविंश, पञ्चविंशत्तम पञ्चविंशतितम (त्रि०)।

पू० षड्विंशतिप०—षड्विंश, षड्विंशत्तम, षड्विंशतितम (त्रि०)।

पू० सप्तविंशतिप०—सप्तविंश, सप्तविंशत्तम, सप्तविंशतितम (त्रि०)।

पू० अष्टाविंशतिप०—अष्टाविंश, अष्टाविंशत्तम, अष्टाविंशतितम. (त्रि०)।

पू० ऊनत्रिंशत्प०—ऊनत्रिंश, ऊनत्रिंशत्तम, एकोनत्रिंश एकोनत्रिंशत्तम (त्रि०)।

पू० त्रिंशत्प०—त्रिंश, त्रिंशत्तम (त्रि०)।

पू० एकत्रिंशत्प०-एकत्रिंश, एकत्रिंशत्तम (त्रि०)।

पू० द्वात्रिंशत्प०—द्वात्रिंश, द्वात्रिंशत्तम (त्रि)।

पू० त्रयस्त्रिंशत्प०—त्रयस्त्रिंश त्रयस्त्रिंशत्तम (त्रि)।

पू० चतुस्त्रिंशत्प०—चतुस्त्रिंश, चतुस्त्रिंशत्तम (त्रि)।

पू० पञ्चत्रिंशत्प०- पञ्चत्रिंश, पञ्चत्रिंशत्तम (त्रि)।

पू० षट्त्रिंशत्प०—षट्त्रिंश, षट्त्रिंशत्तम (त्रि)।

पू० सप्तत्रिंशत्प०—सप्तत्रिंश, सप्तत्रिंशत्तम (त्रि)।

पू० अष्टत्रिंशत्प०—अष्टत्रिंश, अष्टात्रिंश, अष्टत्रिंशत्तम, अष्टात्रिंशत्तम (त्रि)।

पू० ऊनचत्वारिंशत्प०—ऊनचत्वारिंश, ऊनचत्वारिंशत्तम एकोनचत्वारिंश, एकोनचत्वारिंशत्तम (त्रि)।

पू० चत्वारिंशत्प०—चत्वारिंश, चत्वारिंशत्तम (त्रि)।

पू० एकचत्वारिंशत्प०—एकचत्वारिंश, एकचत्वारिंशत्तम (त्रि)।

पू० द्विचत्वारिंशत्प०—द्वाचत्वारिंश, द्वाचत्वारिंशत्तम, द्विचत्वारिंशत्तम (त्रि)।

पू० त्रयश्चत्वारिंशत्प०—त्रयश्चत्वारिंश, त्रयश्चत्वारिंशत्तम त्रिचत्वारिंश, त्रिचत्वारिंशत्तम (त्रि)।

पू० चतुश्चत्वारिंशत्प०—चतुश्चत्वारिंश, चतुश्चत्वारिंशत्तम (त्रि)।

पू० पञ्चचत्वारिंशत्प०—पञ्चचत्वारिंश, पञ्चचत्वारिंशत्तम (त्रि)।

पू० षट्चत्वारिंशत्प०—षट्चत्वारिंश, षट्चत्वारिंशत्तम (त्रि)।

पू० सप्तचत्वारिंशत्प०—सप्तचत्वारिंश, सप्तचत्वारिंशत्तम (त्रि)।

पू० अष्टचत्वारिंशत्प०—अष्टचत्वारिंश अष्टचत्वारिंशत्तम। अष्टाचत्वारिंश, अष्टाचत्वारिंशत्तम (त्रि)।

पू० ऊनपञ्चाशत्प०—ऊनपञ्चाश, ऊनपञ्चाशत्तम, एकोनपञ्चाश एकोनपञ्चाशत्तम

(त्रि०) ।

पू० पञ्चाशत्प०—पञ्चाश, पञ्चाशत्तम (त्रि०) ।

पू० एकपञ्चाशत्प०— एकपञ्चाश, एकपञ्चाशत्तम (त्रि०) ।

पू० द्विपञ्चाशत्प०—द्वापञ्चाश, द्वापञ्चाशत्तम, द्विपञ्चाश, द्विपञ्चाशत्तम (त्रि०) ।

पू० त्रिपञ्चाशत्प०—त्रय पञ्चाश, त्रय पञ्चाशत्तम, त्रिपञ्चाश, त्रिशपञ्चाशत्तम (त्रि०) ।

पू० चतु पञ्चाशत्प०—चतु पञ्चाश चतु पञ्चाशत्तम (त्रि०) ।

पू० पञ्चपञ्चाशत्प०—पञ्चपञ्चाश, पञ्च पञ्चाशत्तम (त्रि०) ।

पू० षट्पञ्चाशत्प०—षट्पञ्चाश षटपञ्चाशत्तम (त्रि०), षट्पञ्चाशिका (स्त्री०) ।

पू० सप्तपञ्चाशत्प०—सप्तपञ्चाश, सप्त पञ्चाशत्तम (त्रि०) ।

पू० अष्टपञ्चाशत्प०—अष्टपञ्चाश, अष्ट-पञ्चाशत्तम, अष्टापञ्चाश, अष्टापञ्चाशत्तम (त्रि०) ।

पू० ऊनषष्टिप०—ऊनषष्ट, ऊनषष्टितम, एकोनषष्टि', एकोनषष्टितम त्रि०) ।

पू० षष्टिप०—षष्ट, षष्टितम (त्रि०) ।

पू० एकषष्टिप०—एकषष्ट एकषष्टितम (त्रि०) ।

पू० द्विषष्टिपर्याया —द्वाषष्ट द्वाषष्टितम द्विषष्ट द्विषष्टितम (त्रि०) ।

पू० त्रिषष्टिप०—त्रय षष्ट, त्रय षष्टितम त्रिषष्ट, त्रिषष्टितम (त्रि०) ।

१–२६

पू० चतु षष्टिप०—चतु षष्ट, चतु षष्टितम (त्रि०) ।

पू० पञ्चषष्टिप०—पञ्चषष्ट, पञ्चषष्टितम, (त्रि०) ।

पू० षट्षष्टिप०—षट्षष्ट, षट्षष्टितम, (त्रि०) ।

पू० सप्तषष्टिप०—सप्तषष्ट, सप्तषष्टितम, (त्रि०) ।

पू० अष्टषष्टिप०—अष्टषष्ट, अष्टषष्टितम, अष्टाषष्ट, अष्टाषष्टितम (त्रि०) ।

पू० ऊनसप्ततिप०—ऊनसप्तत, ऊनसप्ततितम, एकोनसप्त एकोनसप्ततितम (त्रि०) ।

पू० सप्ततिप०—सप्तत, सप्ततितम (त्रि०) ।

पू० एकसप्ततिप०—एकसप्तत, एकसप्ततितम, (त्रि०) ।

पू० द्विसप्ततिप०—द्वासप्तत, द्वासप्ततितम, द्विसप्तत, द्विसप्ततितम (त्रि०) ।

पू० त्रिसप्ततिप०—त्रय सप्तत त्रय सप्ततितम, त्रिसप्तत, त्रिसप्ततितम (त्रि०) ।

पू० चतु सप्ततिप०—चतु सप्तत, चतु सप्ततितम (त्रि०) ।

पू० पञ्चसप्ततिप०—पञ्चसप्तत पञ्चसप्ततितम (त्रि०) ।

पू० षट्सप्ततिप०—षट्सप्तत, षट्सप्ततितम (त्रि०) ।

पू० सप्तसप्ततिप०—सप्तसप्तत, सप्तसप्ततितम (त्रि०) ।

पू० अष्टसप्ततिप०—अष्टसप्तत, अष्टसप्ततितम, अष्टासप्तत, अष्टासप्ततितम (त्रि०) ।

३०–५८

इह भजनप्रकारमाह भास्करः—
'भाज्याद्धरः शुद्धयति यद्गुणः स्यादन्त्यात्फलं तत्खलु भागहारे।' इ ली च ।

लब्धिवाचकशब्दाः—लाभ (पु०) । अवाप्ति, प्राप्ति, लब्धि, समवाप्ति-श्चैते स्त्रियाम्। अवाप्तम् प्रापणम्, फलम्, भजनफलम् भागफलम्, लभनम्, चैते क्लीबे।
प्राप्तः, प्राप्त, लब्ध श्चैते त्रिषु।
क्वचिद्भजनवाचकशब्दाः—अवाप्त, आप्त, आप्ति, फलम्, लब्धम्, लब्धिश्चेत्यादयः शब्दाः क्वचिद्भजनार्थेऽपि प्रयुज्यन्ते।

उदाहरणानीह

'अमरफलाधिमासयुक्तमिति' । 'अब्धिपक्षलब्धं रूनाहैरिति ।
'क्विभाब्जैरवाप्ताशयोग इति च ग्रहलाघवे ।
शेषवाचकशब्दाः—अवशिष्ट, अवशेष, अवशेषित, उच्छिष्ट, उर्वरित, परिशिष्ट, परिशेष, परिशेषित, शेष शेषितश्चैते त्रिषु । एते क्वचिद् भजनार्थमपि प्रयुज्यन्ते ।
निःशेषपर्यायाः—निःशेष, निरवशिष्टम्, निरवशेष, निरवशेषितश्चैते त्रिषु ।

तष्टवाचकशब्दाः—कृश, कृशारव्यक, क्षयित, तक्ष्यम्, तनु, तनूकृतम्, तष्ट, त्वष्ट, सूक्ष्मकृतश्चैते त्रिषु। सूक्ष्मीकरणम् (न०)।

अन्तरवाचकशब्दाः—अन्तरम् (न०), अन्तरित, (त्रि०), छिद्रम्, रन्ध्रम्, विलम्, विवरम्, चैते क्लीबे।

*योज्यादीनां नामानि—(१) योज्य, (२) योजक, (३) वियोज्य (शोध्य), (४) वियोजक (शोधक), (५) गुण्य, (६) गुणक, (७) भाज्य, (८) भाजकश्चैते पुंलिङ्गा ।
सङ्कलनीयवाचकशब्दाः[१]—परियोजनीय, परियोजितव्य, परियोज्य, प्रयोजनीय, प्रयोजितव्य, प्रयोज्य, योजनीय, योजितव्य, योज्य, सङ्कलनीय, सङ्कलितव्य, सङ्कल्य, सयोजनीय, सयोजितव्य, सयोज्यश्चैते त्रिषु ।
वियोजनीयवाचकशब्दाः[२]—पतनीय, पतितव्य, पात्य, परिशोधनीय, परिशोधितव्य, परिशोध्य, वियोजनीय, वियोजितव्य, वियोज्य, विशोधनीय, विशोधितव्य, विशोध्य, व्यवकलनीय व्यवकलितव्य, व्यवकल्य, शोधनीय, शोधितव्य शोध्य, सशोधनीय, सशोधितव्य, सशोध्यश्चते त्रिषु ।

१–२२ २३–४५

*(१) वह अंक जिसमें कोई अंक जोड़ा जावे (२) वह अंक जो किसी अंक में जोड़ा जावे (३) वह अंक जिसमें से कोई अंक घटाया जावे (४) वह अंक जो किसी अंक से घटाया जावे (५) वह अंक जो किसी अन्य अंक से गुणा किया जावे (६) वह अंक जिससे कोई अंक गुणा किया जावे (७) वह अंक जिसमें किसी अंक से भाग दिया जावे (८) वह अंक जिससे किसी अंक में भाग दिया जावे।

(१) जोड़ने योग्य अंक (२) घटाने योग्य अंक ।

पू० ऊनाशीतिप०—ऊनाशीत, ऊनाशीतितम, एकोनाशीत एकानाशीतितम (त्रि०)।

पू० अशीतिप०—अशीत अशीतितम (त्रि०)।

पू० एकाशीतिप०—एकाशीत एकाशीतितम (त्रि०)।

पू० द्व्यशीतिप०—द्व्यशीत द्व्यशीतितम (त्रि०)।

पू० त्र्यशीतिप०—त्र्यशीत त्र्यशीतितम (त्रि०)।

पू० चतुरशीतिप०—चतुरशीत चतुरशीतितम (त्रि०)।

पू० पञ्चाशीतिप०—पञ्चाशीत पञ्चाशीतितम (त्रि०)।

पू० षडशीतिप०—षडशीति, षडशीतितम (त्रि०)।

पू० सप्ताशीतिप०—सप्ताशीति, सप्ताशीतितम (त्रि०)।

पू० अष्टाशीतिप०—अष्टाशीति, अष्टाशीतितम (त्रि०)।

पू० ऊननवतिप०—ऊननवत, ऊननवतितम एकोननवत, एकाननवतितम (त्रि०)।

पू० नवतिप०—नवत, नवतितम (त्रि०)।

पू० एकनवतिप०—एकनवत, एकनवतितम (त्रि०)।

पू० द्विनवतिप०—द्वानवत, द्वानवतितम, द्विनवति, द्विनवतितम (त्रि०)।

पू० त्रिनवतिप०—त्रयानवत, त्रयानवतितम, त्रिनवति, त्रिनवतितम (त्रि०)।

पू० चतुर्णवतिप०—चतुणवत, चतुणवतितम (त्रि०)।

पू० पञ्चनवतिप०—पञ्चनवत, पञ्चनवतितम (त्रि०)।

पू० षण्णवतिप०—षण्णवत, षण्णवतितम (त्रि०)।

पू० सप्तनवतिप०—सप्तनवत, सप्तनवतितम (त्रि०)।

पू० अष्टनवतिप०—अष्टनवत, अष्टनवतितम, अष्टानवत अष्टानवतितम (त्रि०)।

पू० नवनवतिप०—ऊनशततम एकानशततम, नवनवत, नवनवतितम (त्रि०)।

पू० शतप०—शततम (त्रि०)। शतस्य पूरणे।

प्रकारार्थवाचकसंख्याशब्दा —द्विधा, द्वधा, द्वैधा चैतेऽव्यया। द्वैविध्यम् (न०), (द्विप्रकारम्)। त्रिधा, त्रेधा, त्रैधा, चैतेऽव्यया। त्रैविध्यम् (न०) (त्रिप्रकारम्)। चतुर्धा (अ०) (चतुःप्रकारम्)। पञ्चधा (अ०) (पञ्चप्रकारम्)। षट्धा, षोढा उभावव्ययौ (षट्प्रकारम्)। सप्तधा (अ०) (सप्तप्रकारम्), अष्टधा (अ०) (अष्टप्रकारम्), नवधा (अ०) नवप्रकारम (एवमग्र ऊहनीया)।

संख्यावाचकशब्दाना क्वचिद्विशेषरूपाणि—यथा। सप्ताह (पु०) (सप्तदिवसा) (सप्तदिनात्मक काल)। नवाह (पु०) (नवदिवसा) (नवदिनात्मक काल)।

एकद्वौ (त्रि०) (एको वा द्वौ वा)। द्वित्रा (त्रि०) (द्वौ वा त्रयो वा) परिमाण येषा तेषु बहुवचना-तोऽयम्। त्रिचतुरा (त्रि०) (त्रयो वा चत्वारो वा)। त्रिपञ्चा (त्रि०) त्रयो वा पञ्च वा),।

चतुःपञ्चाः (त्रि०) (चत्वारो वा पञ्च वा)। पञ्चषाः (त्रि०) (पञ्च वा षड्वा) परिमाण येषां तेषु बहुवचनान्तोऽयम् (पाँच या छः इति भाषा)। षट्सप्ताः (त्रि०) (षड्वा सप्त वा)।

सप्ताष्टाः (त्रि०) (सप्त वा अष्ट वा)। एवमग्रे। द्विकृत्वः (अ०) (द्विवारम्)। त्रिकृत्वः (अ०) (त्रिवारम्)। चतुष्कृत्वः (अ०) (चतुर्वारम्), एवमग्रेऽपि।

[1]सर्वपर्यायाः—अखण्ड, अखिल, अनून, अनूनक, अन्यून, अशेष, कृत्स्न, निःशेष, निखिल, न्यक्ष, पूर्ण, विश्व, सकल, सम, समग्र, समस्त, सर्वश्चैते वाच्य-(त्रि०) लिङ्गाःस्युः।

[2]पादोनप०-त्र्यंशन्यून, चरणोन, त्रिचरण, त्रिपद, त्रिपाद, त्र्यङ्घ्रि, पदोन, पादोन, विचरण, विपद, विपाद, व्यङ्घ्रिश्चैते त्रिलिङ्गाः स्युः।

[3]अर्धप०—अर्धः (त्रि०), खण्ड (पु० न०), खण्डलम् (न०), दलम् (न०), नेम (पु०), भित्तम् (न०), शकलम् (पु० न०), शल्कम् (न०)।

[4]दलितप०—अर्धित, खण्डित, दलितश्चैते त्रिलिङ्गाः।

[5]सार्धप०—सखण्ड, सखण्डलम्, सदलम्, सनेम, सभित्तम्, सशकलम्, सार्द्धम्।

[6]सपादप०—सचरण, सपद, सपाद, साङ्घ्रि।

[7]चतुर्थांशप०—अङ्घ्रि, अर्धार्धं चतुर्थभाग चतुर्थांश, चरण तुरीय तुरीयक, पद, पाद।

[8]अंशप०—अंश, भाग, वण्ट, वण्टक।

संख्यानाम्ना विषये विशेषसूचना—

"दीयमत्समानधर्मैर्हीरिव ग्रन्थेषु गुणाः, अग्नयश्च त्रयः। समुद्राश्चत्वारः। वायवः पञ्च। कालाः रसाश्चषट्। द्वीपाः सप्त। विश्वेदेवा-एकादश। भुवनानि चतुर्दश। कलाः नृपाश्च षोडश। मेघाः सप्तदश। धान्यानि अष्टादश। शेषसंख्याः समानाः।"

अङ्कन्यासवाचकशब्दाः—अङ्कनिवेशनम अङ्कन्यास, अङ्कस्थापनम्।

अङ्कन्यासविधिवा०—अङ्कन्यासक्रम, अङ्कन्यास नियम अङ्कन्यासविधि।

अत्र गणितविदां सम्प्रदायागतपरिभाषा—

'अङ्कानां वामतो गतिः।' इति।

अङ्कानां स्थापनं सव्य-(वाम) क्रमेण कर्तव्य-मित्यर्थः।

अत्रोदाहरणं प्रदर्शयति—

'आकाशपक्षक्षितिसम्मिताः समाः पूर्णायुरुक्तं मनुजस्य हस्तिनः।' इतिग्र० का०। आकाशः शून्यम्, पक्षौ द्वौ क्षितिः एका, चैतेषामङ्कानां सव्य-(वाम) क्रमेण स्थापनमित्थम्—१२० अर्थाद् विंशत्युत्तरशत समाना मनुजस्य नरस्य हस्तिनश्च

१-२४ २५-४८

(१) सब, सारा। (२) तीन पाद (पौन, पौणा)। (३) आधा, दोखाद। (४) आधा किया हुआ। (५) अर्धयुक्त (ड्योढ़ा) एक (६) चतुर्थांश युक्त (सवैया) एक (७) चौथा भाग (पौवा)। (८) बाँट (हिस्सा)।

**अन्तरितवाचकशब्दा[1]:**—अन्तरित, परिशोधित, विशोधित, शोधित, सशोधितश्चैते त्रिषु।

**गुणनीयवाचकशब्दा[2]:**—गुणनीय, गुणितव्य, गुण्य, ताडनीय, ताडितव्य ताड्य, सगुणनीय, सगुणितव्य, सगुण्य, सताडनीय, सताडितव्य, सताड्य, हननीय, हन्तव्य, हन्यश्चैते त्रिषु।

**भजनीयवाचकशब्दा[3]** परिभजनीय, परिभजितव्य, परिभज्य, परिभाजनीय, परिभाजितव्य, परिभाज्य, परिहरणीय, परिहर्त्तव्य, परिहार्य, भजनीय, भजितव्य, भज्य, भाजनीय भाजितव्य, भाज्य, विभजनीय, विभजितव्य, विभज्य, विभाजनीय, विभाजितव्य, विभाज्य, हरणीय, हर्तव्य, हार्यश्चैते (त्रिषु)।

**उत्सृष्ट[4]-(परित्यक्त) वाचकशब्दा**—उज्झित, उत्सृष्ट, कृतत्याग, त्यक्त, धूत, परित्यक्त, परिवर्जित, प्रोज्झित, मुक्त, वर्जित, विधुत, विधूत, विवर्जित, विहीन, समुज्झित, हीनश्चैते त्रिषु।

**त्यागप०[5]**—छोरणम् (न०), त्यजनम् (न०), त्याग, (पु०), परित्यजनम् (न०), परित्याग (पु०), परिवजनम् (न०), वर्जनम् (न०) विवर्जनम् (न०)।

**त्याज्य[6]पर्याया:**—अपनेय, त्यक्तव्य, त्यजनीय, त्यागयोग्य, त्यागार्ह, त्याज्य, परिवर्जनीय, परिवर्जितव्य, परिवर्ज्य, वर्जनीय, वर्जितव्य, वर्ज्य, विवर्जनीय, विवर्जितव्य, विवर्ज्य, हातव्य, हातु योग्य, हेयश्चैते त्रिषु।

**पृथक्प०[7]**—पृथक् (अ०), पृथक् स्थापितम् (त्रि०), अनष्टम् (त्रि०), अविनष्टम् (त्रि०)।

**द्विष्ठप०[8]**—द्विष्ठ (त्रि०), स्थानद्वये स्थापितम।

**त्रिष्ठप०[9]**—त्रिष्ठ, (त्रि०), स्थानत्रये स्थापितम्।

**आवृत्तिप[10]०**—आवृत्ति (स्त्री०), गुण (पु०), यथा षड्गुण।

**प्राप्त[11]प०**—प्राप्त आसादित, प्राप्त, भावित, भूत, लब्ध, विन्नश्चैते त्रिषु।

**प्राप्तव्य[12]प०**—प्रापणीय, प्राप्तव्य, प्राप्य, लब्धव्य, लभनीय, लभ्य श्चैते त्रिषु।

**परिगण्याव्ययपर्याया[1]**—गणयित्वा, परिगणय्य, सङ्गणय्य, परिगण्य, सङ्गण्य, चैतेऽव्यया।

**सयोज्याव्ययवाचकशब्दा[2]**—एकीकृत्य, नियोज्य, मिलित्वा, मेलयित्वा, सयोज्य, समेत्य, सम्मिल्य, सम्मेल्य, चैतेऽव्यया।

१-२२ २३-४४

(१) घटाया हुआ (२) गुणा, गुणा करने योग्य (३) विभाग करने योग्य, बाँटने योग्य (४) छोड़ा, छोड़ा हुआ (५) छोड़ना (६) छोड़ने योग्य (७) अलग रखना, अलग रखा हुआ (८) दो स्थान मे रखा हुआ (९) तीन स्थान मे रखा हुआ (१०) गुना द्विगुना (११) पाया या मिला हुआ (१२) मिलने योग्य।

(१) गिनकर (२) जोड़कर

वियोज्याऽव्ययवाचकशब्दाः[1]—अपनीय, अपास्य, परिशोध्य, शोधयित्वा, वियोज्य, विशोध्य, व्यवकल्य, सशोध्य, चैतेऽव्यया ।

गुणयित्वाऽव्ययवाचकशब्दाः[2]—अभिहत्य, गुणयित्वा, गुणित्वा, ताडयित्वा, निहत्य, प्रणिहत्य, विनिहत्य, सहत्य, सङ्गुणय्य, सन्ताड्य, सम्पिण्ड्य, हत्वा, चैतेऽव्यया ।

हृत्वाऽव्ययवाचकशब्दा[3]—छित्वा, परिहृत्य, भक्त्वा, भक्त्वा, भाजयित्वा, विभज्य, विभाज्य, विहृत्य, सविभज्य, सविभाज्य, सविहृत्य हृत्वा, चैतेऽव्ययाः ।

त्यक्त्वाऽव्ययवाचकशब्दाः[4]—अपनीय, अपहाय, त्यक्त्वा, परित्यज्य, परिहृत्य, प्रोज्झ्य, वर्जयित्वा, विवर्ज्य विहाय, सन्त्यज्य, हित्वा, चैतेऽव्यया ।

सम्प्राप्याऽव्ययवाचकशब्दा[5]—अधिगम्य, प्रापय्य, प्राप्य, सम्प्राप्य, सलभ्य, चैतेऽव्यया ।

कृत्वाऽव्ययवाचकशब्दा —कारयित्वा, कृत्वा, विधाय, सविधाय ।

प्राप्तिप०[6]—आय (पु०), लाभ (पु०), आप्ति (स्त्री०), उपलब्धि (स्त्री०), प्राप्ति (स्त्री), लब्धि (स्त्री), वित्ति (स्त्री०), फलम् (न०) ।

व्ययप०[7]—अर्थवर्तनम् (न० ), अर्थात्यय, अर्थापगम, अर्थापचय, वित्तापगम, वित्तात्यय, वित्तापचय, व्यय-श्चैते पुल्लिङ्गा ।

धनप०—अक्षयम्, अनृणम्, अनम्, स्वम् ।

ऋणप०—अधनम्, अस्वम्, ऋणम्, क्षयम् ।

धनाधनपर्याया —धनक्षयम्, धनर्णम्, धनाधनम्, स्वर्णम् ।

योगप०—ऋणर्णयुति, क्षयक्षययुति धनधनयुति, धनर्णान्तरम्, स्वर्णान्तरम्, स्वस्वयुति ।

तदुक्त बीजगणिते—

'योगे युति स्यात्क्षययो स्वयोर्वा धनर्णयोरन्तरमेव योग ।' इति ।

खण्डगुणनप०—खण्डगुणनम् (न०), गुणनविशेष ।

अत्राह भास्कर —

गुण्यस्त्वधोऽधो गुणखण्डतुल्यस्तै खण्डकै सगुणितो युतो वा ।' इति लीलावत्याम् ।

अपवर्तकप०[8]—अपवर्तक (त्रि०) ।

अपवर्तनप०[9]—अपवर्तनम् (न०) ।

अपवर्त्यप०[10]—अपवर्त्य (त्रि०) ।

१–२१ २२–४१

(१) घटा कर (२) गुन कर (३) भागदेकर (४) छोडकर (५) पाकर (६) मिलना, लाभ, आमदनी (७) खरच, उठाव ।

(८) वह सख्या जिससे अन्य दो या अधिक सख्याओं को भाग देने पर शेष कुछ न रहे (९) बडी सख्याओं को सक्षेप करना लाघव, उलटफेर, पलटावा (१०) जिस सख्या को दूसरी किसी सख्या से भाग देने पर कुछ न बचे वह उस सख्या का 'अपवर्त्य' कहलाता है ।

तदुक्त भास्करेण—

'समेन केनाप्यपवर्त्य हारभाज्यौ भवेद्वा सति सम्भवे तु। इ० ली० व०।

अपवर्तितप०'—अपवर्तित (त्रि०)।

तथा च भास्कर —

'मिथो हराभ्यामपवर्तिताभ्या यद्वा हराशौ सुधियात्र गुण्यौ। इ० ली० व०।

सवर्णनप०'—सवर्णनम् (न०)।

तदुक्त भास्करेण—

'लवा लवघ्नाश्च हरा हरघ्ना भागप्रभागेषु सवर्णन स्यात्।' इति ली० व०।

अशप०'—अश (पु०), लव (पु०), भाज्याङ्क (पु०)।

राशिप०'—राशि (पु०), पुञ्ज (पु०), समूह (पु०)।

हरप०'—छिद्, छेद (पु०), छेदनम् (न०), भाजक, विभाजक, हर, हारश्चैते पुसि।

समच्छेदप०'—समच्छिद्, समच्छित्ति (स्त्री०), समच्छेद (पु०), छेदसाम्यम् (न०)।

उक्त च भास्करेण—

'अन्योन्यहाराभिहतौ हराशौ राश्यो समच्छेदविधानमेवम्। मिथो हराभ्यामपवर्तिताभ्या यद्वा हराशौ सुधियात्र गुण्यौ॥'

इति लीलावत्याम्।

शम्भुहोराप्रकाशेऽपि—

'निघ्नावन्योन्यश्च हारैर्हराशावेव राश्योश्छेदसाम्य भवेद्वा। सच्छिष्याणा सम्यगेव मयात्र बोधायैतत्प्रोक्तमन्तर्दशासु॥ इति पुञ्जिराज।

वर्गपर्याया'—कृति (स्त्री०), वर्ग (पु०), समद्विघात (पु०), (सदृशद्विराशिघात वा स्व गुणोऽङ्को वर्ग इत्यर्थ)।

वर्गानयनविधि प्राह भास्कर —

समद्विघात कृतिरुच्यतेऽथ स्थाप्योऽन्त्यवर्गो द्विगुणान्त्यनिघ्ना। स्वस्वोपरिष्टाच्च तथापरेऽङ्का स्त्यक्त्वाऽन्त्यमुत्सार्य पुनश्च राशिम्॥ इ० ली० व०।

वर्गसख्यायामुपरि विषम (।) सम (–) रेखास्थापनप्रकार उक्तो ग्रन्थान्तरे—

'अन्त्य यावदिहेच्छाङ्कादूर्ध्वं (।) तिर्यक्स्य (–) रेखया। सख्स्थानाङ्कताना च विषमाख्य सम क्रमात्॥' इति।

यथा न्यास —२५७८ (ऊपर – । – ।)

वर्गमूलपर्याया—पदम्, मूलम्, वर्गमूल चैते क्लीबे।

वर्गमूलानयनप्रकार प्राह भास्कर —

'त्यक्त्वाऽन्त्याद्विषमात्कृति

द्विगुणयेन् मूल समे तद्धृते,

१–२४ २५–४७

(४) पलटी हुई या बदली हुई सख्या। (५) अशों से अशों को गुणना एव हरों से हरों को गुणना उसे सवर्णन कहते हैं। (६) भिन्न की लकीर के ऊपर की सख्या या राशि (७) भिन्न की लकीर के ऊपर तथा नीचे की सख्या, (८) भिन्न की लकीर के नीचे की सख्या। (९) भिन्न की लकीर के नीचे की गुणी हुई समान सख्या।

त्यक्त्वा लब्धकृतिं तदाद्यविषमात्

लब्धं द्विनिघ्नं न्यसेत् ।

पङ्क्त्या पङ्क्तिहृते समेऽन्त्यविषमात्

त्यक्त्वाऽऽप्तवर्गं फलं,

पङ्क्त्यां तद्द्विगुणं न्यसेदिति मुहुः

पङ्क्तेर्दलं स्यात्पदम् ॥

इ ली व ।

आर्यभट्टीयेऽपि—

भागं हरेदवर्गान्नित्यं द्विगुणेन वर्गमूलेन ।

वर्गाद्वर्गे शुद्धे लब्धं स्थानान्तरेमूलम् ॥'

इ आ भ ।

घनपर्यायाः—घनः (पु० न०), वृन्दम् (त्रि०), समत्रिघातः (पु०), (समत्रिराशिहतिः, वर्गो वर्गमूलाहतो वा) ।

तदानयनप्रकारं प्राह भास्करः—

'समत्रिघातश्च घनः प्रदिष्टः

स्थाप्यो घनोऽन्त्यस्य ततोऽन्त्यवर्गः ।

आदित्रिनिघ्नस्तत आदिवर्ग-

स्त्र्यन्त्याहतोऽथादिघनश्च सर्वे ॥

स्थानान्तरत्वेन युता घनः स्यात्,

प्रकल्प्य तत्खण्डयुगं ततोऽन्त्यम् ।

एवं मुहुर्वर्गघनप्रसिद्धा-

-वाद्यङ्कतो वा विधिरेष कार्यः ॥

घनमूलप०—घनमूलम् (न०)

तदानयनप्रकारं प्राह भास्करः—

'आद्यं घनस्थानमथाघने द्वे

पुनस्तथान्त्याद् घनतो विशोध्य ।

घनं पृथक्स्थं पदमस्य कृत्या

त्रिघ्न्या तदाऽऽद्यं विभजेत्फलं तु ॥

पङ्क्त्या न्यसेत्तत्कृतिमन्त्यनिघ्नीम्

त्रिघ्नीं त्यजेत्तत्प्रथमात्फलस्य ।

घनं तदाद्याद् घनमूलमेवं

पङ्क्तिर्भवेदेवमतः पुनश्च ॥

त्रैराशिकपर्यायाः—अनुपातः (पु०) अनुपातकम् (न०), त्रैराशिकम् (न०) ।

त्रैराशिकगणितविधिमाह भास्करः—

'प्रमाणमिच्छा च समानजाती

आद्यन्तयोः स्तः फलमन्यजातिः ।

मध्ये तदिच्छाहतमाद्यहृत्स्यात्

इच्छाफलं व्यस्तविधिर्विलोमे ॥

इ ली व ।

प्रमाणम् 'फलम्' इच्छा' चेत्येतत् त्रैराशिकम् ।

पराशरहोरायामपि—

प्रमाणमिच्छा तुल्यं च स्याच्यमाद्यन्तयोर्द्वयोः ।

मध्ये फलेऽन्यजातौ च सङ्गुणेदिच्छया द्विज ॥

प्रमाणाप्तस्फुटफलं तदाख्यमनुपातकम् ।' इति

अनुपातः पुं स्याह वराहः—

'नीचेऽतोऽर्द्धं ह्रसति ततश्चान्तरस्थेऽनुपातः'

इ बृ जा ।

(१) त्रैराशिकम्, (२) व्यस्तत्रैराशिकम्, चेतौ त्रैराशिकस्य द्वौ भेदौ स्याताम् ।

तल्लक्षणादिकं प्राह भास्करः—

'इच्छावृद्धौ फले ह्रासो ह्रासे वृद्धिः फलस्य तु ।

व्यस्तं त्रैराशिकं तत्र ज्ञेयं गणितकोविदैः ॥

जीवानां वयसो मौल्ये तौल्ये वर्णस्य हेमनि ।

भागहारे च राशीनां व्यस्तं त्रैराशिकं भवेत् ॥'

इ ली व ।

(१) पञ्चराशिकम्, (२) सप्तराशिकम्, (३) नवराशिकम्। एवमग्रेऽपि। इह पञ्चराशिकादौ करणसूत्रमाह--भास्कर --

पञ्चसप्तनवराशिकादिके
अन्योन्यपक्षनयनं फलच्छिदाम्।
संविधाय बहुराशिजे वधे
स्वल्पराशिवधभाजिते फलम्॥

इ लो व।

गणितशुद्धिपर्याय --गणितशुद्धि (स्त्री०)।

तत्प्रकारमाह बीजदत्त --

'गुण्ये गुणे नवहृते परिशेषघाते
नन्दैर्हृते भवति य परिशेषराशि।
घातेन गुण्यगुणयोर्नवशेषितेन
साम्येन तस्य निगदेद्गणितस्य शुद्धिम्॥'

इति ग्रन्थान्तरे।

पाटीगणितेऽपि--

'हाराप्त्या नवशेषस्तद्यत्तेनाढ्यशेषनवशेष।
भाज्याङ्को नवशेषस्तुल्य स्यात्तदा शुद्ध॥' इति।

इति श्रीमुकुन्ददैवज्ञविरचिते ज्योतिषशब्दकोषे सप्तमो गणनावर्ग समाप्तिमगमत्।

— ० —

## ग्रहगणितवर्गः--

ग्रहपर्याया --खग, खचर, ग्रह नभश्चर शेषपर्यायास्तु ग्रहवर्गे द्रष्टव्य।

ग्रहभेदा --(१) प्रकाशकग्रहौ, (२) ताराग्रहा', (३) तम स्वरूपग्रहौ इति ग्रहाणां त्रयो भेदा. स्यु।

प्रकाशकग्रहनामनी--सूर्य, चन्द्र।

ताराग्रहनामानि--भौम, बुध, गुरु शुक्र शनि।

तम स्वरूपग्रहनामनी--राहु, केतु।

ग्रहगणितपर्याया '--खचरगणितम्, ग्रहगणितम्, द्युचरगणितम्।

१-१७ १८-३२

(१) भारते ग्रहगणितस्य त्रयोभेदा।

(१) सिद्धान्त, (२) तन्त्रम्, (३) करणम्, चेति त्रयोभेदा स्यु। सिद्धान्तस्यापि त्रय पक्षा।

(१) सूर्यसिद्धान्त, (२) आर्यसिद्धान्त, (३) ब्रह्मसिद्धान्तश्चेति त्रय पक्षा। इह सिद्धान्ते सृष्ट्यादितोऽहर्गणानयनमुक्तम्। तन्त्रे युगादितस्तत। करणे तु शकादितस्तदानयन ज्ञेयम्। सृष्ट्याद्यहर्गणभवग्रह उदयान्तरसंस्कारेण संस्कृत कार्यस्तदालङ्का (रेखास्थनगर) मध्यमार्कोदयकालिकमध्यमग्रह स्यात्।

तदुक्त भास्करेण--

वशशिर पुरिमध्यमभास्करे क्षितिजसन्निधिगे सति मध्यम।' इति सि० शि०। अस्मिन् ग्रहे चर संस्कारो देयस्तदा रेखार्कोदयकालीनमध्यमग्रह स्यात्। यद्यभीष्टो ग्रामो रेखाया (भूमध्यरेखाया) बहि स्थित स्तदा रेखान्तरसंस्कार प्रोक्त। स च यथाह--

'रेखा स्वदेशान्तरयोजनघ्नी गतिर्ग्रहस्याभ्रगजाङ्कविभक्ता। लब्ध विलिप्ता खचरे विधेया प्राच्या मृण पश्चिमतो धन सा।' इति करणकुतूहले। अनेन संस्कारेण स्वाभीष्टग्रामे मध्यमार्कोदयकालिको मध्यमग्रह स्यात्। अथवा स्वदेशीयमध्यमग्रह स्यात। एव तन्त्रतोऽपि मध्यमग्रहानयन ज्ञेयमिति।

स्पष्टग्रहसाधनाय विकलाविभेदाः–(१) विकला, (२) कला, (३) अंश, (४) राशि, (५) भगणार्द्धम्, (६) चक्रम्, (७) भगणांश । इति विकलादय सप्तभेदा ।

विकलापर्याया —विकला, विकलिका, विलिप्ता, विलिप्तिका, कलाषष्टिभागैकभाग, विकलाचिन्हम् ,, ।

कलाप०—कला, कलिका, लिप्ता, लिप्तिका, षष्टिविकलोन्मिता, अंशषष्टिभागैकभाग, कलाचिन्हम् , ।

अंशप०—अंश, अंशक, भाग,–क, लव,–क, षष्टिकलोन्मिता, राशित्रिंशद्भागैकभाग । अंशचिन्हम्० ।

राशिप०—भपमण्डलाकोश, भम्, राशि, शेषपर्याया राशिपर्याये द्रष्टव्या ।

भगणार्द्धप०—चक्रदलम्, चक्रार्द्धम्, भगणार्द्धम्, भदलम्, भार्द्धम्, भषट्कम्, राशिदलम्, राशिषट्कम् राश्यर्द्धम् ।

भगणप०—चक्रम्, पर्ययगण, भगण, भचक्रम्, भसघ, राशिगण, राशिचय, राशिसमूह, षष्ट्युत्तरशतत्रयभागा ।

भगणांशप०—भगणलवा, भगणभागा, भगणांशकाः, भगणांशा, राशिगणभागा, राशिगणलवाः, राशिगणांशकाः, राशिगणांशा ।

भचक्रकलाप०—भचक्रकला, भचक्रकलिका, भचक्रलिप्ता, भचक्रलिप्तिका ।

विकलागणप० विकलागण, विलिप्तागण, विमौरिकगण, ।

समूहप०[1]—आकर, उत्कर, ओघ, कदम्बकम्, कलाप, काण्डम्, कूटम्, गण, चक्रम्, चक्रवाल, चय, जटा, जातम्, जालम्, जालकम् निकर, निकुरम्बम्, निचय, निवह पटलम, पटली, पिण्ड, पुञ्ज पुञ्जक, पुञ्जी, पूग, पेटकम्, प्रकर, प्रचय, मण्डलम्, राशि, राशी, वार, विसर, वृन्दम्, व्यूह, व्रज, व्रात, संहति, संघ, संघात, सञ्चय, सन्दोह, समवाय, समुदय, समुदाय, समूह, स्कन्ध स्तोम ।

वर्षगणप०[2]—अब्दगण, वर्षगण, शकगण, शरद्गण°, संवत्सरगण° ।

चक्रप०—गण चक्रम्, व्रज, कतिवर्षविध्यात्मकः काल ।

मासगणप०—मागण, मासगण, मासचय, मासचय, मासनिचय, मासपिण्ड, मासव्रज°, माससंघ, माससञ्चयः, मासौघ ।

अवमदिनपर्याया —अवम, अवमतिथिः, अवमदिनम, ऊनदिनम्, ऊनाह, क्षयाह, तिथिक्षय°, तिथिप्रणाश, तिथ्यन्तस्पृष्टैकदिनवार° न्यूनाह, हीन ।

अहर्गणप०—अहःसंघ, अन्हाचय अन्हानि

१–२५  २६–५०

(१) इहास्य पर्याया यौगिकशब्दसिद्धयर्थं प्रोक्ता ।

(२) करणारम्भकालीनशकवर्षेण रहितो ऽभीष्टशकाब्दो जातो वर्षगण इति ।

चयः, अहर्गणः गणः, घस्रसंघः, घस्रौघः, दिनगणः, दिनचयः, दिननिचयः, दिनवृन्दम्, दिनव्रजः, दिनसंघः, दिनसञ्चयः, दिनौघः, दिवसगणः, दिवसनिकरः, दिवसव्रजः, दिवसव्रातः, दिवागणः, दिवाचयः दिवाव्रजः, द्युगणः, द्युचयः, द्युपिण्डः, द्युराशिः, द्युवृन्दम्, द्युव्रजः, वासरनिवहः, वासरवृन्दम्, वासरसञ्चयः, वासरौघः।

अहर्गणभेदौ–(१) औदयिकदिनगणः, (२) सावयवदिनगणः।

औदयिकदिनगणपर्यायाः—औदयिकदिनगणः, निरवयवदिनगणः, प्रातःकालीनदिनगणः।

सावयवदिनगणप०—सामीष्टकालिकदिनगणः, सावयवदिनगणः, सेष्टकालीनदिनगणः।

अहर्गणजखगप०—अहर्गणजखगः, दिनगणभवखेटः, द्युगणोद्भवग्रहः, वासरौघभवखचरः।

क्षेपकप०[1]—क्षेपः, क्षेपकः।

ध्रुवकप०[2]—ध्रुवः, ध्रुवकः।

चक्रघ्नध्रुवप०[3]—चक्रगुणितध्रुवः, चक्रघ्नध्रुवः, चक्रनिघ्नध्रुवः, चक्राहतध्रुवकः।

संस्कारप०—भावना, वासना, संस्कारः।

संस्कारभेदाः—(१) उदयान्तरम्, (२) रेखान्तरम्, (३) चरान्तरम्, (४) भुजान्तरम्, (५) बीजान्तरम्, (६) आकर्षणम्। चैते षट्संस्काराः स्युः।

देशान्तरसंस्कारभेदौ—(१) प्राग्परम् (रेखान्तरम्), (२) याम्योत्तरम् (चरान्तरम्), चैतौ द्वौ संस्कारौ स्याताम्।

योजनपर्यायाः[4]—क्रोशचतुष्टयम्, चतुष्क्रोशम्, चतुष्क्रोशी, योजनम्।

भूप०—भूः, भूमिः, शेषपर्यायास्तु भौमपर्यायेषु द्रष्टव्याः।

परिधिप०—कक्षा, परिधिः, मण्डलम्, वृत्तम्, वृत्ताकारपथः।

१–१७ १८–३४

(१, २) करणग्रन्थेऽनायासेनैव मध्यमग्रहानयनार्थं द्वे संज्ञे कल्पिते 'क्षेपकौ' 'ध्रुवक' इति। क्षेपको नाम करणारम्भकाले लङ्कामध्यमार्कोदये यो मध्यमग्रहः स ग्रहस्य क्षेपकः। एकचक्रदिनगणभवमध्यमग्रहः परमदिनगणभवमध्यमग्रहो वा 'ध्रुवक' इति ज्ञेयः।

(३) सोऽभीष्टचक्रेण गुणितो जातश्चक्रनिघ्नध्रुवकः। स्वक्षेपकः, चक्रनिघ्नध्रुवकः, दिनगणभवग्रहश्चैषां त्रयाणां योगसमा उज्जयिनीरेखायां मध्यमार्कोदयसमये मध्यमभौमबुध-शुक्रा भवेयुः। गुरुशन्योरतिदूरस्थत्वात्तयोराकर्षणसंस्कारोऽपि विधेयः। रवौ तु देशान्तरसंस्कारः कर्तव्यः।

चन्द्रे विशेषः—पूर्वपरामृष्टग्रहगणवच्चन्द्रोऽप्युक्तप्रकारानीतो लङ्कायां मध्यमार्कोदयकालीनो मध्यम एव ज्ञेयः।

स च—रेखान्तर—चरान्तर-बीजो-दयान्तर-भुजान्तराणि एभिः संस्कृतः प्रातःकाले औदयिको मध्यमचन्द्रः स्यात्। राहुचन्द्रोच्चयोरपि बीजसंस्कारो देयः। ग्रहलाघवे तु चक्रनिघ्नध्रुवक ऋणमस्ति। तेन तत्राप्यस्य कार्यम्। शेषक्रिया प्राग्वज्ज्ञेया।

(४) योजनज्ञानं मानवर्गे द्रष्टव्यम्।

भूपरिधिप०[1]—कुपरिधि, भूकक्षा, भूपरिधि, भूभगोल, भूमण्डलम् भूमिकक्षा, भूमिगोलपरिधि भूवृत्तम, भूवेष्टनम् महीमण्डलम महीवृत्तम् ।

भूव्यासप०—कुविस्तृति, भूकर्ण, भूविस्तृति, भूव्यास महीव्याम, मेदिनीविस्तृति ।

भूव्यासार्द्धप०—कुविस्तृतिदलम, भूवेष्टनार्द्धम्, भूव्यासार्द्धम् ।

रेखाप०—रेखा, रेपा ।

रेखायोजनप०–रेखाचतुष्क्रोशम्, रेखाचतुष्क्रोशी, रेखायोजनम् ।

रेखांशप०—रेखाभागा, रेखालवा, रेखांशका, रेखांशा ।

भूमध्यरेखाप०—कुमध्यरेखा, भूमध्यरेखा, भूमिमध्यरेखा, महीमध्यरेखा, मेदिनीमध्यरेखा ।

रेखाभूमिप०—रेखाकु, रेखाभू, रेखाभूमि, भूमध्यरेखापुरम् भूमध्यरेखानगरम्, लङ्कासुमेर्वो र्मध्यसूत्रगतदेश, वाग्प्रवृत्तिस्थलम् ।

भूमध्यस्थरेखापुरनामानि—लङ्का[1] । देवकन्या । काञ्ची । कन्चिकोटम[2] । मद्केरिपुरम्[4] । चिकमङ्गलूरम[5], हरिहरम्[6], बागलकोटम्[7], माहिष्मती[8] च । [9]सह्यकुलाचल । सोलापुर[10] च । [11]प्रसायिपुरम्, बिड[12] च । [13]भुसावलम् । [14]उज्जयिनी । [15]कोटपुरम् (कोटा) । [16]टोंकम् । [17]जयपुरम् । [18]रोहितकम्, [19]जालन्दरम् । [20]स्थानेश्वरम् । [21]कुरुक्षेत्र च । [22]हिमालय । [23]सुमेरु ।

१–२८

२९–५६

(१) भूपरिधिव्यासावाह भास्कर —

'प्रोक्तो योजनसंख्यया कुपरिधि सप्ताङ्गनन्दाब्धय

४९६७ तद्व्यास कुभुजाङ्गसायकभुव १५८१ इति सि० शि० ।

(२) कुमध्ये वर्तते । (३) मद्रासदेशे समुद्रतीरस्थम् । (४) कुर्गप्रान्ते (५, ६, ७, ८) घटप्रभा तीरवर्ति–मैसूरराज्ये कर्नाटदेशे । (९ १०) (महाराष्ट्रदेशे) विदर्भापरपर्यायबहारदेशादपि निकट एव वरीवर्ति । गोदावर्यां नातिदूरप्रदेशे । (११, १२) निजामराज्यमध्ये । इमे भारतवर्षदक्षिणभागे । (१३) खानदेशे (१४) मालवप्रान्ते । मध्यभागे । (१५, १६, १७) राजपुतानाराज्ये । (१८, १९, २०, २१) पञ्चनद (पञ्जाब) प्रान्ते । (२२, २३) इमे भारतवर्षोत्तरविभागे ।

इह तु सिद्धान्तशेखरे विशेष,—

'लङ्का कुमारी नगरी च काञ्ची पानाटमद्रिश्च सित पडास्य ।
श्रीवत्सगुल्म च पुरी ततश्च माहिष्मती चोज्जयिनी प्रसिद्धा ॥
स्यादाश्रमोऽस्मान्नगर सुरम्य तत पुर पट्टिशिकाभिधानम् ।
श्रीगर्गराट च सरोहिताख्यस्थानेश्वर शीतगिरि सुमेरु ॥
इतीव याम्योत्तरगा धराया रेखामिमां गोलविदो वदन्ति ।
मध्यानि रेखास्थितिभाञ्जि लोके ज्ञेयानि तज्ज्ञै पुरभेदनानि ॥' इति ।

लङ्कापर्याया.—दशशिर पुरी, रक्षसापुरी, राक्षसालय, रावणराजधानी, लंका।

देवकन्यापः—कन्या, कन्याकुमारी, कुमारी, देवकन्या, देवसुतापुरी।

काञ्चीभेदो—(१) शिवकाञ्ची, (२) विष्णुकाञ्ची।

माहिष्मतीपर्याया—चैद्यपुरी, माहिष्मती, शिशुपालनगरी।

सह्यकुलाचलप०—सह्यकुलपर्वत, सह्यकुलाचल, सह्यकुलाद्रि।

उज्जयिनीप०—अवन्तिका, अवन्ती, उज्जयनी, उज्जयिनी, विशाला।

कुरुक्षेत्रप०—कुरुक्षेत्रम्।

हिमालय प०—पार्वतीगुरु, शीतगिरि, हिमाचल, हिमाद्रि, हिमालय।

मेरुप०—देवौक, मेरु, सुमेरु, सुरालय। शेषतु-देववर्गे।

मध्यमग्रहप०—अस्पष्टग्रह, अस्फुटखग मध्यनभश्चर, मध्यमग्रह, मध्यमद्युचर।

मध्यमग्रहभेदा—(१) तात्कालिकमध्यमग्रह, (२) स्वपुरोदयिकमध्यमग्रह, (३) लंकामध्यमार्कोदयकालिकमध्यमग्रह।

गतिपर्याया—इति, गति जव, भुक्ति।

मध्यमगतिप०[1]—मध्यगति, मध्यभुक्ति, मध्यमगति, मध्यमजव, मध्यमभुक्ति, मध्यमेति।

ग्रहतनुप०[2]—ग्रहतनु, ग्रहदेह, ग्रहवपु, ग्रहशरीरम्।

तात्कालिकमध्यमग्रहप०—इष्टकालीनमध्यमग्रह, तात्कालिकमध्यमग्रह, सावयवदिनगणभवमध्यमग्रह।

स्वपुरोदयिकमध्यमग्रहप०—औदयिकमध्यमग्रह, प्रातःकालीनमध्यमग्रह, स्वपुरोदयिकमध्यमग्रह।

लङ्कामध्यमार्कोदयकालिकमध्यमग्रहप०—रेखास्थनगरमध्यमार्कोदयकालीनमध्यमग्रह, लङ्कामध्यमार्कोदयकालिकमध्यमग्रह।

१–१७ १८–३५

(१) रव्यादीना मध्यमगतय कलादिका।

| सू० | च० | म० | बु० | बृ० | शु० | श० | रा० | च० उ० | ग्रहा |
|---|---|---|---|---|---|---|---|---|---|
| ५९ | ७९० | ३१ | ५९ | ५ | ५९ | २ | ३ | ६ | कला |
| ८ | ३५ | २६ | ८ | ० | ८ | ० | ११ | ४१ | विकला |

ग्रहलाघवीयबुधकेन्द्रगति १८६।२४, शुक्रकेन्द्रगति ३७।०

केतकीग्रहबुधकेन्द्रगति २४५।३२, शुक्रकेन्द्रगति ९६।८

(२) महाभास्करीये—ग्रहतनुसाधन यथा—षष्ट्युत्तरशतत्रयनिघ्नो वर्गणो ग्रहतनु (देह)स्यात्। [तेन समेता द्विहृता ग्रहवशा उक्ता।

मन्दपर्याया.—मन्दम्, मृदु ।

शीघ्रप०—अरम्, अविलम्बितम्, आशु, क्षिप्रम्, चञ्चलम्, चपलम् चलम्, तूर्णम्, त्वरितम्, द्रुतम्, लघु, शीघ्रम्, सत्वरम् ।

शीघ्रवाचकाव्ययशब्दाः—अञ्जसा, अरम्, अह्लाय, आशु, झटिति, द्राक्, मक्षु, सपदि, स्राक् ।

वेगपर्याया —जवः, तरः (अस्) (न०), प्रसरः, रयः, रहः, (अस्) (न०), वाजः, वेगः, स्यदः, ॥ इति ।

उच्चपर्यायाः—उच्चम्, उच्छ्रितम्,उदग्रम्, उद्धुरम्, उन्नतम्, तुङ्गम्, प्राशु ।

¹केन्द्रम्.—केन्द्रम्, ग्रहोच्चान्तरम्, वृत्तमध्यम् ।

तदुक्तम्.—

'वृत्तस्य मध्य किल केन्द्रमुक्त केन्द्र ग्रहोच्चान्तरमुच्यतेऽनः । यतोऽन्तरे तावति तुङ्गदेशान्नीचोच्चवृत्तस्य सदैव केन्द्रम् ॥', इति सिद्धान्तशिरोमणी

केन्द्राशप०—केन्द्रभागः केन्द्रलवः, केन्द्रांशः, केन्द्राशकः ।

केन्द्रभेदौ —(१) मन्दकेन्द्रम्, (२) शीघ्रकेन्द्रम्, चैतौ केन्द्रस्य द्वौ भेदौ स्याताम् ।

केन्द्रान्यभेदाः—(१) आकर्षणकेन्द्रम्, (२) च्युतिकेन्द्रम्, (३) तिथिकेन्द्रम्, चैते केन्द्रस्यान्ये भेदाः स्युः ।

²मन्दकेन्द्रपर्यायौ —मन्दकेन्द्रम्, मृदुकेन्द्रम् ।

³शीघ्रकेन्द्रपर्याया —आशुकेन्द्रम्, ग्रहोनचलोच्चम्, चञ्चलकेन्द्रम् चलकेन्द्रम्, तूर्णकेन्द्रम्, द्रुतकेन्द्रम्, द्राककेन्द्रम्, द्राक्केन्द्रकम्, शीघ्रकेन्द्रम् ।

उच्चभेदौः—(१) मन्दोच्चम् (२) शीघ्रोच्चम्, चैतो द्वौ उच्चभेदौ स्याताम् ।

⁴मन्दोचचपर्याया –मन्दतुङ्गम्, मन्दोच्चम् मृदुतुङ्गम्, मृदूच्चम् ।

---

१–१७ १८–३८

(१) ग्रहोच्चान्तरम्, गोलमध्यस्थानम्, वृत्तमध्यम्, वृत्तक्षेत्रमध्यस्थल वा । (२) सिद्धांतशिरोमणी केतकीग्रहगणिते च मन्दोच्चोनग्रहो मन्दकेन्द्र भवति । सूर्यसिद्धांते ग्रहलाघवे च ग्रहोनमन्दोच्च मन्दकेन्द्र भवति । (३) केतकीग्रहगणिते मन्दस्फुटार्कोनमन्दस्पष्टग्रह शीघ्रकेन्द्र भवति । सूर्यसिद्धांते सिद्धांतशिरोमणी च ग्रहोनशीघ्रोच्च शीघ्रकेन्द्र भवति । ग्रहलाघवे तु मध्यमभौमार्कीज्यविहीनमध्यमार्कस्तेषां शीघ्रकेन्द्रं भवति ।

(४) केतकीयग्रहगणिते ग्रहाणा राश्यादयो मन्दोच्चा ।

| ग्र० | रवि | भौम | बुध | गुरु० | शुक्र | शनिः |
|---|---|---|---|---|---|---|
| रा० | २ | ४ | ७ | ५ | ६ | ८ |
| अं० | १८ | ११ | २३ | २० | १७ | ८ |
| क० | ४१ | ४१ | २६ | १३ | ४० | २७ |
| वि० | ० | ० | ० | ० | ० | ० |

शीघ्रोच्चप०—आशुतुङ्गम्, आशूच्चम्, चलतुङ्गम, चलोच्चम्, द्राक्तुङ्गम्, द्रागुच्चम, शीघ्रतुङ्गम्, शीघ्रोच्चम।

पदप०—पदम्, स्थानम्, राशित्रयात्मकम्।

पदभेदौ—(१) विषमपदम्, समपदम्, चेतौ द्वौ पदभेदौ स्याताम।

विषमपदवाचकशब्दा—अयुक् (ज्), अयुग्मम, असमम्, असमानम्, ओज, विषमम्, विषमसख्या।

तदुक्तम्

'ओजेनौजः सम पादे' इति भरतादय, इति श० चि० १।४४२।

समपदवाचकशब्दा—अनोज, नौज, युक् (ज्), युग्मम्, समानम्।

त्रिभपर्यायाः—त्रिभम्, भत्रयम् भत्रयसमुदाय, राशित्रयम्, राशित्रयसमुदाय।

भुजप०—दो. (स्) (पु० न०), प्रविष्ट, बाहु (पु० स्त्री०), भुज (पु० स्त्री०) बाहा (स्त्री०)।

भुजभेदाः—(१) त्रिभाल्पकेन्द्रम्, (२) त्रिभाधिकपड्भोनकेन्द्रम्, (३) षड्भाधिकषड्भोनकेन्द्रम्, (४) नवभाधिकभचक्रच्युतकेन्द्रम् चेत्येते भुजस्य चत्वारो भेदा स्यु।

भुजांशपर्यायाः—भुजभाग, भुजलव, भुजांश, भुजांशक।

स्त्रभा=कर्ण (श्रुति, श्रवणम)।

कर्णप०—छत्रनिग्रह, पैञ्जूष (पुं० न०), महानाद, वचोग्रह, शब्दग्रह, शब्दाधिष्ठानम्, श्रवणम श्रव (स्) (न०), श्रुति (स्त्री०), श्रोत्रम् (पु० न०)।

कर्णभेदौ—(१) मन्दकर्ण, (२) शीघ्रकर्ण—

१–१५ १६–३१

बुधशुक्रयोस्तु। मध्यमाधिकारोक्तविधिना तयो शीघ्रकेन्द्रे साधनीये। भौमार्कीज्यानां मध्यमरविरेव शीघ्रोच्चम् स्यात्। ज्ञसितयोस्तु पूर्वागते शीघ्रकेन्द्रे मध्यमरविणा सहिते तयो शीघ्रोच्चे स्याताम्। 'तदुक्तम'—'मध्यमार्क सहित चलकेन्द्र स्याद्बुधस्य सितस्य चलोच्चम्। मेदिनीतनयजीवशनीनां मध्यमार्क उदित तु चलोच्चम्॥' इति ग्रन्थांतरे।

(५) ग्रहलाघवीयग्रहगणिते ग्रहाणां मन्दोच्चराशय।

| ग्र० | रवि | भौम | बुध | गुरु | शुक्र | शनि |
|---|---|---|---|---|---|---|
| रा० | २ | ४ | ७ | ६ | ३ | ८ |
| अ० | १८ | ० | ० | ० | ० | ० |

(१) अयुग्मे पदे यात भुज स्यात्। युग्मे तु एष्य भुज स्यात्। ग्रहलाघवेतु-दोस्त्रिभोन त्रिभोर्ध्वं विशोध्य रसेऽस्त्रतो ऽङ्काधिक स्यादिति।

एवंतौ द्वौ कर्णस्यभेदौस्याताम् ।

[1]मन्दकर्णप०—मन्दकर्ण, मन्दश्रुति, मृदुकर्ण, मृदुश्रुति, मृदुश्रव (श्रस) (न०)।

मध्यममन्दकर्णप०—मध्यममन्दकर्ण मध्यममृदुकर्ण ।

स्पष्टमन्दकर्णप०—स्पष्टमन्दकर्ण, स्पष्टमृदुकर्ण, स्फुटमन्दकर्ण, स्फुटमृदुकर्ण ।

[2]शीघ्रकर्णप०—आशुकर्ण, चलकर्ण, द्राक्कर्ण, द्राक्श्रुति, शीघ्रकर्ण ।

स्पष्टशीघ्रकर्णप०—स्पष्टचलकर्ण, स्पष्टद्राक्कर्ण, स्पष्टशीघ्रकर्ण, स्पष्टाशुकर्ण, स्फुटचलकर्ण, स्फुटद्राक्श्रुति, स्फुटशीघ्रकर्ण, स्फुटाशुकर्ण ।

कर्णान्यभेदाः—(१) अक्षकर्ण, (पलकर्ण), (२) अभिमतकर्ण, (इष्टकर्ण) (३) उद्वृत्तकर्ण, (४) उन्मण्डलकर्ण, (५) कलाकर्ण, (लिप्ताश्रुति) (६) छायाकर्ण, (भाकर्ण), (७) द्युदलकर्ण, (मध्याह्नकर्ण), (८) मध्यकर्ण, (९) योजनकर्ण, (१०) विपुत्कर्ण, (११) समकर्ण, (१२) सममण्डलकर्ण (समवृत्तकर्ण)।

एते कर्णस्यान्ये भेदाः स्युः ।

परिधिभेदौ—(१) मन्दपरिधि, (२) शीघ्रपरिधिश्चैतौ द्वौ परिधिभेदौ स्तः ।

विभापर्याया—कोटि, कोटी, विभा ।

कोटिप०[3]—कोटि, कोटी, बाहुहीनत्रिभम्, भुजानत्रिभम् ।

तदुक्तम्—

'दिक्सूत्रसम्पातगतस्य शङ्कोश्छायाग्रपूर्वापरसूत्रमध्यम् ।
दोर्दो प्रभाकर्णवियोगमूलं
'कोटि'–र्नरात्प्रागपरा तत स्यात् ॥'

इति सिद्धान्तशिरोमणौ ।

कोट्यंशप०—कोटिभाग, कोटिलव, कोट्यंश, कोट्यंशक ।

रविमन्दकर्णप०[4]—रविमन्दकर्ण, रविमृदुश्रव, रविमृदुश्रुति ।

चन्द्रमन्दकर्णप०[5]—चन्द्रमन्दकर्ण, चन्द्रमृदुश्रव, चन्द्रमृदुश्रुति ।

ज्यापर्याया—गव्या, गुण, गुणा, जीवा, ज्यका, ज्या, द्रुणा, धनुर्गुण, पतञ्चिका, पतञ्जिका, प्रतिकाय, प्रत्यञ्चा, बाणासनम्, मारवम्, मौर्विका, मौर्वी, शिञ्जा, शिञ्जिनी, शिञ्ज्या, सिञ्जा, सिञ्जिनी ।

ज्यार्द्धप०—जीवाखण्डम्, जीवादलम्, जीवार्द्धम्,

१–२२ २३–४४

(१) ग्रहसूर्ययोरन्तरं मन्दकर्णं ।
(२) भूमिग्रहयोरन्तरं शीघ्रकर्णं । अथवा—भूमिमध्याद् ग्रहावधिर्यदन्तरं स एव शीघ्रकर्णो ज्ञेयः ।
(३) राशिचक्रतृतीयांशः कोटिः । अथवा—विमण्डलापममण्डलान्तरं कोटिः सा विक्षेपतुल्या भवति ।
(४) पृथिवीसूर्ययोरन्तरम् 'सूर्यमन्दकर्णं' ।
(५) भूमीन्द्वोरन्तरं चन्द्रमन्दकर्णं ।

ज्याखण्डम्, ज्यादलम्, ज्यार्द्धम्, ज्याशकलम् मौर्वीदलम् ।

ज्याभेदा —(१) अक्षज्या, (२) अग्रज्या, (३) अर्द्धज्या, (४) दृष्टिज्या, (५) उत्क्रमज्या, (६) कुगुणा, (कुजीवा, कुज्या, क्षितिज्या) (७) कोटिगुणा, (कोटिजीवा, कोटिज्या लम्बज्या), (८) क्रमज्या, (९) क्रान्तिज्या (अपमज्या), (१०) चरज्या (चरदलज्या), (११) जिनाशजीवा, (१२) त्रिगुणा (त्रिजीवा, त्रिज्या, त्रिभज्या), (१३) दिग्ज्या, (१४) दृग्ज्या, (१५) द्युजीवा (द्युज्या[1], द्युमौर्वी), (१६) नतज्या, (१७) परमक्रान्तिज्या (परमापमज्या), (१८) भुजज्या (दोर्ज्या, बाहुज्या), (१९) लम्बज्या[2] चैते ज्याया भेदा स्यु ।

धनु पर्याया —अस्त्रम्, आयुधाग्रयम् आस, इष्वास, काण्डम्, कार्मुकम्, कोदण्डम् गुणी, चाप, तारवम् तृणता, निपता, द्रुणम् धनु(न), धनु (पु० स्त्री०), धनु (उम्) (अस्त्री), धनू (स्त्री०), धन्वम् धन्व (अन्), शरारोप, शरावाप, शरासनम् शेप, सरासनम्, स्थावरम् ।

करणग्रन्थेष्वङ्कभेदौ —(१) मन्दाङ्क, (२) चलाङ्कश्चैतावङ्कानां द्वौ भेदौ स्त ।

मन्दाङ्कपर्यायाः—मन्दाङ्क, मान्द, मृद्वङ्क ।

शीघ्राङ्कप०[3]-चञ्चलाङ्क, चल, चलाङ्क, शैघ्र, शीघ्राङ्क ।

मन्दफलप०—मन्दफलम्, मन्दसंज्ञफलम्, मान्दम्, मृदुफलम् मृदुसञ्ज्ञफलम् ।

शीघ्रफलप०—आशुफलम्, चञ्चलफलम्, चलफलम् द्राक्फलम्, शीघ्रफलम्, शैघ्रम् ।

स्पष्टपर्यायौ—स्पष्टम्, स्फुटम् ।

मन्दस्पष्टरविप०—मन्दस्पष्टरवि, मन्दस्पष्टार्क, मृदुस्फुटरवि, मृदुस्फुटार्क ।

तदुक्तम्—

'मृदुसञ्ज्ञफलेन मध्य-
मस्तरणि सस्करणीय उक्तवत् ।
स्फुटतामुपयाति मध्यमस्त
रणिर्मन्दफलेन केवलम् ॥' इति केतकीग्रहगणिते ।

१-१९ २०-३७

(१) द्युज्यानाम ध्रुवकोटिज्या ।

(२) लम्बज्या नाम अक्षकोटिज्या । इति ज्योतिर्विदां परिभाषा सुप्रसिद्धा ।

(३) भौमादीनां प्रथमद्वितीयशीघ्रफलयो साधने यदा गताङ्कस्यापेक्षया भोग्याङ्कोऽधिकस्तदा तदन्तर धन । यदा गताङ्कस्यापेक्षया भोग्याङ्कोऽल्पस्तदा तदन्तर क्षय । पश्चाद्वाभ्यामन्तराभ्यां शेषांशादिकं गुणितं पञ्चदशविभक्तं तदा यत्फलं लभ्यते तदा धनेऽन्तरे तद्भोग्यांके योज्य क्षयेऽन्तरे तु भोग्यांके वियोज्य ततो स्पष्टशीघ्रफलं स्यात् । प्रथमशीघ्रफलार्द्धं द्वितीयशीघ्रफलम् सर्वं मध्यमग्रहे मेषादौ शीघ्रकेन्द्रे तद् धनं तुलादौ तु ऋणं कार्यम् ।

मन्दस्पष्टग्रहप०[1]—मन्दस्पष्टग्रह, मन्दस्फुटग्रह, मृदुस्पष्टग्रह, मृदुस्फुटग्रह ।

अयनप०—अयनम्, चलम्, चलनम् ।

अयनांशप०[2]—अयनभाग, अयनलव, अयनांश, अयनांशक, चलभाग, चललव, चलांश, अयनचलनभाग, अयनचलन, अयनचलनलव, अयनचलनांश, अयनचलनांशक ।

सम्पातार्कप०—सम्पातार्क, सायनार्क ।

छायाप०—आभा, छाया, दीप्ति, द्युति, प्रभा, भा, विभा ।

पलभाप०[3]—अक्ष, अक्षच्छाया, अक्षप्रभा, अक्षभा, अक्षाभा, पलच्छाया, पलप्रभा, पलभा, पलनिभा, पलाभा, विषुवच्छाया, विषुवत्प्रभा, विषुवद्भा, विषुवती, विषुवतीच्छाया, वैषुवती, शङ्कुतलगतच्छाया ।

चरप०[4]—चरम् ।—

चरखण्डप०[5]—चरखण्डम् चरखण्डकम्, चरदलम्, चरभित्तम्, चरशकलम्, चरार्द्धम् ।

स्पष्टरविप०—स्पष्टरवि, स्पष्टार्क, स्फुटरवि, स्फुटार्क ।

स्पष्टग्रहप०[6]—स्पष्टखग, स्पष्टग्रह, स्फुटखग, स्फुटग्रह ।

रविमन्दकेन्द्रपर्याया —रविमन्दकेन्द्रम्, रविमृदुकेन्द्रम्, सूर्यमन्दकेन्द्रम, सूर्यमृदुकेन्द्रम् ।

रविमन्दफलप०—रविमन्दफलम्, रविमृदुफलम, द्युमणिमन्दफलम ।

स्वर्णताप०—धनर्णता, धनर्णत्वम धनाधनम, स्वक्षयत्वम् स्वर्णता, स्वास्वता ।

तदुक्तम्—

'चन्द्रे स्यात्स्वमृणं फलं क्रियतुलाद्ये' इति ।

अपिच—

गतो धनर्णं केन्द्रे कुलीरमृगषट्कगते' इति च ग्रहलाघवे २।२,

चन्द्रकेन्द्रभेदा —(१) च्युतिकेन्द्रम् (२) तिथिकेन्द्रम (३) मन्दकेन्द्रम (४) राहुकला, चैते चन्द्रकेन्द्रभेदा स्युः ।

१–१८ १९–३६

(१) मन्दस्पष्टग्रहोविक्षेपवृत्ते अर्थात् स्वकक्षाया तिष्ठति । (२) 'वेदाब्ध्यब्धयून खरसहृत शकोऽयनांशा ।' इति ग्रहलाघवे २ । (३) एष विषुवतिच्छाया स्वदेशे या दिनार्द्धजा दक्षिणोत्तररेखायां सा तत्र विषुवत्प्रभा । 'इति सूर्यसिद्धान्ते ३।१२। 'ग्रन्थांतरे तु चन्द्राग्नियनिघ्ना पलभाद्धिता च लङ्कावधि स्यादिह दक्षिणोऽक्ष ।' इति ।

(४) लङ्कार्कोदयरेखार्कोदययोरन्तरं चर स्यात् । उन्मण्डलक्षितिजयोर्यदन्तरं तच्चरं वा । स्वदेशनिरक्षदेशयो सूर्योदयकालयोरन्तरं चरसमानम । स्वस्वदेशे क्षितिजे रव्युदयात्तद्देशीयार्कोदयांतरं चरखण्डसमानम इति । अथवा—'क्रान्त्यक्षभाघ्नाहतिपञ्चमांशश्चरं पलात्मं गगनेचराणाम ।' इति ग्रन्थांतरे ।

(५) 'त्रिघ्ना हता स्युर्दशभिर्भुजङ्गैर्दिग्भिश्चरार्द्धानि गुणोद्धृतान्त्या ।' इति ग्र० ला० २।२१ ।

(६) स्पष्टग्रह क्रांतिवृत्ते तिष्ठति तेन क्रांतिवृत्तीयो ग्रहो भवति ।

**चन्द्रफलभेदाः**—(१) च्युतिफलम्, (२) तिथिफलम्, (३) मन्दफलम्, (४) राहुकलाफलं, चैते चन्द्रफलभेदाः ।

**गतिमन्दफलप०**—गतिमन्दफलम्, गतिमृदुफलम्, भुक्तिमन्दफलम्, भुक्तिमृदुफलम् ।

**मन्दस्पष्टगतिप०**—मन्दस्पष्टगतिः, मन्दस्पष्टा, मृदुस्फुटा, मन्दस्पष्टभुक्तिः, मृदुस्फुटगतिः, मृदुस्फुटभुक्तिः ।

**भौमादीनां केंद्रभेदाः**—(१) प्रथमशीघ्रकेन्द्रम्, (२) मन्दकेन्द्रम्, (३) द्वितीयशीघ्रकेन्द्रम्, चैते भौमादीनां केन्द्रभेदाः स्युः ।

**भौमादीनां फलभेदाः**—(१) प्रथमशीघ्रफलार्द्धम्, (२) मन्दफलम् (३) द्वितीयशीघ्रफलाखिलम्, चैते भौमादीनां फलभेदाः स्युः ।

तदुक्तम्—

'प्राङ्मध्यमे चलफलस्य दलं विदध्यात्तस्माच्च मान्दमखिलं विदधीत मध्ये । द्राक्केन्द्रकेऽपि च विलोममतश्च शीघ्रं सर्वं च तत्र विदधीत भवेत्स्फुटोऽसौ ॥'

इति ग्रहलाघवे २ ।

**भौमादीनां गतिफलभेदाः**—(१) मन्दगतिफलम्, (२) शीघ्रगतिधनफलम् (३) शीघ्रगत्यृणफलं चैते गतिफलभेदाः स्युः ।

**भौमादीनां गतिभेदाः**—(२) मध्यमगतिः (ग्रहमध्यभुक्तिः), (२) मन्दगतिः (मन्दपरिस्फुटा, मृदुस्फुटा), (३) शीघ्रगतिः (शीघ्रभुक्तिः, द्राक्केन्द्रभुक्तिः), (४) वक्रगतिः (कुटिलभुक्तिः), (५) स्पष्टगतिः (स्फुटभुक्तिः), (६) दैनिकीगतिः (द्युगतिः), (७) तात्कालिकीगतिश्चैते गतिभेदाः स्युः ।

**भौमादीनां गतेरन्यप्रभेदौ**—(१) ऋजुगतिः, वक्रगतिश्चैतौ द्वौ भेदौ स्तः ।

**ऋजुगतिप्रभेदाः**(१)—मन्दा, (२) मन्दतरा, (३) समा, (४) शीघ्रा, (५) शीघ्रतराश्चैते ऋजुगतेः पञ्चप्रभेदाः स्युः ।

**वक्रगतिप्रभेदाः** (१) वक्रा (वक्रगतिः), (२) अनुवक्रा, (३) कुटिला, चैते वक्रगतेस्त्रयः प्रभेदाः स्युः ।

तदुक्तम् -

'वक्रानुवक्रा कुटिला मन्दा मन्दतरा समा । तथा शीघ्रा शीघ्रतरा ग्रहाणां चाष्टधा गतिः ॥'

इति सूर्यसिद्धान्ते ।

मतान्तरे तु—

**ग्रहाणांषोढागतिनामानि**—पूर्वापरा । याम्योत्तरा । ऊर्ध्वाधरा चेति षोढा गतयः स्युः ।

**उदयवाचकशब्दाः**—उदयः, उदितः, उद्गमः, दर्शनम्, दृश्यः, समुदयः, समुद्गमः ।

**उदयिवाचकशब्दाः**—अनस्तगतः, अमूर्यगः, उदयी (इन्), दिवाकरकरव्यासङ्गमुक्तः, दृश्यमातः, स्फुरत्प्रभः ।

**अस्तप०**—अदर्शनम्, अदृश्यः, अस्तम्, अस्तमनम्, अस्तमयः, मुषितः, मूढः, मौढ्यः, लोपः ।

**अस्तगतप०**—अंशुमदंशुसङ्कुलः, अनुलीनः, अर्ककराभितप्तः, अर्कोरगतः, आदित्यरश्मिपरिभूतः, क्षीणकरः, तिग्मांशुलुप्तद्युतिः, दिनकरगुप्तमयूखः, दिनकरकराभितप्तः, दिनकरोत्करः,

दिनेशकरलुप्त, दिनेशकान्त्याभिहत, दिनेशकिरणच्छन्न, दिनेश्वरकरच्छन्न, दिवाकरकरच्छन्न, भास्वल्लुप्तज्योति, रविकरच्छन्न, रविकराभिहत, रविकिरणमुषितदीप्ति रविग, रविमुषिततनु, रविलुप्तकर, रविलुप्तरुचि, लुप्त, लुप्तकर, विकर्त्तनकरच्छन्न, सूर्यकिरणलुप्त, सूर्यप्रविष्ट, सूर्यांशुलुप्त, सूर्यमयूखलुप्त, सूर्यलुप्तकिरण, सूर्योच्छिन्नद्युति ।

वक्रप०—अनृजु, अरालम्, आविद्धम्, ऊर्मिमत् (मतुप्) कुञ्चितम्, कुटिलम्, नतम्, भङ्गुरम् भुग्नम्, वक्रम्, वृजिनम्, वेल्लितम् ।

वक्रिप०—अनृजुग, अनृजुगति, वक्रग, वक्रगति, वक्रस्थ, वक्री (इन्) ।

मार्गप०—अजिह्म, अनुलोम, अवक्र, ऋजु प्रगुण, मार्ग ।

मार्गिप०—ऋजुग, ऋजुगति, ऋजुभुक्ति मार्गग, मार्गी (इन्) ।

[1]पूर्वोदयपर्याया.—ऐन्द्र्युदय, ऐन्द्र्युद्गम, पूर्वदर्शनम्, पूर्वोदय, पूर्वोद्गम, प्रागुदय, प्राग्दर्शनम्, प्राचीदर्शनम्, प्राच्युदय, प्राच्युद्गम ।

[2]पूर्वास्तप०—पूर्वलोप, पूर्वादर्शनम् पूर्वास्तम्, पूर्वास्तमनम्, प्रागदर्शनम् प्रागस्तम प्रागस्तमनम प्राग्लोप, प्राचीलोप, प्राच्यदर्शनम् प्राच्यस्तम्, प्राच्यस्तमनम् ।

[3]पश्चिमोदयप०—तोयदर्शनम् तोयोदय, तोयोद्गम, पश्चिमदर्शनम्, पश्चिमोदय, पश्चिमोद्गम प्रतीचीदर्शनम, प्रतीच्युदय, प्रतीच्युद्गम, प्रत्यगुदय, प्रत्यगुद्गम, प्रत्यग्दर्शनम्, वारुणीदर्शनम्, वारुण्युदय, वारुण्युद्गम ।

[4]पश्चिमास्तप०—तोयलोप, तोयादर्शनम, तोयास्तम्, तोयास्तमनम्, पश्चिमलोप, पश्चिमादर्शनम्, पश्चिमास्तम् पश्चिमास्तमनम् प्रतीचीलोप, प्रतीच्यदर्शनम्, प्रतीच्यस्तम् प्रतीच्यस्तमनम, प्रत्यगदर्शनम्, प्रत्यगस्तम् प्रत्यगस्तमनम्, प्रत्यग्लोप, वारुणीलोप, वारुण्यदर्शनम्, वारुण्यस्तम, वारुण्यस्तमनम् ।

अल्पगतिप०—अल्पग, अल्पगति, लघुग, लघुगति ।

भूरिगतिप०—अधिकग, अधिकगति, भूरिग भूरिगति, भूरिजव, भूरिभुक्ति ।

शीघ्रगतिप०—शीघ्रग, शीघ्रगति, शीघ्रभुक्ति, शीघ्र्यग, शीघ्र्यगति, शीघ्र्यभुक्ति ।

[5]कुजप०—कुजम् क्षितिजम् गर्भक्षितिजम् ।

[6]प्राक्कुजप०—उदयक्षितिजम्, प्राक्कुजम् प्राक्क्षितिजम, हरिजम्[7] ।

१-२२ २३-४५

(१, ४) भौमादीनां पञ्चताराग्रहाणां प्राच्यामुदयः प्रतीच्यामस्तो ज्ञेयः ।
(२ ३) बुधभृगवोस्तु पूर्वस्यामस्तः पश्चिमायामुदयोऽपि ज्ञेयः ।
(५) खगोले आकाशमध्यान्नवत्यंशान्तरे तिर्यग्वृत्तम् । स्वे स्वे कुजेऽर्कस्य समुद्गमः (उदयः), स्यात् ।
(६) क्षितिजवृत्तस्य पूर्वदिग्देशः ।
(७) तथा च प्रयोगः—यद्द्राशिर्व्रजति हरिजं गर्भमोक्षस्तु तद्वत् इति वराहः ।

[1]प्रत्यक्कुजप०—अस्तक्षितिजम्, पश्चिमक्षितिजम्, प्रत्यक्क्षितिजम् प्रत्यक्कुजम्।

[2]निरक्षप०—निरक्षदेशः, पलभाशून्यदेशः, व्यक्षदेशः।

साक्षप०—साक्षदेशः पलभासहितदेशः, सपलदेशः।

अक्षप०—अक्षः, पलः।

अक्षांशप०—अक्षभागः, अक्षलवः, अक्षांशः, अक्षांशकः, पलभागः, पललवः, पलांशः, पलांशकः, खमध्यार्कनतांशः (दक्षिणः)।

अंशभेदाः—उन्नतांशः, क्षेत्रांशः (क्रान्तिवृत्तस्थांशः) दिगंशः, नतांशः (क्रान्त्यक्षजसंस्कृतिः), लम्बांशः (क्षितिजादुन्नतांशः सौम्यः), तुलांशः, यंत्रांशः, यंत्रजोन्नतांश, अभिमतयंत्रांशः, भुजांशः, कालांशः (क्षणांशः)।

लङ्कोदयपर्यायाः—लङ्कोदयाः, लङ्कोदयप्राणाः, लंकोदयासवः, निरक्षोदयाः, व्यक्षोदयाः।

तदुक्तम्—

लङ्कोदया विघटिका गजभानि गोऽङ्कदस्राखिपक्षदहनाः' इति ग्रहलाघवे ४।१।

स्वोदयप०—स्वभोदयाः, स्वराश्युदयाः, स्वोदयाः स्वोदयप्राणाः, स्वोदयासवः, गृहोदयाः, उदयप्राणाः, उदयासवः, भोदयाः, राश्युदयाः।

तदुक्तम्—

'क्रमगोत्क्रमस्थाः। हीनान्विताश्चरदलैः क्रमगोत्क्रमस्थैर्मेषादितो घटतउत्क्रमतस्त्विमे स्युः॥' स्वोदयाः' इति शेषः। इति ग्रहलाघवे ४।१।

भुक्तांशप०—इतभागः, इतलवः, इतांशः, इतांशकः, गतभागः, गतलवः, गतांशः, गतांशकः, भुक्तभागः, भुक्तलवः, भुक्तांशः, भुक्तांशकः, यातभागः, यातलवः, यातांशः, यातांशकः।

भोग्यांशप०—एष्यभागः, एष्यलवः, एष्यांशः, एष्यांशकः, गम्यभागः, गम्यलवः, गम्यांशः, गम्यांशकः, भोग्यभागः, भोग्यलवः, भोग्यांशः, भोग्यांशकः, येयभागः, येयलवः, येयांशः, येयांशकः।

भुक्तकालप०—इतकालः, गतकालः, भुक्तकालः, यातकालः।

भोग्यकालप०—एष्यकालः, गम्यकालः, भोग्यकालः, येयकालः।

१–२० २१–४०

(१) क्षितिजवृत्तस्य पश्चिमदिक् प्रदेशः।

(२) चतस्रो नगर्योऽक्षरहिताख्यदेशे यथा—भूमध्ये 'लङ्का' इयं भारतवर्षे दक्षिणे वर्तते। अस्याः प्राक् (पूर्वे) 'यमकोटिः' [illegible] भद्राश्ववर्षे तिष्ठति। पश्चिमे केतुमालवर्षे रोमकः (रोमकपत्तनम्)। ततोऽधः सिद्धपुरम् (सिद्धपुरी)। अस्याः सौम्ये (उत्तरे) कुरुवर्षे सुमेरुः, तत्र सुरसिद्धसंघा वसन्ति। तस्या याम्ये वडवानलः, तत्र घोरे सदैत्या सर्वे नरकाः सन्ति। लङ्कापुरेऽर्कस्य यदोदयस्तदा यमकोटिपुर्यां दिनार्द्धम्। सिद्धपुरेऽस्तकालोऽधः। तदा रोमके रात्रिदलम्। उक्ताश्चतस्रो नगर्यो भूवृत्तपादविवरा अन्योऽन्यं प्रतिष्ठिताः। तासामुपरिगो विषुवस्थो दिवाकरो याति। तासु विषुवच्छाया पुनरक्षोन्नतिश्च न दृश्यते। तत्र दिवामानं रात्रिमानं च त्रिंशन्नाडिका। इति सूर्यसिद्धान्तमतम्। इति राधाकान्तशब्दकल्पद्रुमे। द्र० श० वि०।

इष्टघटीप०—अभिमतघटिका, अभिमतघटी, अभिमतनाडिका अभिमतनाडी, इष्टघटिका, इष्टघटी, इष्टनाडिका, इष्टनाडी, अभीष्टघटी, अभीष्टनाडी ।

लग्नप०—उदय उद्गम, लग्नम्, विलग्नम् ।

शेषपर्यायास्तु तनुभावे द्रष्टव्या ।

शङ्कुप०—कील, नर, ना, शङ्कु ।

अस्य सलक्षणपर्यायानाह—

'सूचीमुखो द्वादशभिस्तथाङ्गुले-
रथ पृथुस्तिष्ठति यो महीतले ।
विना विरात गजदन्तनिर्मित
कील स शङ्कुर्नर इत्युदीरित ॥
इति ग्रन्थान्तरे ।

शङ्कुभेदा —अभीष्टोन्मण्डलशङ्कु, इष्टशङ्कु, उन्मण्डलना (उन्मण्डलशङ्कु), कोणशङ्कु दिनार्द्धशङ्कु, (द्युदलशङ्कु, मध्याह्नशङ्कु), समनर (समना), समवृत्तशङ्कु (सममण्डलशङ्कु, समशङ्कु) ।

अहोरात्रपर्याया —अहोरात्र, अहर्निशम्, दिवारात्रम्, शेषन्त्वन्यत्र ।

अहोरात्रभेदा.—(१) दिनार्द्धम् (२) दिनमानम् (३) रात्र्यर्द्धम् (निशीथ), (४) रात्रिमानञ्चैतेऽहोरात्रभेदा स्यु ।

कपालभेदौ —(१) पूर्वकपालम् (२) परकपालम्, चैतौ कपालभेदौ स्याताम् ।

[1]पूर्वकपालपर्यायौ —पूर्वकपालम्, प्राक्कपालम् ।

[2]परकपालप०—अपरकपालम्, परकपालम्, प्रत्यक्कपालम्, पश्चकपालम् ।

नतकालप०—नत नतकाल, नतसमय ।

उन्नतकालप०—उन्नत, उन्नतकाल, उन्नतसमय ।

उक्त च—

'यात शेष प्राक्परनोन्नत स्यात्कालस्तेनोनं द्युखण्ड नत स्यात् । इतिग्रहलाघवे ४ ।

नतभेदौ—(१) पूर्वनत (२) पश्चिमनतश्चैतौ नतस्य द्वौ भेदौ स्त ।

पूर्वनतपर्यायौ —पूर्वनत, प्राङ्नत ।

पश्चिमनतप०—पश्चिमनत, प्रत्यङ्नत ।

उन्नतभेदौ —(१) पूर्वोन्नत, पश्चिमोन्नतश्चैतावुन्नतस्य द्वौ भेदौ स्त ।

पूर्वोन्नतपर्यायौ —पूर्वोन्नत, प्रागुन्नत ।

पश्चिमोन्नतप०—पश्चिमोन्नत, प्रत्यगुन्नत ।

[3]आर्क्षकालप०—आर्क्ष, आर्क्षकाल, आर्क्षसमय, औदयिक नाक्षत्र नाक्षत्रकाल, नाक्षत्रसमय, विषुवकाल ।

अक्षक्षेत्रप०—अक्षक्षेत्रम्, पलक्षेत्रम् ।

[4]अग्राप०—अग्रा ।

अग्राग्रखण्डप०—अग्राग्रखण्डम्, अग्रादिखण्डम् ।

१–२४  २५–४८

(१) सूर्योदयाद दिनार्द्धपर्यन्त पूर्वदलम् प्राक्कपाल स्यात् ।
(२) मध्याह्नादुपरि सूर्यास्तपर्यन्त पश्चिमदल तदपर पश्चिमकपालम् ।
(३) नक्षत्राणामुन्मण्डलोदयसमये तेषामार्क्षकाल आर्क्षकालो नाम विषुवकालो ज्ञेय ।
(४) क्षितिजे अहोरात्रवृत्तसममण्डलयोर्मध्यभागस्य या ज्या सा 'अग्रा' ज्ञेया ।

लम्बप०—लम्बः, दीर्घम्, क्षेत्रादौ लम्बमानरेखा-सूत्रं वा।

तदुक्तम्—

'पश्येज्जलादौ प्रतिबिम्बितं वा खेटं दृगौच्च्य गणयेच्चलम्बम्। तल्लम्बपातम्' इति ग्रह-लाघवे ४।

क्रान्तिपर्यायाः—अपक्रान्तः, अपक्रमः, अपमः, अपमण्डलम्, अपवृत्तम्, क्रमणम्, क्रान्तिः।

स्पष्टक्रान्तिप०—अपक्रमः, स्पष्टक्रान्तिः, स्पष्टा-पमः, स्फुटक्रान्तिः, स्फुटापमः।

अपममण्डलप०—अपममण्डलम्, क्रान्तिमण्डलम्, क्रान्तिवृत्तम्, नाडीवृत्तम्।

हरप०—हरः, हारः।

इष्टहरप०—अभिमतहरः, अभिमतहारः अभी-ष्टहरः अभीष्टहारः, इष्टहरः, इष्टहारः।

इष्टच्छायाप०—इष्टच्छाया, इष्टभा।

गोलप०—गोलम्, मण्डलम्।

तदुक्तम्—

'गोलं श्रोतुं यदि तव मतिर्भास्करीयं शृणु त्वम्' इति सिद्धान्तशिरोमणौ।

गोलभेदाः—(१) खगोलः, (२) ग्रहगोलः, (३) दृग्गोलः, (४) भगोलः, (५) भूगोल इत्येते गोल-भेदाः स्युः।

खगोलपर्यायाः—आकाशमण्डलम्, खगोलः, व्योमकक्षा।

'ब्रह्माण्डमध्ये परिधिस्तुल्यवृत्तमानं व्योमकक्षो-च्यते॥' इति।

ग्रहगोलप०—ग्रहकक्षा, ग्रहगोलः, ग्रहमण्डलम्।

उक्तं च—

'ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते।
तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा।
मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः।
परिभ्रमन्त्यधोऽधःस्थाः सिद्धविद्याधरा घनाः॥'
इति सूर्यसिद्धान्ते।

[1]भचक्रप०—आकाशकक्षा, [1]नक्षत्रकक्षा, नक्षत्र-गोलः, भकक्षा, भगोलः, भचक्रम्, भमण्डलम्, राशिचक्रम्।

१–१६ २०–३७

(१) तदुक्तं वह्निपुराणे भुवनामाध्याये शा० चि० २।४०५

यथा – भ्रमावर्त्तौ भचक्रेऽस्मिन् ध्रुवो नाभौ व्यवस्थितः।
ताराचक्रे त्विन्दुभौमौ शुक्रजीवशनैश्चराः॥
राहुः केतुरगस्त्यश्च नक्षत्राण्यथ राशयः।
यदा दिक्षु सप्तासु मेरोर्भूगोलकोद्भवा॥
छाया भवेत्तदा रात्रिः स्याच्च तद्विरहाद्दिनम्।
सूर्येन्द्वोरुपरागस्तु गोलच्छायया भवेत्॥
अन्योन्ययोस्तयोरे य········ कारणात्।
ग्रासमोक्षौ तु जायेते सम्राजः पूर्वपश्चिमौ॥

(शेष पृष्ठ १११ पर)

क्षेपवृत्तप०—क्षेपवृत्तम्, विक्षेपमण्डलम्, विक्षेपवृत्तम् ।

विषुवप०—वासन्तिकम्, महाविषुवसङ्क्रान्तिः, विषुवम्, विषुवत्, समरात्रिंदिवकालः ।

कक्षाच्युतिप०—कक्षाच्युतिः ।

केन्द्रच्युतिप०—केन्द्रच्युतिः ।

इष्टहृतिप०—अभीष्टच्छेदः, इष्टहृतिः ।

यष्टिप०—यष्टिः ।

इष्टयष्टिप०—इष्टयष्टिः ।

[1]दृङ्मण्डलप०—दृक्क्षेपमण्डलम्, दृङ्मण्डलम् ।

[2]विषुवन्मण्डलप०—नाडिकामण्डलम्, नाडीमण्डलम्, नाडीवृत्तम्, विषुवद्रेखा, विषुवद्वृत्तम्, विषुवन्मण्डलम् ।

[3]उन्मण्डलप०—उन्मण्डलम्, उन्मण्डलवृत्तम्, लङ्काक्षितिजम् ।

सममण्डलप०—विमण्डलम्, सममण्डलम्, याम्योत्तरमण्डलम् (पूर्वपराश्रिता रेखा) ।

अत्राह भास्करः

प्राक्पश्चिमाश्रिता रेखा प्रोच्यते सममण्डलम् । उन्मण्डलं च विषुवन्मण्डलं परिकीर्तितम् ॥ इति सिद्धान्तशिरोमणौ ।

दिक्प०—आशा, दिक्, (श्) दिशा, शेषास्त्वन्यत्र ।

दिग्भेदाः—(१) अपरा (पश्चिमा), (२) पूर्वा (प्राची), (३) उदक् (उदीची), (४) याम्या (अवाची), चैताश्चतस्रो दिशः स्युः ।

१–१३

१४–२६

(पृष्ठ ११० का शेष)

तत्र पुण्यफलाद्भागः कृतो राहोस्तु विष्णुना' इत्यादि ।

अस्य भचक्रस्य भ्रमणव्यवस्थामाह भास्कर—(सिद्धांत शिरोमणौ) 'निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ । तदाश्रितं खे जलयंत्र वत्तदा भ्रमद्भ चक्रं निजमस्तकोपरि । उदग्दिशं याति यथा यथा नरस्तया तथा खान्नतमृक्षमण्डलम् । उदग् ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः । योजनसंख्या भांशै ३६० र्गुणिता कुपरिधि ४९६७ हृता भवन्त्यंशा' भूमौ कक्षायां वा भागेभ्यो योजनानि च व्यस्तम् ।

(२) नक्षत्रकक्षा—नक्षत्राधिष्ठितगोलमध्यवृत्तम् ।

(१) खस्वस्तिके चाध स्वस्तिके चान्त कीलकौ कृत्वा सम प्रोत वलय द्व्यसयं कार्यम् ।

(२) तयोरेव पूर्वापरसम्पातयोर्विलग्नं, याम्योत्तरवृत्ते खस्वस्तिकाद् दक्षिणतोऽग्रं, स्वस्तिकादुत्तरतो ऽक्षांशान्तो यद्वृत्तं निबध्यते तद् 'विषुवद्' 'वृत्तम्' । 'घटयाऽत्र नाडीवलम् विदध्यात् ।' इति ।

(३) क्षितिजवृत्तम्, निरक्षदेशस्य क्षितजवृत्तम्, अहोरात्रवृत्तं च दिनरात्र्योर्वृद्धिक्षयकारणं वा । इति ।

तदुक्तम्

वृत्ते समभूगते तु केन्द्रस्थितशङ्कोः क्रमशो विशत्यपैति । छायाग्रमिहापरा च पूर्वा ताभ्यां सिद्धतिमेरदक् च याम्या ॥" इति ग्रहलाघवे ४।

दिग्वलनप०—दिग्वलनम्, आशावलनम्, ककुब्वलनम्, काष्ठावलनम्।

यंत्रप०—यन्त्रम्, दारुयन्त्रादि, 'कल" इति भाषा।

यंत्रभेदाः—(१) गोलः, (२) नाडीवलयः, (३) यष्टिः, (४) शङ्कुः (नरयन्त्रम्), (५) घटीयन्त्रम्, (६) चक्रम्, (७) चापः, (८) तुर्यम् (तुरीयम्), (९) फलकम्, (१०) धीः, (११) सर्वतोभद्र (१२), कपालकयन्त्रम्, (१३) नलिकायन्त्रम्, चैते यन्त्रभेदा स्युः।

'घटीयन्त्रपर्यायाः—घटिका, घटी, घटीयन्त्रम्,

१–८ ९–१६

(१) घटीयन्त्रं अर्थाज्जलघटीस्थापनक्रियामाह नारद—

'पूर्वं सञ्चिन्त्य गणितं शास्त्रोक्तं लग्नमानयेत्।
तल्लग्नं जलयंत्रेण दद्याद् ज्योतिषिकोत्तमः ॥'
षडंगुलमितोत्सेधं द्वादशांगुलमायतम् ।
कुर्यात्कपालवत्ताम्रपात्रं च दशभिः पलैः ॥
पूर्णं षष्ट्या त्वथ पलैः षष्टिमंज्जति वासरात् ।
माससात्रयदा १ १।३ युतस्वर्णवृत्तशलाकया ॥
चतुर्भिरगुलैरायतया विद्धमिति स्फुटम् ।
ताम्रपात्रं जलं पूर्णे मृत्पात्रे वा ऽथवा शुभे ॥
गंधपुष्पाक्षतैः सार्द्धं रलंकृत्य प्रयत्नतः ।
तण्डुलस्थे स्वर्णयुते वस्त्रयुग्मेन वेष्टिते ॥
मण्डलार्द्धोदयं वीक्ष्य रवेस्तत्र विनिक्षिपेत् ।
मन्त्रेणानेन पूर्वोक्तलक्षणं यन्त्रमुत्तमम् ॥ इति।

अथवा—

'एकान्तपक्षे ऽनिलवर्जिते ऽस्मिन् दध्यक्षतैः पूजितमण्डले च।
कुण्डेऽम्बुपूर्णे घटिका प्रवाह्या सूर्यार्द्धबिम्बे उदितेऽस्तगे वा ॥'

यत्र मंत्रः—

'मुख्यं त्वमसि यन्त्राणां ब्रह्मणा निर्मितं पुरा ।
भ (वि) था भ (वि) याय मर्त्यानां कालसाधक कारणम् ॥' इति

ज्योतिषकल्पद्रुमे तु यथा—

'कुम्भार्द्धाकृतिशुद्धताम्रघटितं पात्रं पलैर्निर्मितं षंवराद्धोन्नतिरंगुलिविस्तृतिरिदं मासाष्ट संरायतम्।
विद्धा हेमशलाकया सुरासिते उन्मज्य तस्मिन् घटी उन्मज्या पलुशष्टिवार्षष्ठिने श्लोकेन सा पूर्यते ॥' इति।

(शेष पृष्ठ ११३ पर)

ताम्रिका, ताम्री, नाडिका, नाडी, मानरन्ध्रा, मेरुका, यामघोषिणी, यामनाडी, विकालिका, षष्टिदीर्घाक्षरोच्चारा ।

तदुक्तम् केशवे पृ ४०७ श्लो २१, २२

षष्टिदीर्घाक्षरोच्चारा मेरुका घटिका घटी ।
नाडी च नाडिकायामनाडी स्याद्यामघोषिणी ॥
विकालिका मानरन्ध्रा ताम्रिकाऽप्यथ तद्द्वयम् ॥ इति ।

१–४  ५–८

(पृष्ठ ११२ का शेष)

अस्य यन्त्रस्य व्यासोऽष्टाङ्गुलात्मक, उन्नति षडङ्गुलप्रमिता विधेया । इह षड्भिरङ्गुलाभिरेको भाग, अस्य चतु षष्ट्या पलमेक भवति । सार्धत्रमाषमात्र १।१।३ स्वर्णस्य चतुरङ्गुलप्रमिता शला का कार्या तयातत्पात्र विद्ध 'जलघटी' भवतीति ।

ज्योतिर्विदाभरणेऽपि—

'गुर्वक्षराणामुदित च षष्ट्या पल पलानां घटिका त्रिलंका ।' इति ।

ग्रन्थान्तरेऽपि—

'शीर्षं प्रसूतेर्घटिका निषेया कालोऽत्र सूक्ष्म कथितो मुनीन्द्रैः ।
इत्य घटीयन्त्रविधानमाद्यं दशीरित सुश्मतन्त्रावबुध्यं ॥
यन्त्रं दिवासाधनमेव केचिन्निशासाधन केचिदिह प्रयुक्तम् ।
प्रसाध्यते येन दिवानिशात मुख्य घटीयन्त्रमहं प्रवक्ष्ये ॥
दशापला मुलयोत्सम्भुत्वा घटस्ताम्रितमच्युताङ्गुलं ।
रसमितं विस्तारं मितांगुलं समघना तु घटी समुदीरिता ॥
चतुर्भिर्वाहभिर्गुञ्जा त्रिगुञ्जा वल्ल उच्यते ।
वल्लैं षोडशभिर्वा मत्तं षोडशभि पलम् ॥
तोल्यं तु सार्धत्रयमाषहेम्नो दशार्धगुञ्जा प्रवदन्ति माषम् ।
शला विधेया चतुरङ्गुलाद्यैस्ततस्तु घट्या विवर विधेयम् ॥ इति

विष्णुपुराणे तु घटिकाज्ञानोपायो यथा—

निमेषो मानुषो यो य मात्रामात्रप्रमाणत ।
तं पञ्चदशभि काष्ठा त्रिंशत्काष्ठास्तथा कला ॥
नाडिका तु प्रमाणेन कलादश च पञ्च च ।
उन्मानेनाम्भस सा तु पलान्यर्धत्रयोदश ॥
हेममाषैं कृतच्छिद्रा चतुर्भिश्चतुरङ्गुलैं ।
मागधेन प्रमाणेन जलप्रस्थस्तु सम्मित ॥ इति ।

(शेष पृष्ठ ११४ पर)

त्रिकाण्डशेषेऽपि पृ० २७२ श्लोक ६४ 'अथ ताम्री स्यान्मानरन्ध्रा विकालिका ॥' इति ।

नलिकापर्याया —नल , नलकसुषिरम् , नलिका, नलिकाबन्ध ।

छिद्रप०—छिद्रम् , रन्ध्रम् , सुषिरम् ।

इह नलिकाछिद्रतो ग्रहदर्शनहेतुमाह भास्कर 'दर्शयेद्दिविचर दिवि के वाऽनेहसि द्युचर' दर्शनयोग्ये ।

पूर्वमेव विरचय्य यथोक्त रञ्जनाय सुजनस्य नृपस्य ॥ इति सि० शि० ।

'दृग्ग्रहप०—दृक्खग , दृक्खचर , दृग्ग्रह , दृग्द्युचर ।

दृक्कर्मप०—दृक्कर्म, दृष्टिकर्म ।

दृक्कर्मलवप०—दृक्कर्मलव , दृष्टिकर्मलव ।

प्राग्दृग्ग्रहप०—पूर्वदृग्ग्रह , प्राग्दृग्ग्रह ।

पश्चिमदृग्ग्रहप०—पश्चिमदृग्ग्रह , प्रत्यग्दृग्ग्रह ।

'ताराग्रहकुजलम्बनप०—ताराग्रहकुजलम्बनम् ।

ताराभेदा —(१) प्रजापति, (२) मृगव्याध (व्याध ), (३) ब्रह्महृद (ब्रह्महृदय ), (४) अग्नि (हुतभुक), (५) अगस्त्य , (६) अपांवत्स (माप ), (७) लुब्धक (लुब्ध ), (८) इन्द्र (नेपृच्यून ) (९) वरुण (हर्शल), (१०) अभिजित् (ब्राह्मम् ) चैते दशतारा अपि नभसि दृश्यन्ते ।

१–१३ १४–२५

(पृष्ठ ११३ का शेष)

नैमित्तिकत्तय प्रपञ्चयिष्यन् निमेषादिक्रमेण प्रथमांशोरतमेव स्वल्पप्रमाणमनुस्मारयति निमेष इति सप्तभि । मात्रैव मात्र प्रमाण यस्य । एकमात्रलघ्वक्षरोच्चारणकालसम्मितो हि निमेष । निमेषकाल तुल्या हि मात्रा लघ्वक्षर च यत् ।' इति ब्राह्माण्डोक्ते ॥

नाडिकाज्ञानोपायमाह—

उन्मानेनेति सार्द्धेन । अम्भ स उन्मानेन उन्मीयतेऽनेनेत्युन्मान पात्रम् । अर्द्धेन योगेन त्रयोदश सार्द्धत्रयोदशेत्यर्थ । उन्मानरूपेण धटितानि सार्द्ध द्वादशपलानि सा नाडिका । सार्द्धद्वादशपलताम्रनिर्मितपात्रेण सा नाडिका भातस्थेत्यर्थ । कि प्रमाण तत्पात्र कार्यं तदाह मागधेन प्रमाणेन जलप्रस्थस्तु सम्मृत ।' इति सार्द्धद्वादशपल जलेन हि मागधदेशप्रस्थ प्रपूर्यते । तत्प्रमाण पात्र कार्यमित्यर्थासिद्धम् । ननु तयापि पात्रेण कथ नाडिकाज्ञान क्रियापरिच्छेद्यत्वात्कालस्येत्याशक्य क्रियासिद्धर्थं प्रस्यादि विशिनष्टि । हेमेति । माष पञ्चगुञ्ज । हेम्नो माषैश्चतुर्भिश्चतुरङ्गुलेन शलाकारूपेण रचितं कृतच्छिद्रा । एतदुक्त भवति । सार्द्धद्वादशपलताम्रमय मागधप्रस्थसम्मितमूर्ध्वायित पात्र चतुर्माषचतुरगुलहेमशलाकया कृताधश्छिद्र जले स्थापित तेन छिद्रेण यावता कालेन पूयते तावान् कालो नाडिकेति । तथा च शुक '—द्वादशार्द्धपलोन्मान चतुर्भिश्चतुरङ्गुलं । स्वर्णमाषं कृतच्छिद्र यावत्प्रस्थजलप्लुतमिति । इति तट्टीकाया श्रीधर स्वामिन । इति दा०चि० २।८६३ ।

(१) दृक्कर्म्मदत्तो ग्रहआकाशे दृग्गोचरो भवति ।

(२) भौमादीनाकुजलम्बनानि (क्षितिजलम्बनानि) नाभ स्वस्वोदयास्तकाले लम्बनानि स्यु ॥

गतपर्याया—अतीत, इत, गत, प्रगत, यात, व्यतीत।

गम्यपर्या०—अगत, एष्य, गम्य, भविता, भाव्य, येय।

तात्कालिकप०-तत्कालज, तत्कालभव, तात्कालिक, तात्कालीन।

'पर्वप०-पर्व (अन्) (न०) पूर्णिमाप्रतिपत्सन्धि, दर्शप्रतिपत्सन्धि।

पर्वान्तप०-अमान्त, कृष्णगम, कृष्णान्त, दर्शान्त, पर्वविराम, पर्वविरामकाल, पर्वान्त पौर्णमास्यन्त, शुक्लगम, सितान्त, सूर्येन्दुसङ्गमान्त।

तिथिविरामप०—तिथिविरति, तिथिविराम, तिथ्यन्त, तिथ्यपाय स्फुटतिथ्यवसानम्।

प्रतिपदन्तप०—प्रतिपदन्त, प्रतिपद्गम।

विराह्वर्कप०—विपात, विपातार्क, विराह्वर्क, व्यगु व्यगुरवि, व्यग्वर्क।

विराहुचन्द्रप०—विराहुचन्द्र, व्यगुचन्द्र, व्यगुविधु।

साग्वर्कप०—साग्वर्क, साग्विन।

ग्रहणप०—ग्रह ग्रहणम्, ग्रग्रह।

सम्भवप०—विनिश्चय, सम्भव।

शरप०—इषु, कलम्ब, पृषत्क, बाण, शर, सायक शेषपर्यायास्तु कामपर्याये द्रष्टव्या।

स्पष्टशरप०—स्पष्टबाण, स्पष्टशर, स्फुटबाण स्फुटशर।

चन्द्रशरप०—चन्द्रबाण, चन्द्रविक्षेप, चन्द्रशर, विक्षेप।

अत्राह भास्कर—

'विक्षेपइन्दो स च बाणसंज्ञ' इति शिरोमणौ।

बिम्बप०—तनु (स्त्री०), बिम्ब (अस्त्री), मण्डलम् (नि०) मानम् (न०), वपु (उस्)(न०)।

बिम्बकलाप०—बिम्बकला, बिम्बकलिका, बिम्बलिप्ता बिम्बलिप्तिका, मण्डललिप्ता।

अगुलादिप०—अगुलादि, अगुलमुखम्, अगुल वदनम्।

भूभाप०—अवनीभा, उर्वीप्रभा, कुभा, क्षितिभा, क्ष्माभा, भूच्छाया, भूभा, भूमिभा, मेदिनीच्छाया, राहुबिम्बम्।

सूर्यग्रहणप०—रविग्रह, सूर्यग्रहणम्।

चन्द्रग्रहणप०—चन्द्रग्रहणम्, विधुग्रह, विधुरिहितम।

'छाद्यप०—ग्राह्य, छाद्य, पिधेय।

'छादकपर्याया—ग्राहक, छादक, पिधानम्, सञ्छादक।



(१) पर्वशब्द पूर्णिमाऽमावस्या वाची ज्ञेय। (२) छादकीयो वा छादितु योग्यस्ताद्य।

(२) अगुलाद्यो 'व्यगुल' मपि ग्राह्यम्।

(३) छादयति च सञ्छादक। चन्द्रग्रहणे छादको भूभा। छाद्यश्चन्द्र। रविग्रहणे छादकश्चन्द्र, छाद्यो रवि। ग्राह्यग्राहकयोर्योगो ग्रहणम्, योगो नामान्तराभाव ग्राह्यग्राहकयोरन्तराभावो ग्रहणम्।

मानैक्यप०- विम्बयोगः, विम्बैक्यम्, मण्डलयोगः, मण्डलैक्यम्, मानयोगः, मानैक्यम् ।

मानैक्यखण्डप०-बिम्बयोगार्द्धम्, बिम्बैक्यखण्डम्, विम्बैक्यार्द्धम्, मण्डलयोगार्द्धम्, मण्डलैक्यखण्डम्, मण्डलैक्यार्द्धम्, मानयोगार्द्धम्, मानैक्यखण्डम्, मानैक्यार्द्धम् ।

ग्रासप०-ग्रसनम्, ग्रासः, छन्नम्, पिहितम्, स्थगितम् ।

खग्रासप०-अपिहितम्, खग्रसनम्, खग्रास, खच्छन्नम्, खच्छन्नकम्, नभश्छन्नम्, निखिलग्रहः, सर्वग्रहः, सर्वग्रहणम् ।

स्थितिप०-स्थितिः ।

स्थितिभेदाः—(१) स्पर्शस्थितिः, (२) मध्यस्थितिः, (३) मोक्षस्थितिश्चेति स्थितेस्त्रयोभेदाः स्युः ।

स्पर्शस्थितिप०—स्पर्शस्थितिः, स्पार्शिका, स्पार्शिकी ।

मध्यस्थितिप०—मध्यस्थितिः, माध्यमिका, माध्यमिकी ।

मोक्षस्थितिप०-मोक्षस्थितिः, मौक्तिका, मौक्तिकी मौक्षिका, मोक्षिकी ।

स्थित्यर्द्धप०—स्थितिखण्डम्, स्थितिदलम्, स्थित्यर्द्धम् ।

मर्दप०—मर्दम्, विमर्दम् ।

मर्दार्द्धप०—मर्दखण्डम्, मर्ददलम्, मर्दार्द्धम्, विमर्दार्द्धम् ।

स्पार्शिकग्रासप०—स्पार्शिकग्रसनम्, स्पार्शिकग्रासः ।

मौक्षिकग्रासप०—मौक्षिकग्रसनम्, मौक्षिकग्रासः ।

स्पर्शप०—स्पर्शः (ग्रासप्रारम्भः) ।

मोक्षप०—मोक्षः (ग्रासाभावः) ।

पिहितप०-पिहितम्, सम्मीलनम् निमीलनम्, (सर्वबिम्बग्रासः) ।

अपिहितप०-अपिहितम्, उन्मीलनम् (बिम्बोन्मुक्तप्रारम्भकालः ।

[1]स्पर्शकालप०—ग्रहणमुखम्, प्रग्रहः, (आरम्भः), प्रग्रहणम्, स्पर्शकालः, स्पर्शसमयः ।

[2]मध्यकालप०—ग्रहणमध्यम्, मध्यकालः, मध्यग्रहः, मध्यग्रहणम्, तात्पविरतिः, स्फुटतिथ्यवसानम् ।

[3]सम्मीलनकालप०—निमीलनम्, पिहितम्, मीलनम्, सम्मीलनम् ।

[4]उन्मीलनकालप०—अपिहितम्, उन्मीलनम्, उन्मीलनकालः ।

१–२४ २५–४८

(१) एष स्थितेर्दलोनके स्फुटतिथ्यन्ते भवति ।

(२) स्फुटतिथ्यन्त एव मध्यं मध्यग्रहणं ग्रहणमध्यं भवति । अस्मात्प्राक् स्थित्यर्द्धनाडीषु प्रग्रहः, परतो मुक्तिर्ज्ञेया ।

(३) एष मर्दार्द्धनाडीषु भवति ।

(४) स तु मर्दजासु नाडीषु भवति ।

सकलग्रहप०—अखिलग्रह, निखिलग्रह, सकलग्रह, सर्वग्रहणम्।

[1]कङ्कणप०—कङ्कणम्, कङ्कणग्रह, कङ्कणग्रहणम्।

[2]मोक्षकालप०. ग्रहणविराम, पर्वविरामकाल, मुक्ति, मुक्तिकाल, मोक्ष, मोक्षकाल, विमोक्ष, विमोचनम्।

पर्वकालप०—ग्रहणाखिलकाल, पर्वकाल, पर्वसमय।

परिलेखप०—आलेख्यकर्म (अन्), छेद्यक, परिलेख, बिम्बलेखनम्, मण्डललेख।

यदुक्तम्—

'न च्छेद्यकमृते यस्माद्भेदा ग्रहणयो स्फुटा। ज्ञायन्ते तत्प्रवक्ष्यामिच्छेद्यकज्ञानमुत्तमम् ॥'

(इति सूर्यसिद्धान्ते।)

नतभेदौ—(१) प्राङनतम् (२) पश्चिमनतम्, चेतिनतस्य वलनसिद्ध्यै द्वौ भेदौ स्याताम्। ग्ध्यार्केद्वाग्रंहो क्रमेण रात्रिदिवसयोर्भवेताम्, तदोक्तनते साध्ये।

[3]वलनभेदौ—(१) आक्षवलनम् (२) आयनवलन, चेति द्वौ वलनौ स्त।

वलनाग्रिप०—वलनचरणा, वलनपादा, वलनाग्रय।

[4]संस्कृतिप०—संस्करणम्, संस्कृति, संस्क्रिया।

आशाग्रिप०—आशाग्रि, आशाघ्रि, छन्नाघ्रि, छन्नाशाघ्रि, दिक्चरण, दिक्पाद।

१–१३ १४–२६

(१) स्लोविम्बमाने ऽर्कतनो सुपुष्टे सर्वग्रह कङ्कणमयथा स्यात। अस्यार्थं—अर्कतनो सूर्यविम्बाद् श्नोविम्बमाने सुपुष्टे गुरुतरे सति सवग्रहो भवति। अन्यथा नाम चन्द्रबिम्बात्सूर्यबिम्बे विस्तृततरे सति 'कङ्कणग्रहण' ज्ञेयम्। ग्राहकविम्बे पृथुतरे ग्राह्यमाच्छाद्य खग्रासग्रहणोद्भव। ग्राहकबिम्बे लघुतरे सति ग्राह्यबिम्ब ग्राहकबिम्बमभित सितकङ्कणाकृतिर्मुद्र भ्राजते, तत कङ्कणग्रहण दृश्यते।

(२) अभ्यधिके स्फुटतिथ्यन्ते स्थितिदलेनैव मोक्षो भवति।

(३) सममण्डलप्राच्या सकाशा नाडिकामण्डलप्राची यावतान्तरेण वलति तदाक्ष वलनमित्यन्वर्थं नाम।

अथवा—

यत्सममण्डल सा स्पष्टा प्राची, सममण्डलनाडिकामण्डलप्राच्योर्यदन्तर तदाक्षवलनम्। यतो नाडिकामण्डलसममण्डलयोरन्तर अक्षांशा एव, तथैव नाडीमण्डलप्राच्या क्रान्तिमण्डलप्राची यावतान्तरेण वलति तदायन वलन अयनसम्बन्धित्वादायन वलन अयम।

(४) संस्कृतिर्यथा—धनयोर्योग ऋणयोरपि योग, धनर्णयोरन्तरमेव योग। 'यदुक्तम्'—'योगे युति स्यात्क्षययो स्वयोर्वा धनर्णयोरन्तरमेव योग।' इति बीजगणिते।

उभयसंस्कृतिर्यथा—अयनाक्षवलनयो संस्कृति, एकदिशि योगो भिन्नदिशोरन्तरम्। वलनदिक् चरणा स्यु।

तरु, द्रु, द्रुम, द्वीप धरणीरुह, न, नग, नन्द्यावर्त, नाग, पर्णी (इन्), पलाशी (इन्), पादप, पुलाकी (इन), पुष्पद, पुष्पफलद, पुष्पफली (इन), फलद, भूज, भूरुट् (ह्), भूरुह, महीज महीरुह, रूक्ष, वनस्पति, वसु, वह्निजन्मा (अन्), वह्निभू, विटपी (इन्), विष्टर, वृक्ष, शाखी (इन्), शाल, शिखरी (इन्), साल सीमाक, सीमिक, स्कन्धी (इन), स्थिर, हरित (त्), हरितच्छद, हरिद्रु । 'पेड 'ग छ 'विरवा' इति च भाषा ।

**काण्डपर्याया.**—काष्ठम्, दलिकम्, दारु, दारुमात्र, स्थाणु, 'लकड़ी' इति भाषा ।

**प्रस्तरप०**—अश्मा (अन्), उपल, काचक, ग्रावा (अन्), दृष (य) त् (द्), पारटीट, पाराक्क, पारावुक, पाषाण, प्रस्तर, मुम्मरु, शिला, 'पत्थर' इ० भा० ।

**मृत्तिकाप०**—तुवरी, मृत्ति, मृत्तिका, मृत् (द्), मृदा, । 'मिट्टी' इ० भा, ।

**पाषाणचूर्णप०**—पाषाणक्षोद, प्रस्तरचूर्ण, शिलारज (अस्), 'सिमेण्ट' इति भाषा ।

**सुधाप०**—कटशर्करा, लेपनम्, लेपनद्रव्यम्, सुधा, सौधभूषणम् । 'चूना' इ० भा० ।

**इष्टकाप०**—इष्टका, दग्धमृत्खण्डम्, दग्धमृच्छकलम् । 'ईंट इति भाषा ।

**शिल्पप०**—कर्म (अन्), कला शिल्पम्, विज्ञानम् ।

**शिल्पिप०**—कारी (इन) कारु, कारुक, प्रकृति, शिल्पकार, शिल्पी (इन),। मिस्त्री 'राज', ओड, इति च भाषा ।

**वर्द्धकिप०**—काष्ठतट् (क्ष्), काष्ठतक्षक, तक्षा (अन्) त्वष्टा (ष्टृ), रथकृत् (त्), रथकार, वर्द्धकि, शिल्पकार, शिल्पकारी (इन्) । 'बढ़ई' इति भाषा ।

**शयनगृहप०**—आवरक, गर्भागारम्, वासौक (अस्) । शेषस्त्वन्यत्र ।

**खट्वाप०**—खट्वा, पर्यङ्क, पल्यङ्क, मञ्च, मञ्चक ।

**शय्याप०**—तलिमम्, तल्पम्, शयनम्, शयनीयम्, शय्या ।

**निद्राप०**—तन्द्रा-न्द्रि-न्द्री, तामसी, नन्दीमुखी, निद्रा प्रमीला, शयनम्, श्वासहेति, सलय, संवेश, स्वाप ।

**अधिकनिद्राप०**—सुखसुप्तिका, सुप्तम्, सुष्वाप ।

**मनुष्यप०**—मनुज, मनुष्य, मानव, शेषस्तु देववर्गे ।

**पुरुषप०**—नर, पुरुष, शेषस्तु देववर्गे ।

**पति०**—धव, पति, भर्ता (तृ), शेषस्तु रवौ ।

**स्त्रीप०**—नारी, महिला, स्त्री, शेषस्तु सरस्वत्याम् ।

**पत्नीप०**—गृहिणी, पत्नी, भार्या, शेषस्तु सरस्वत्याम् ।

**शिश्नप०**—कामलता, पुश्चिह्नम्, मेढ्ः मेहनम्, लङ्गुलम्, लाङ्गुलम्, लिङ्गम् शङ्कु, शिश्नम्, शेप शेप (अस्) (न०), शेफ, शेफ (अस्) (न०) ।

**योनिप०**—अपत्यपथ, च्युति, वुलि, भग, योनि, स्मरकूपिका स्मरमन्दिरम्, स्त्रीचिह्नम् ।

**वीर्यप०**—आनन्दप्रभवम्, इन्द्रियम्, किट्टव-

जितम्, निषेकम् पुंस्त्वम्, पौरुषम्, प्रधानधातु, बलम्, बीजसमुद्भवम् रेत (अस्) (न०), वीर्य्यम्, शुक्रम्।

नरनारीप०—जम्पती, जायापती, दम्पती, भार्यापती।

अथवा—

द्वन्द्वम्, नृयुग्मम, मिथुनम्, स्त्रीपुंसौ (पु० द्वि०)।

मैथुनप०—कामकेलि (स्त्री०), ग्राम्यधर्म्म, निधुवनम्, पशुक्रिया (स्त्री०), पशुधर्म्म, मैथुनम्, मोहनम, रतम् रति (स्त्री०) रह (अस्) (न०), व्यवाय, संवशनम्, सम्प्रयोग, सम्भोग, सुरतम्।

आधानप०—आधानम्, गर्भाधानम, निषेक, बीजप्रक्षेपकाल।

गर्भाशयप०—उल्वम्, गर्भाशय, जरायु, 'गर्भ झिल्ली इति भाषा।

रक्तशुक्रमिश्रणप०—उल्बम्, कललम्।

दौहृदप०—दोहदम, दौहृदम्, लालसा, श्रद्धा।

दोहदान्वितापo—दोहदान्विता, श्रद्धालु।

गर्भप०—गरभ गभ, दोहदलक्षणम्, भ्रूण।

गर्भवतीप०—अन्तर्वत्नी, आपन्नसत्वा, उदरिणी, गर्भवती, गर्भिणी, गुर्विणी, गुर्वी।

प्रसवमासप०—प्रजनन, सूतिमा (अस्), सूतिमास, जन्ममास।

प्रसवप०—उद्भव, प्रसव, प्रसूति (स्त्री), प्रजननम् सव, समुद्भव।

प्रसूताप०—जातसन्ताना, जातापत्या, नवप्रसूता, प्रजाता, प्रसववती, प्रसूता, प्रसूतिका, विजाता, सूतका, सूतिका।

उपसूतिकाप०—उपसूतका, उपसूतिका, उपप्रसूता, उपप्रसूतिका।

सूतिकागृहप०—अरिष्टम्, सूतिकागारम्, सूतिकागृहम्, सूतिकागेहम्, सूतिकाभवनम्, सूतिकावास, सूतिगृहम्।

पुत्रप०—आत्मज, तनय, नन्दन, पुत्र, शेषस्त्वन्यत्र।

पुत्रीप०—आत्मजा, कन्या, दुहिता, पुत्री, शेषस्त्वन्यत्र।

बालकप०—अर्भ, अर्भक, उत्तानशय, कुमार, कुमारक, क्षीरकण्ठ, क्षीरकण्ठक, क्षीरप, गर्भ, डिम्भ, दारक, पाक, पृथक, पोत, पोतक, बाल, बालक, बालिश, माणवक, मुष्टिन्धय, वटु, वत्स, शाव, शावक, शिशु, शिशुक, स्तनन्धय, स्तनप।

इति श्रीमुकुन्ददैवज्ञविरचिते ज्योतिषशब्दकोषे दशमो मुहूर्त्तादिवर्ग समाप्त।

—०—

## आयुर्दायादिवर्गः।

आयु पर्याया—आयु (पु०), आयु (उस्)(न०), जीवितकाल, परमायु (उस्) (न०)।

आयुष्यप०—आयुष्यम्, पथ्यम्।

अरिष्टप०—अरिष्टम् अशुभम्, कष्टम्, जन्य, रिष्टम्।

अरिष्टभेदा—(१) गण्डारिष्टम्, (२) चन्द्रारि-

ष्टम्, (सु) ग्रहारिष्टम्, (४) योगारिष्टम्, (५) पताकीवेधजारिष्ट चैतेऽरिष्टस्य पञ्च भेदा स्यु ।

गण्डान्तप० —गण्डान्तम् (न०), तिथ्यादिसन्धि (पु०) ।

गण्डान्तभेदा —(१) तिथिगण्डान्त, (२) नक्षत्र गण्डान्त, लग्नगण्डान्तश्चेते गण्डान्तस्य त्रयो भेदा सन्ति ।

तदुक्त ग्रन्थान्तरे—

'नक्षत्रतिथिलग्नाना गण्डान्त त्रिविध स्मृतम ।
नवपञ्चचतुर्थाना ह्यं कार्द्धघटिकामितम ॥

इति श० चि० १।७७३।

अभुक्तमूलप०—अभुक्तमूलम् । मूलक्षघटिका विशेष ।

तद्यथा—मूलस्यारम्भत प्रथमाष्टघटघ ज्येष्ठाया अन्तिमपञ्चघटघ । एव त्रयोदशघटचात्मक कालो ऽभुक्तमूलकालो ज्ञेय ।

आयुर्भेदा —(१) अनायु, (२) अल्पायु, (३) मध्यायु (४) दीर्घायु, (५) पूर्णायु, (६) अमितायुश्चैते उपन्ता क्लीवलिङ्गा ।

अनायु प०—अनायु (उप) (न०) तत्कालमरणम्, तत्क्षणमरणम्, सद्योमरणम ।

अल्पायु प०—अल्पायु, तुच्छायु, स्वल्पायु ।

मध्यायु प०—मध्यमायु, मध्यायु ।

दीर्घायु प० —उत्तमायु, चिरायु, दीर्घायु, महत्तरायु, विपुलायु ।

पूर्णायु प०—परमायु, पूर्णायु,

साग्रवर्षशतम् (न०) मानवायु (न०)

सपञ्चनिशाविंशत्युत्तरसमाना शतम् ।

तदुक्तम्—

'जीवेद्वर्षशतसाग्रमपमृत्युविवर्जितम् ।'

इति दुर्गासप्तशत्याम् ।

इह स्पष्टमाह वराह —

समा षष्टिर्द्विघ्नी मनुजकरिणा पञ्च च निशा'

इति बृहज्जातके ।

अमितायु प०—अमितायु, प्रमाणरहितायु ।

यदुक्त केशवेन—

'कर्कीन्द्विज्ययुतोदये बुधसितौ केन्द्रे श्यरीदो तरैरायुर्विद्धयमितमिति जातकपद्धतौ ।

रामायणे तु तन्मानमुक्तम्—

दशवर्षसहस्राणि दशवर्षशतानि च ।
वसामि मानुषे लोक पालयन् पृथिवीमिमाम् ॥'

इति ।

आयुषोऽन्यभेदा —(१) अनियतम, (२) नियतम्, (३) योगोत्थितम्, चैत आयुषस्त्रयो भेदा सन्ति ।

अनियतपर्याया —अनियतायु, अमितायु, दिव्यायु ।

नियतायु प०—गणितागतम्, ग्रहगणितजम्, नियतम् ।

योगोत्थितायु प०—जातकायु, योगजायु, योगोत्थितायु ।

गणितागतायुर्भेदा —(१)अशायु, (२)निसर्गायु, (३) पिण्डायु, (४) जीवायु, (५) मिश्रायु, (६) भिन्नाष्टकवर्गजायु, (७) समुदायाष्टकवर्गजायु, (८) मिश्रायु, (९) रश्मिजायु, (१०) नक्षत्रजायु, (११) नवांशजायु, (१२)केन्द्रजायु, (१३) जैमिनीयायु, (१४) बादरायणायु । आयुषोऽन्ये भेदा अपि सन्ति ।

नतप०—नतम् (पु० न०) एतद्दशमलग्नसाधनोपकरणम्)।

नतभेदौ—(१) नतम्, (२) उन्नतञ्चैतौ नतस्य द्वौ भेदौ स्याताम्।

तदुक्तं मदीय (मुकुन्द) पद्धतौ—

'अभीष्टकालो द्युदलेन वर्जितोऽ
थोत्रिंशतश्चेदधिकं खषट्च्युतं।
नतं परं प्राक्खगुणाल्पकाधिके
ताभ्यां विहीनाः खगुणा इहोन्नते॥' इति।
१।२।

नतप्रभेदाः-(१) पूर्वनतम् (दिनार्द्धत प्राक्काल), (२) पूर्वोन्नतम् (निशीथत पर काल), (३) पश्चिमनतम् (दिनार्द्धत परो यात काल),(४) पश्चिमोन्नतम् (निशीथत. प्राक्काल) चैते नतस्य चत्वार प्रभेदा सन्ति।

भावपर्याया -भावा, तन्वादय, तेषा पर्यायास्तु प्रागेवोक्ता।

दृष्टिपर्याया -दृक् (श्) (स्त्री०), दृष्टि (स्त्री०) शेपस्त्वचक्षुश्च।

द्रष्टृप०-दर्शक (नि०), दर्शयिता (तृ) (नि०), द्रष्टा (ष्टृ) (नि०), पश्यतीति।

दृश्यप०-दृश्यम्, द्रष्टव्यम्, दर्शनीयम्, द्रष्टुयोग्य, चैते त्रिलिङ्गा सन्ति।

यदुक्तं केशवेन—

'सेकाग्निदिग्विवदरामवमभूस्राम्रामेराद्भिने द्रष्टाऽवर्जितदृश्यकस्येति' जातकपद्धतौ।

बलप०-ऊर्जम्, ओज (स्), तर (स्), दृढम्, द्रविणम्, धीर, धीरता, पराक्रम, प्राण, बलम्, वीर्यम्, शक्ति शुष्मम्, शौर्यम्, सत्वम्, सह (स्), सारम्, स्थाम (न्)।

बलभेदौ-(१) ग्रहबलम्, (२) भावबलम्, चैतौ बलस्य द्वौभेदौ स्याताम्।

ग्रहबलभेदा.—(१) स्थानबलम्, (२) दिग्बलम्, (३) कालबलम्, (४) निसर्गबलम्, (५) चेष्टाबलम्, (६) दृग्बल, चैतानि ग्रहाणा षड्बलानि सन्ति।

स्थानबलप्रभेदा—(१) उच्चबलम्, (२) सप्तवर्गजबलम्, (३) केन्द्रादिबलम्, (४) युग्मायुग्मबलम्, (५) द्रेष्काणबलम्, चैतेषा पञ्चाना योगः स्थानबल ज्ञेयम्।

दिग्बलपर्याया.—आशाबलम्, दिग्बलम्, दिशाबलम्, हरिद्बलम्।

तदानयनमुक्तं केशवेन—

'मन्दाल्लग्नमिनात्कुजाच्च हिबुकं शोध्य विधोर्भाद्वाग्मिनाद्य ज्ञाद्गुरुतोऽस्तमन रसभात्पुष्ट त्यजेच्चक्रत। दिग्वीर्यं रसहृत्' इति जातकपद्धतौ॥७॥

कालबलप्रभेदा.—(१) पक्षबलम्, (२) नतोन्नतबलम् (३) द्युरात्रिभ्यशबलम्, (४) वर्षेशादिबल चैतेषा चतुर्णा योगः कालबल बोध्यम्।

वर्षेशादिबलप्रभेदाः—(१)वर्षेशबलम्,(२)मासेशबलम्, (३) दिनेशबलम्, (४) कालहोरेशबल चैतेषा चतुर्णां योगो वर्षेशादिबल ज्ञेयम्।

कालहोराप०—कालहोरा (स्त्री०)।

अस्या आनयनविधिरुक्तो रामेण—

'वारादेर्घटिका द्विघ्ना स्वाक्षहृच्छेषवर्जिता।
सैकास्तष्टा नग कालहोरेशा दिनपात् क्रमात्॥'
इति मुहूर्त्तचिन्तामणौ १।

तेनैव तत्प्रयोजनमुक्तम्—
'वारे प्रोक्त कालहोरासु तस्य इति ।
**चेष्टाबलप्रभेदौ**—(१) अयनबलम्, (२) चेष्टा बल चैतौ चेष्टाबलस्य द्वौ भेदौ स्याताम् । तयोर्योग एव चेष्टाबल बोध्यम् ।
**भावबलप०**—भावबलम भाववीर्यम्, भावौज ।
**भावबलभेदौ**—(१) भावदिग्बलम्, (२) भाव दृग्बल, चैतौ भावबलस्य द्वौ भेदौ स्याताम् ।
तत्र बुधगुरुदृशोर्योग कायस्तदा स्फुटग्रहबल स्यात ।
**रश्मिप०**—अशु, कर किरण, मरीचि, रश्मि, शेषस्तु रवौ ।
**रश्मिभेदौ**—(१) उच्चरश्मि, (२) चेष्टारश्मिश्चैतौ रश्मेद्वौ भेदौ स्याताम ।
**इष्टप०**—इष्टम, शुभम ।
**कष्टप०**—अशुभम कष्टम् ।
**तत्प्रभेदौ**—स्पष्टशुभम स्पष्टाशुभम्, स्फुट शुभम, स्फुटाशुभम ।
**गुणकनामानि**—उच्चगुणक, चेष्टागुणक, स्फुटगुणक मध्यमाश्रयगुणक स्पष्टाश्रयगुणक, कर्मयोग्यगुणक ।
**अशायु पर्यायौ**—अशायु सत्यायु ।
**आयुर्भागप०**—आयुरशा आयुर्भागा, आयुलवा ,
**हानिप**—अपचय, अपहार हरणम हानि ।
**हानिभेदा**—(१) चक्रार्द्धहानि (चक्रपातार्द्धहानि ), (२) शत्रुक्षेत्रगतहानि (३) अस्तगतहानि, (४) लग्नस्थपापहानि । (५) नीच भगतहानि, (६) नीचभस्थग्रहयुक्तहानि श्चैतानि षड्विधहरणानि स्यु ।
**पिण्डायुगुणका**—(१( गोऽङ्गा, (२) तत्त्वानि, (३) तिथय, (४) रवय (५) दिनानि, (६) स्वर्गा (७) नरवा चैते र ये क्रमात्पिण्डायु र्गुणका सन्ति ।
**निसर्गायुर्गुणका**—(१) नखा (२) भू, (३) द्वौ, (४) गाव, (५) धृति, (६) नखरा, (७) पञ्चाशत् चैते खे क्रमान्निसर्गायुर्गुणका सन्ति ।

**पिण्डायु प्रभृतीनामशप०**-पिण्डायुरशा, पिण्डायुर्भागा पिण्डायुर्लवा' निसर्गायुरशा, निसर्गायुर्भागा, निसर्गायुर्लवा, जीवायुरशा जीवायुर्भागा, जीवायुर्लवा ।

**हानिसस्कृतायुरशप०**—हरणसस्कृतायुरशा, हानिसस्कृतायुर्भागा, हानिसस्कृतायुर्लवा ।
**वर्षायायु प०**—अब्दायायु वर्षमुखायु, वर्षायायु शरदाननायु, समावदनायु हायनास्यायु ।
**अन्तर्दशाप०**—अन्तरम्, अन्तर्दशा, पक्ता (क्तृ), पाचक ।
**दशाप्रवेशप०**—दशानिवेश, दशाप्रवेश, दशासन्निवेश, दायप्रवेश ।
**नक्षत्रप०**—ऋक्षम, नक्षत्रम, भम्, शेषस्तु नक्षत्रपर्याये ।
**भभुक्तप०**—इत, गत, प्रगत, प्रयात भभुक्त, भयात यात ।
**भभोग्यप०**—अगत, अयात, एष्य, गम्य,

भगम्य, भभोग भभोग्य भैष्य, भोग्य, येय। गतगम्ययो पर्यायौ यात येयावित्युक्त श्रीपतिना—

मिहिरविरहितेन्दोरशकेभ्या द्विचन्द्रैगततिथि निचय स्यात्तत्र शेष गतारूरम। तदपि हरवि शुद्ध गम्यक तद्विलिप्ता गतिविवरविभक्ता यात यया विनाडच ।। इति सिद्धान्तशेखरे—इति कतकीटीकायाम ७२।१५३

**सर्वर्क्षप०**—सर्वभोग, सर्वभोग्य, सवर्क्षम।

**स्पष्टभुक्तप०**—स्पष्टभुक्तम, स्फुटभुक्तम।

**स्पष्टभोग्यप०**—स्पष्टभोग्यम स्फुटभोग्यम।

**स्पष्टसवर्क्षप०**—स्पष्टसवर्क्षम, स्फुटसवर्क्षम्।

**दशापर्याया**—दशा, दाय।

**दशानामानि**—अष्टोत्तरीदशा, कालचक्रीदशा, चरदशा, महादशा, योगिनीदशा, विंशोत्तरीदशा। एव अन्या अपि विविधा दशा सन्ति।

**विंशोत्तरीदशेशनामानि**—(१) आदित्य, (२) चन्द्र, (३) कुज, (४) राहु (५) जीव, (६) शनि, (७) बुध, (८) केतु, (९) शुक्रश्चेते विंशोतर्यां कृत्तिकानक्षत्रत क्रमेण आदित्यादयो नवग्रहा दशाधिपा ज्ञेया।

**दशेशवर्षाणि**—(१) रसा, (२) दश (३) शैला, (४) धृति (५) अष्टि (६) अतिधृति (७) अत्यष्टि, (८) सप्त, (९) विंशति। इति आदित्यक्रमतो दशेशाना वर्षाणि सन्ति।

**योगिनीदशाधिपनामानि**—(१) मङ्गला, (२) पिङ्गला, (३) धान्या, (४) भ्रामरी, (५) भद्रिका, (६) उल्का, (७) सिद्धा, (८) सङ्कटा, चैता अष्टौ योगिनीदशाधिपा आर्द्रानक्षत्रत क्रमेण ज्ञेया।

**योगिनीदशेशवर्षाणि**—(१) एक (२) द्वौ (३) त्रय, (४) चत्वार (५) पञ्च, (६) षट् (७) सप्त, (८) अष्टौ, चेति मगलाक्रमतो दशाधिपाना वर्षाणि सन्ति।

**दशाप्रभेदा**—(१) दशा, (२) अन्तर्दशा, (३) विदशा (उपदशा), (४) सूक्ष्मदशा (५) प्राण दशा, चेत्येते दशाया पञ्चभेदा सन्ति।

**अन्तर्दशापर्याया**—अन्तरम् अन्तर्दशा, अन्तर्दाय, अपहार, अपहृति, भुक्ति, हृति।

**विदशाप०**—उपदशा, विदशा।

**पाचकप०**—पक्ता (क्तृ), परिपाचक, पाचक।

**फलपाककालप०**—परिणति, परिणाम, परिपाक, पाक, फलपाककाल, विपाक।

**जन्मराशिप०**—जन्म (न्मन्), जन्मभम्, जन्मराशि जन्मर्क्षम।

**जन्मराशिस्वामिप०**—ऋक्षेश, जन्मभनाथ, जन्मराशिनाथ, जन्मर्क्षस्वामी (इन्)।

इति श्रीमुकुन्ददवज्ञविरचित ज्योतिषशब्दकोष एकादश आयुर्दायादिवर्ग समाप्त।

— ० —

दृष्ट्यादिपर्यायफलोदाहरणवर्गः ।

[1]दर्शनपर्याया.—अवलोक, अवलोकनम्, अवेक्षणम्, अवेक्षा, आलोक, आलोकनम्, आलोचनम् ईक्षणम्, ईक्षा, दर्शनम्, दृक् (श) (स्त्री), दृशि (स्त्री०) दृश्या (स्त्री), दृष्टि (स्त्री), द्योतनम्, निध्यानम्, निभालनम्, निरीक्षणम्, निर्वर्णनम् निशमनम्, निशामनम्, परिलोकनम्, प्रेक्षणम्, प्रेक्षा (स्त्री०), लोक, लोकनम्, विलोक, विलोकनम्, विलोचनम्, वीक्षणम् वीक्षा (स्त्री), समालोक, समालोकनम्, समालोचनम्, समीक्षणम्, समीक्षा (स्त्री)।

[2]प्रेक्षणक्रियाप०—अवलोकितम् (न०), आलोकितम् (न०), ईक्षितम् (न०), निरीक्षितम् (न०), वीक्षितम् (न०) इत्यादय सर्वेशब्दा नपुंसके ज्ञेया ।

[3]दर्शितप०—अभिवीक्षित, अवलोकित, अवेक्षित, आलोकित, ईक्षित, दर्शित, दृष्ट, निरीक्षित, निभाल्ति, परिलोकित, प्रदृष्ट, प्रविलोकित, प्रसमीक्षित, प्रेक्षित, प्रोद्वीक्षित, लोकित, विलोकित, वीक्षित, सन्दर्शित, सन्दृष्ट, सम्प्रदृष्ट, समालोकि, समीक्षित,-श्चैत सर्वे शब्दास्त्रिलिङ्गा भवन्ति।

[4]दर्शनीयप०—अवलोकनीय अवलोकितव्य, अवलोक्य, अवेक्षणार्ह, अवेक्षणीय, आलोकनार्ह, ईक्षणार्ह, ईक्षणीय, ईक्षितुयोग्य, ईक्षितव्य, ईक्ष्य, द्रष्टव्य, द्रष्टुयोग्य, प्रक्षणीय, प्रेक्ष्य, वीक्षणीय, वीक्ष्य, समीक्षणीय, समीक्ष्य,-श्चैते त्रिलिङ्गा ।

[5]द्रष्टृप०—आलोकी (इन्) (त्रि०), दर्शक, दर्शयिता (तृ), दर्शी (इन्), दृष्टिकर्ता (तृ), द्रष्टा (ष्टृ), समालोकी (इन) एते सर्वेऽन लिङ्गा ।

[6]दृश्यप०—दृश्य (त्रि०), प्रक्ष्य (त्रि०), वीक्ष्य (त्रि०), समीक्ष्य (त्रि०)।

[7]दृश्यप०—दृश्यम् (न०), प्रक्ष्यम् (न०), वीक्ष्यम् (न०), समीक्ष्यम् (न०)।

[8]दृष्ट्वाव्ययप०—अवलोक्य (अ०), आलोक्य (अ०), दृष्ट्वा (अ०), निरीक्ष्य (अ०), प्रसमीक्ष्य (अ०), प्रेक्ष्य (अ०), विलोक्य (अ०), वीक्ष्य (अ०), सम्प्रक्ष्य (अ०)।

[9]पश्यत्प०—अवलोकयन् (त्) (त्रि०), आलोकयन् (त्) (त्रि०), परिलोकयन् (त्) (त्रि०), पश्यन् (त्) (त्रि०), विलोकयन् (त्) (त्रि०)।

[10]दृश्यमानप०—अवेक्ष्यमाण (त्रि०), अवलोक्यमान (त्रि०), ईक्ष्यमाण (त्रि०), दृश्यमान (त्रि०), निरीक्ष्यमाण (त्रि०), परिदृश्यमान (त्रि०), परिलोक्यमान (त्रि०), विलोक्यमान (त्रि०) वीक्ष्यमाण (त्रि०), सन्दृश्यमान

१–२४ २१–४८

(१) देखना (२) देखने की क्रिया (३) देखा (४) देखने योग्य (५) देखने वाला (६) देखा जाने वाला (७) दिखलाई देने वाली वस्तु (८) देख कर (९) देखता हुआ (१०) जो देखा जाता है।

(त्रि०), सन्निरीक्ष्यमाण (त्रि०), समालोक्य मान (त्रि०)।

'दृष्टिदृष्टप०—ईक्षणवीक्षित, दर्शनप्राप्त, दृष्ट-देह, दृष्टमूर्ति, दृष्टशरीर, दृष्टिदृष्ट, दृष्टि-पथगत, प्रविलोकनयुत, प्रसमीक्षितदेह, प्रेक्ष णतागत, प्रेक्षणत्वयात श्चैते सर्वे त्रिलिंगा भवन्ति।

स्थितिप०—अवस्थानम् (न०), अवस्थित (स्त्री०), आसना (स्त्री०), आस्था (स्त्री०), आस्या (स्त्री), उपविष्टि (स्त्री०) निष्ठा (स्त्री०), प्रतिष्ठा (स्त्री०), वास (पु०), व्यव स्थानम् (न०), व्यवस्थिति (स्त्री०), संस्था (स्त्री०), संस्थिति (स्त्री०), स्थिति, (स्त्री०), एते सर्वे षष्ठीविभक्त्यन्त प्रयोज्या। यथा रवे-र्मेषे स्थिति। इति।

संयोगवाचकशब्दा—अन्वय (पु०) मिलनम् (न०), मल (पु०), मेलक (पु०), मेलनम (न०), युति (स्त्री०), याग (पु०), समुति (स्त्री०), संयोग (पु०), संसर्ग (पु०), सङ्ग (पु०), सङ्गति (स्त्री०), सङ्गम (पु०), सम न्वय (पु०), समागम (पु०), समाज (पु०), समायोग (पु०), समिति (स्त्री०), एते सर्वेऽपि षष्ठीविभक्तयन्ते प्रयोज्या। यथा— खलग्रहाणा मिलनम्।' इति।

युक्तवाचकशब्दा—अन्वित आढ्य, आश्लिष्ट आलिंगित अयुत प्रयुक्त, मिलित, मिश्रित, युक् (ज्) युक्त युत, लगित लग्न, लीन, शाली (इन्), संयुक् (ज्), संयुक्त, संयुत, संलग्न, संश्लिष्ट, संसक्त, संहित, सक्त, सखा, सङ्गत, सनाथ, समन्वित, समाढ्य, समेत, सम्पद्यमान, सम्पृक्त, सम्मिश्र, सहित, एते सर्वे त्रिलिङ्गा भवन्ति। ते तृतीयाविभ-क्तयन्ते योज्या। यथा—"खलै समेत।" इति।

व्याप्तवाचकशब्दा—आचित, आश्रित, उप-विष्ट, निचित, समाक्रान्त एते त्रिलिंगा तृती-याविभक्तयन्ते योज्या।

प्राप्तवाचकशब्दा—अधिगत, आगत, आपन्न, आप्त, आयात, आस्थित, इत, उपग, उप-गत, उपयात, उपेयिवान् (वस्वन्त), ग, गत प्रगत, प्रयात, प्राप्त, यात, समधिगत, समागत, समासादित, समुपस्थित, समुपेत, सम्प्राप्त एते त्रिलिंगा।

स्थितवाचकशब्दा—अधिष्ठित, अवस्थित, आश्रित, आसनावस्थित, आसीन, उपविष्ट, उपस्थित, कृतावस्थानम्, प्रतिष्ठित, विराज मान, व्यवस्थित, श्रित संश्रित, संस्थ, संस्थित, समाश्रित, समासीन, समुपाश्रित, सेवित, स्थ, स्थित। एते त्रिलिंगा।

स्थानवाचकशब्दा—आयतनम्, आश्रय, आस्प-दम्, कृतपद, कृतस्थिति, कृतायतन, कृताश्रय, कृतास्पद, गृहम् पदम्, संश्रय, स्थलम्, स्थानम।

मिलित्वाऽव्ययवाचकशब्दा—उपेत्य मिलित्वा

१-२७ २८-५४

(१) मार्गो स रेखा गया।

(मिलकर), सम्मिल्य, समुपेत्य,, समेत्य, एतेऽव्यया ।

**प्राप्याव्ययवाचकशब्दा**—अधिगम्य (प्राप्त होकर), प्राप्य (पाकर), सम्प्राप्य ।

**पूर्णपर्याया**—आचितम्, छन्नम्, निचितम्, पूरितम्, पूर्णम्, भरितम्, व्याप्तम्, एते त्रिलिङ्गा ।

**सम्बन्धप०**—युक्ति (स्त्री०), सयोग (पु०), ससर्ग, सस्पर्श, समागम, सम्पर्क, सम्बन्ध, स्पर्श, स्पृष्टि (स्त्री०)।

**सम्बन्धभेदाः**—(१) अन्योन्यराशिस्थितत्व प्रथम, (२) परस्परदृष्टिसम्बन्धो द्वितीय, (३) एकत्र दृष्टिसम्बन्धस्तृतीय, (४) सहाव स्थानसम्बन्धश्चतुर्थ, इत्येते सम्बन्धस्य चत्वारो भेदा स्यु ।

**सम्बन्धिप०**—सयोगी, ससर्गी सम्पर्की, सम्बन्धी, एते इन्नतास्त्रिलिङ्गा स्यु ।

**अण्प्रत्ययान्तशब्दा**—कौल, कौश, स्मार ।

**युक्तस्थितादिवाचकप्रकीर्णशब्दा**:—अधिकस्थ, अधिवृत्त, अधियोग, अधिश्रित, अध्यासित, अध्यासीन, अध्युषित, अभिगत, अभ्युपेत । आयात, अवलम्बित, अष्टम, नवम, षष्ठ, आकीर्ण, आक्रान्त, आरूढ, आवास, आश्रित्य (अ०), कलित, कृताधिकार, चन्द्राधियोग, इष्टयुत, निरत, निष्ठ, पतित प्रकल्प्य (अ०) प्रपूर्णम्, मिश्र, यथातथा (कर्मनिवृत्त्यर्थवाचक), याप्य, योगाधियोग, वह, विराजमान, समनुपतित ।

**मतुबन्तशब्दा**—तपोवान्, तमोवान्, भानुमान्, अङ्गपवान्, अस्तपवान्, पण्डितवान्, साधुमान्,, मन्दवान्, एते त्रिलिङ्गा स्यु ।

**मत्वर्थीयशब्दा**—अधिकारी, अधिशाली, अवलम्बी, केन्द्री, जु (ष) षाली, भाक् (ज), यायी युक् (ज्), याशी, विहारी, सङ्गी, स्थायी, स्पृक् (श्), एते त्रिलिङ्गा स्यु ।

**णिनिप्रत्ययान्तशब्दा**—आलम्बी, गामी, चारी, निवासी, वर्ती, वासी, शाली, एते त्रिलिङ्गा स्यु ।

**सहसमासजशब्दा**—साधिकार, सधन, समद, समुख, ससरस्वतीश ।

**दृष्टिप०**—आलोक (पु०) आलोकनम् (न०), आलोचनम्, (न०), ईक्षणम् (न०), ईक्षा (स्त्री०), दर्शनम (न०) दृक् (श्) (स्त्री०) दृशि (स्त्री०), दृष्टि (स्त्री०) द्योतनम् (न०), निध्यानम्, निभालनम्, (न०), निवर्णनम्, (न०), निशमनम् (न०), निशामनम् (न०)।

**दृष्टप०**—अवलोकित, आलोकित, ईक्षित, निरीक्षित, परिलोकित, परीक्षित, प्रदृष्ट, प्रेक्षित, प्रोद्वीक्षित, लक्षित, विलोकित, सवीक्षित सदृष्ट, समालोकित, समीक्षित, सम्प्रदृष्ट, एते त्रिलिङ्गा स्युः।

**दृष्टिदृष्टवाचकप्रकीर्णशब्दा**—दत्तनेत्र, दृष्टदेह, दृष्टमूर्ति, दृष्टशरीर, दृष्टिघटित, दृष्टियुद्ध, प्रेक्षणता, प्रेक्षणत्वम् ।

**युतेक्षणवाचकशब्दा**—ईशान्वयराग्, दर्शनयोग, युतिदृक् युतिवीक्षणम्, वीक्षणसमागम ।

**दृष्ट्वावाचकाव्ययशब्दा**—अवेक्ष्य, आलोक्य,

दृष्ट्वा, प्रेक्ष्य, विलोक्य, सदृश्य, समीक्ष्य, एतेऽव्यया स्यु ।

मध्यप० —अन्त (र्) (अ०), अन्तरम् (न०), अन्तरा (अ०), अन्तरालम् (न०), अन्तरालकम् (न०), अभ्यन्तरम् (न०), मध्य (पु० न०) ।

मध्यगतप० – अन्तरगत, अन्तर्गत, मध्यग, मध्यगत मध्ययात ।

विनार्थवाचकाव्ययशब्दा.—अन्तरेण, ऋते, विना, हिरुक्, एतेऽव्यया स्यु । क्वचित्–अन्तरम, वर्जनमपि ।

वर्जितयाचकशब्दा – उज्झित, ऊन, ऊनित, च्युत, न्यून परिच्युत, मुक्तम्, रहित, वर्जित, वि (अ०), विमुक्त वियुक्त, वियुत, विरहित विवर्जित, विश्लेष्यम्, विश्लेष्यम्, विहीन, वीत, एते त्रिलिङ्गा स्यु ।

अन्तरवाचकशब्दा —अन्तरम्, विवरम् ।

वर्ज्यवाचकशब्दा —परिवर्जनीय, परिवर्जितव्य, परिवर्ज्य, वर्जनीय, वर्जितव्य, वर्ज्य, (छोडने योग्य) ।

वर्जयित्वावाचकाव्ययशब्दा —अप, अपहाय, अपास्य, त्यक्त्वा, परिहृत्य, प्रोज्झ्य, वर्जयित्वा, विहाय, सन्त्यज्य हित्वा, एतेऽव्यया,

क्तवतुप्रत्ययान्तशब्दा —आश्रितवान् इतवान्, गतवान्, प्राप्तवान्, यातवान्, स्थितवान्, एते त्रिलिङ्गा स्यु ।

शानच्–कानच् प्रत्ययान्तशब्दा —ईक्ष्यमाण, वर्तमान विद्यमान, विराजमान, विलोक्यमान, वीक्ष्यमाण, शोभमान, समीक्ष्यमाण, एते त्रिलिङ्गा स्यु ।

शतृप्रत्ययान्तशब्दा —अधितिष्ठन्, गच्छन्, चरन् चलन्, तिष्ठन्, निवसन्, पश्यन्, प्रवसन्, भवन, वसन्, व्रजन्, सन्, एते त्रिलिङ्गा स्यु ।

प्रकीर्णशब्दा —अगुरुग, गुरुग, समभग, एतऽपि त्रिलिङ्गा स्यु ।

अयात पर स्थितिपर्यायाणामुदाहरणानि प्रदर्श्यन्ते (ठहरने का स्थान) ।

अवस्थानम् (न०)स्थिति, वास, प्रतिष्ठा ।

यथा— अवस्थानमङ्ग शशाङ्कज्यभानाम्' इति ग्रन्थकार । अवस्थिति (स्त्री०)वास ।

" अवस्थितिर्लभिगृहेसता चेत्' इति ग्र. का । आसना (स्त्री०) स्थिति ।

" 'भवति दिवसभर्तुस्त्वासनायामजस्रं' इ ग्र का । आस्था (स्त्री०) स्थिति ।

" 'आस्थाया यदि घटभे खराशुसूनो' इ ग्र का । आस्था (स्त्री०) स्थिति ।

" 'आस्थाया पुण्डरीके जनजनिसमये पद्मिनीनाथसूनो' इ ग्र का ।

उपविष्टि (स्त्री०) वास ।

" यदोपविष्टिर्मदने खलानाम्' इ ग्र का. । निष्ठा (स्त्री०) स्थिति ।

" 'निष्ठाऽब्जनीलाम्बरभास्वता भवे इ ग्र ।

प्रतिष्ठा (स्त्री०) स्थिति ।

" पुण्ये पपीपङ्गुकविप्रतिष्ठा' इ ग्र का ।

वास (पु०) १ अवस्थानम् । २ गृहम् ।

„ 'त्रिषडायेष्वसद्वासो विशेषेण गुरूदयः ।'
इ ग्र. का ।
व्यवस्थानम् (न०) स्थिति ।
„ 'व्यवस्थानमन्त्ये शनीनेन्दुजानाम्' इ ग्रं ।
व्यवस्थितिः (स्त्री०) १ अवस्थानम् ।
२ व्यवस्था ।
„ 'व्यवस्थितिर्जन्मनि वित्तभावे खलग्रहाणा धनहानिमाहु ।' इति ग्र० का० ।
संस्था (स्त्री०) स्थितिः ।
„ 'संस्थाजनो जीवगृहे जडांशो.' इ ग्र का. ।
संस्थिति. (स्त्री०) स्थितिः ।
„ बन्धु नुसदने कुजराह्वो. संस्थिती रचयति क्षयरोगम् ।' इति जैमिनीयपद्यामृते ।
अथवा—
'केन्द्रत्रिकोणरन्ध्रार्थेष्वनयोः (लग्नेन्द्वो) शुभसंस्थिति. ।' इति ग्रन्थान्तरे ।
वा—
'सता संस्थिति. सूनुभे सूनुलब्धिः' इ. ग्र ।
स्थिति' (स्त्री०) अवस्थानम् ।
'उशनसः कलशे जनुषि स्थितौ'
इति जातकाभरणे ।
अथेदानी संयोगवाचकशब्दोदाहृ०
अन्वय' (पु०) संयोग , सम्बन्ध , मेल ।
„ यदान्वयोऽङ्के गुरुभास्वतोर्जनौ' इ ग्र का.

मेलः (पु०) } सङ्ग., सङ्गम ।
मेलक' „ }
मेलनम् (न.) ।

यथा—'भदे मेलन मन्दमार्तण्डनाम्नोः' इ ग्र. का.
युवित. (स्त्री०) सङ्गः ।
„ यमारयोर्युक्तिरनङ्गभावे' इ ग्र. का. ।
युतिः (स्त्री०) योगः, समागमः ।
„ 'मदनमन्दिर आरभयोर्युति.' इ. ग्र का ।
योग (पु०) १ संयोगः २ युक्ति. ।
„ 'अथ कण्ठकायेशयोगेऽतिपराक्रमी स्यात्' इ० ग्र० का० ।
संयुति' (स्त्री०) संयोगः ।
„ 'अजे संयुतिर्मङ्गलादित्यसून्वोः' इ, ग्र का.
संयोगः (पु०) मेलनम्, सम्बन्धः ।
„ 'संयोग आये यमयामिनीशयो.' इ. ग्र. का.
संसर्ग. (पु०) १ संगः, सङ्गमः २ समवायादिसम्बन्ध. ।
„ 'संसर्ग आङ्गिरसगोरदस्म्यो.' इ. ग्र. का. ।
सङ्ग. (पु०) १ संयोग., सङ्गमः, मेल', ऐक्यम् २ संसर्ग', संस्पर्शः ।
„ 'सङ्गो विसारे विधुवासरेशयो.' इ. ग्र. का.
सङ्गतिः (स्त्री०) सङ्गम. ।
„ 'वृषे सङ्गति. षोडशायूडुपस्योः' इ ग्र. का.
सङ्गम (पु०) संग., मेलक. ।
„ 'जम्बालनीड उडुपार्कवितसङ्गमश्चेत्' इ० ग्र० का० ।
समन्वयः (पु०) संयोग', मिलनम् ।
„ 'मतिपति. सवलोऽत्र समन्वये शशपयोः सति कष्टकभे तथा ।' इ० ग्र० का० ।
समागम' (पु०) संयोगः ।
„ 'उडुपतेर्वृषभेऽत्र समागम.' इ० ग्र० का० ।
समाज (पु०) समितिः, संयोगः ।

" 'हयाङ्गे हरीन्दुज्ञभाना समाज' इ०प्र० का

समायोग (पु०) सयोग, समागम, सम्बन्ध

" 'समायोगो याम्ये यमजनकनीहारकरयो' इ० प्र० का०।

समिति (स्त्री०) समाज, सयोग।

" 'भग्लोविदा समितिरायगृहेऽर्थलाभ' इ प्र

अथाधुना युक्तवाचकशब्दानामुदाहरणानि प्रदर्श्यन्ते।

अन्वित (त्रि०) युक्त।

" 'कल्याणयातो कविनान्वित कलेट्' इ प्र

आढ्य (त्रि०) युक्त।

' 'शुभाशुभाढये यदि जन्मलग्ने' इति जातकपारिजाते।

आश्लिष्ट (त्रि०) आलिङ्गित।

" 'आये सदाऽऽश्लिष्ट इनारमन्दे' इ प्र का

आलिङ्गित (त्रि०) युक्त।

" 'तनयभवननाथो धन्विनाऽऽलिङ्गिताङ्ग' इ० प्र० का

उपेत (त्रि०) युक्त।

, पष्ठनिध्ययाष्टमोपेता व्ययवित्तगृहाधिपा' इ० जा० पा०।

प्रयुत (त्रि०) युक्त।

यथा—'दिनपतौ प्रयुते मदनेऽशुभे इ० प्र का।

प्रयुक्त (त्रि०) युक्त।

" 'माग्ये भगे भास्करिणा प्रयुक्ते' इ प्र का

प्रसक्त (त्रि०) सबद्ध, मिलित।

" 'शुभस्यास्य प्रसक्तस्य' इत्युडुदायप्रदीपे।

मिलित (त्रि०) युक्त, सङ्गत।

" 'शङ्कु बु जीमिलिताश्च दिवाम्बुगे भृगुसुते करनाश उतागुले।' इति गिरिधर।

मिश्रित (त्रि०) मिलि।, युक्त।

" 'मदालये मिश्रित आरविद्भ्याम्' इ प्र।

युक् (ज्) (त्रि०) युक्त।

" 'सचरणभूयुग्प्रसनमभीष्टम्।' इ० प्र०।

युक्त (त्रि०) युत, मिलित।

" 'अथ निर्मलं। युक्तेऽमलाशे सहजे च कारके इति प्र० का०।

युत (त्रि०) युक्त, सहित।

" 'चरराशियुतेलग्ने धरासुतयुते मदे।' इति प्रश्नमार्गे।

लगित (त्रि०) }
लग्न " } सयुक्त, मिलित।
लीन " }

" 'शनिना लगिते लग्ने, हे नौ लग्ने सुधांशुना मङ्गले ग्लौभुवा लीने' इ० प्र० का०।

आलिङ्गिताङ्ग (त्रि०) मिलितदेह।

" 'आलिङ्गिताङ्गो धनुषाऽङ्गगो मृदु' इ प्र

सयुक् (ज्) (त्रि०) }
सयुक्त , } युक्त।
सयुत " }

, पापसयुजि मारनिकेत' इ० प्र० का०।

धनेशे लाभसयुक्ते' इति। 'कारके बलहीन वा क्रूरषष्ठयशसयुते॥ इति च त्रि० मा०

सलग्न (त्रि०) सयुक्त।

" 'सयुक्ते रविणा तुषारकिरणे' इ०प्र०का०

सश्लिष्ट (त्रि०) मिलित, आश्लिष्ट।

" 'सश्लिष्ट शशिना सरोरुहसुहृत्' इ प्र का

सपक्त (त्रि०) सलग्न. ।

,, 'ससक्त इन्दौ खररश्मिमालिना' इ ग्र का

सहित (त्रि०) १ सहित, २ मिलित ।

,, 'सहितो यदि विदा निशाकर' इ ग्र का ।

सक्त (त्रि०) लग्न, लगित ।

, 'आत्मकारकलवे शशिसक्ते इ जै प सू

अथवा—

यथा—'निधनभवननाथ कामिनीभावसक्त इ ग्र

सखा (त्रि०) सहाय, सहचारी अनुचर, अभिसर ।

,, 'अखिलकेन्द्रसखे खलखेचरे' इ ज्यो भ

अथवा—

अशुभशुभसख' इ विवाहवृन्दावने ।

सङ्गत (त्रि०) युक्त ।

,, द्वितनौ भार्गवभार्यभूभवा । यदि ते तुरगाङ्गसङ्गता सुतदा । इति ग्र० का ।

सनाथ (त्रि०) नाथवत्, रक्षक युक्त इत्यर्थ ।

, 'विग्रहे कमलिनीशसनाथे' इति ग्र० का० ।

अथवा—

सपत्नभवविक्रमे शनिकुजरविभि सनाथे, इति ज्यो० भ० ।

समन्वित (त्रि०) युक्त ।

सतः गृहे सौम्यखगं समन्विते इ ग्र का ।

समाढ्य (त्रि०) युक्त ।

यथा—सौम्ये समाढ्ये सुतसद्मनीन्दौ इ ग्र का ।

समेत (त्रि०) मिलित, सयुक्त ।

,, 'पञ्चमे नवमे धूसमेतौ सितभास्करौ । इति गार्गि ।

अथवा

'मदे पतङ्गे मृदुना समेते' इ० ग्र० का० ।

सम्पद्यमान (त्रि०) मिलित ।

,, 'सम्पद्यमानस्तरणिर्धराभुवा' इ ग्र का ।

सम्पृक्त (त्रि०) सयुक्त ।

, 'सम्पृक्तोऽसृक् सौरिणा भास्वता वा' इ ग्र का ।

सम्मिश्र (त्रि०) सयुक्त ।

, सम्मिश्रश्चेद् भास्करो बोधनेन इ ग्र का

सहित (त्रि०) सयुक्त ।

,, भास्करहिमकरसहित शनैश्चरो मृत्युद प्रसवकाले ।' इति सारावल्याम् ।

अथवा—

यमोऽकमाभ्या सहितोऽतद सवे' इ ग्र

अथाधुना व्याप्तवाचकशब्दोदाहरणानि—

आचित (त्रि०) व्याप्त ।

, 'ज्यो चिति नेत्रपाप्यवस्याचिते सोमसुते' इ ग्र का. ।

आश्रित (त्रि०) अधिष्ठित ।

'यदाश्रिते कालगृहे कलानिधौ समीक्षिते कालखगेन जन्मनि । इ ग्र का ।

उपविष्ट (त्रि०) अधिष्ठित ।

'उपविष्ट इने निधने सयमे द्रविणे विधुना सहिते सकुजे ।' इ ग्र का ।

निचित (त्रि०) व्याप्त, पूरित ।

'घोषोदयभाजि कष्टके स न्निचिते दोक्षणधीस्थले विदोज्ये ।' इ ज्यो भ ।

अथवा—

'कष्टके यदि नोदयभाजि शोभनयुगनिना

निचिते ऽत्र ।' इ ग्र का ।

समाक्रान्त (त्रि०) १ व्याप्त, २ अधिष्ठित ।

,, 'समाक्रान्त सौम्यो यदि जनुषि देवार्चितपदा ।' इ ग्र का ।

अथवा—'समाक्रान्त सौम्यं सुतसदनगे भास्करसुते ।' इ० ग्र० का० ।

अथ सम्प्रति प्राप्तवाचकशब्दोदाहरणानि—

अधिगत. (त्रि०) प्राप्त ।

,, अधिगते धनभे धरणीभुवः' इ० ग्र० का० ।

आगत (त्रि०) १ आयात, उपस्थित, प्राप्त ।

,, गणे सता गात्रगृहोपगेऽथव तनौ शुभव्योमगयोगमागते ।' इ० ग्र० का० ।

आपन्न (त्रि०) १ प्राप्त, २ आगत ।

,, सद्योगमापन्न इहोद्गमालये' इति० ग्र० का० ।

आप्त (त्रि०) १ प्राप्त, २ लब्ध ।

,, 'खगे खराशौ खलदृष्टिमाप्ते' इति ।

वा—

,, 'सोदरपेऽङ्गमाप्ते' इति च ग्र० का० ।

आयात (त्रि०) आगत ।

,, 'शुभवर्गे लग्नगते लग्ने वा शुभवर्गमायाते । इ० जै० प० ।

आस्थित (त्रि०) १ प्राप्त, २ आरूढ ।

,, 'यदोद्गमे सद्दृशमास्थिते जनौ' इ० ग्र० का० ।

अथवा—

केन्द्रारूढे शोभनव्योमवासे ।' इ० ग्र० का० ।

इत (त्रि०) गत. ।

, कायोपगेऽर्के शुभवीक्षणेते ।' इ० ग्र० का० ।

ग (त्रि०) पदान्ते गच्छत्यस्मिन्, घञर्थक ।

,, 'विधुररौ च मृतौ शनिरायग ' इत्युदयभास्करे ।

अथवा—

तनुजलास्तसहोदरशत्रुगा गुरुसितेन्दुजमन्ददिवाकरा ।' इ० वि० मा० ।

गत (त्रि०) १ यात., २ प्राप्त. ।

, 'निशाकरे भाग्यगते सभार्गवे' इ० ग्र० का० ।

प्रगत (त्रि०) गत ।

,, 'कवौ कलत्र प्रगते सगोष्पतौ' इ० ग्र० का० ।

उपग (त्रि०) प्राप्त ।

,, यानेशकर्मोपगतो बलिष्ठो' इ० जा० पा० ।

अथवा—

उपगते शुभयोगमिने' मदे इ० ग्र० का० ।

उपयात (त्रि०) प्राप्त ।

,, बली विलग्नान्नवमोपयात ' इ० जा० पा० ।

उपेयिवान् (क्वस्वन्त ) (त्रि०) उपगत ।

'उपेयिवाननाश्वाननूचानश्चेति क्वसुप्रत्ययान्तो निपात ।

यथा—'पापमन्दिरमुपेयुषि मन्दे' इ० जं० प० ।

अथवा—

'अथ कलावति कर्कमुपेयुषि' इ० ग्र० का०

प्रयात (त्रि०) गत (गया),

„ 'कृशता प्रयात' इ० जं० प० ।

'विभावरीशे कृशता प्रयाते' इ० ग्र० का० ।

प्राप्त (त्रि०) समुपस्थित ।

„ विलेशाद्धनरि फरन्ध्रभवनप्राप्ताश्च सौम्यग्रहा' इ० ग्र० का ।

यात (त्रि०) गत ।

, याते कलत्र यदि कृष्णवाससि' इ० ग्र० का० ।

समधिगत (त्रि०) प्राप्त, अधिगत ।

„ 'सौम्या खेटास्त्रिकोणोदयसमधिगता केन्द्रगा नो असौम्या' इ० ग्र० का० ।

समागत (त्रि०) सम्प्राप्त ।

„ 'धर्मेशदृष्टौ यदि तद्युतौ वा परस्परक्षेत्रसमागतौ वा ।' इ० जा पा० ।

समासादित (त्रि०) १ प्राप्त २ आहृत ।

„ 'जायासमासादितउष्णरोचिषि' इ० ग्र० का० ।

समुपस्थित (त्रि०) प्राप्त ।

„ 'भार्यानिकेते समुपस्थिते भृगौ इ० ग्र० का० ।

समुपेत (त्रि०) सम्प्राप्त ।

यथा—अनन्तगेहे समुपेत आर्ये' इ० ग्र० का० ।

सम्प्राप्त (त्रि०) समागत ।

„ 'सम्प्राप्त उर्वीतनये मनोज्ञे' इ० ग्र० का० ।

अथेदानी स्थितवाचकशब्दोदाहरणानि—

अधिष्ठित (त्रि०) १ आश्रित, २ आहित ।

, अधिष्ठिते भास्वति भाग्यवेश्मनि' इ० ग्र० का० ।

अवस्थित (त्रि०) स्थित, आसीन, कृतावस्थानम् ।

„ निधानभावे सितगाववस्थिते इ० ग्र० का०

आश्रित (त्रि०) उपविष्ट ।

„ 'बृहस्पतावाश्रित उदगमालये' इ० ग्र० का०

आसानावस्थित (त्रि०) आसीन, समासीन, उपविष्ट, (बैठा) ।

„ 'आसनावस्थिते वाक्पतौ वाग्गृहे' इ० ग्र० का० ।

आसीनः (त्रि०) उपविष्ट ।

„ 'आसीने धवलच्छवौ धनगृहे धिष्ण्येन सवीक्षिते' इ० ग्र० का० ।

उपविष्ट (त्रि०) समासीन ।

„ 'उपविष्ट इनात्मनये तनये इ० ग्र० का० ।

उपस्थित, (त्रि०) १ उपसन्न, निकटस्थित, प्राप्त, ३ अगत ।

, 'उपस्थिते वेश्मनि वेश्मनायके' इ० ग्र० का०

कृतावस्थानम् (त्रि०) स्थित, आसीन ।

कृतावस्थानेऽर्के मदनभवने मन्दसहिते' इ० ग्र० का० ।

प्रतिष्ठित (त्रि०) सस्थित ।

" 'प्रभाकरे पङ्गुगृहे प्रतिष्ठिते' इ० ग्र० का०

व्यवस्थित (त्रि०) प्रतिष्ठित ।

" 'एव देशाधिनाथा ये ग्रहवेधे व्यवस्थिता ।' इति नरपतिजयचर्यायाम।

सस्थ. (त्रि०) अवस्थित ।

" 'ग्रहो यदि च कर्मणि सस्थ' इ० जा० पा० ।

स्थ (त्रि०) पदान्ते तिष्ठत्यस्मिन् 'घञ-र्थे क' ।

" 'राहुश्चतुष्टयस्थो मरणाय निरीक्षित पा॰ ।' इति सारावल्याम् ।

स्थित (त्रि०) १ वर्तमान, २ समुपस्थित, ३ निश्चल, स्थिर ।

वपुषि स्थिते स्वगृहतुङ्गे विधौ' इति । लग्नपुत्ररिपुविक्रमस्थिता शुक्रजीवशनि-भास्करा यदा ।' इति च वि० मा० ।

सस्थित (त्रि०) व्यवस्थित ।

, शोभने सस्थिते सोदरेशान्विते कण्टके' इ० ग्र० का० ।

समासीन (त्रि०) उपविष्ट ।

" 'समासीने सोमे सरखिसदनेशे सखिगृहे इ० ग्र० का० ।

श्रित (त्रि०) १ आश्रित २ सलग्न, सयुक्त ।

" 'श्रित उपारमणे रमणालये' इ० ग्र० का० ।

सश्रित (त्रि०) आश्रित, अनुजीवी ।

" 'सश्रिते कण्टके कोणपे सायपे ।' इ० ग्र० का० ।

'श्रितकण्टके च सुरराजमन्त्रिणि' इत्यु० भा० ।

'धान्याना नवसग्रहे शशिशनी लग्ने श्रितं-काशको' इ० वि० मा० । समुपाश्रित (त्रि०) आश्रित, उपविष्ट (बैठा) ।

" 'माहेयमन्दामृतरश्मिरोधना स्वनीच-राशि समुपाश्रिता इमे ।' इ० ग्र० का० ।

सेवित (त्रि०) आश्रित ।

" 'चेत्सेविता युवतिरत्रिजनु सुतेन' इ० ग्र० का० ।

अथाधुना स्थानवाचकशब्दोदाहरणानि—

कृतायतन (त्रि०) कृताश्रय, कृत आयतन आश्रयो येन ।

" 'कृतायतन स्वकीयतुङ्गोदये नलिनीवना-धिनाथ ।' इ० ग्र० का० ।

कृताश्रय (त्रि०) कृतपद ।

" 'कृताश्रय स्वीयसुहृद्विलग्ने सरस्वतीश सितसोमयुक्त ।' इ० ग्र० का०

कृतास्पद (त्रि०) कृतपद ।

" कृतास्पदो दैत्यगुरुर्निजोच्चोदये दयानाथ-निरीक्ष्यमाण ।' इ० ग्र० का० ।

कृतपद (त्रि०) कृतास्पद ।

कृत पद स्थान येन एव विध कुमुदस्य बन्धुश्चन्द्र ।

, स्वोच्चोदये कृतपद. कुमुदस्य बन्धु' इ० ज्यो० म० ।

कृतस्थितिः (त्रि०) कृतसंस्था ।
कृता स्थितिः संस्था येन एवं विधो राहुः ।
„ 'घटीसहवृश्चिकोदयकृतस्थितिर्जीवितं हरति राहुः ॥' इ० सा० व० ।

संश्रय (पु०) आश्रित. ।
यथा—'ग्रहैस्ततः पञ्चभिरुच्चसंश्रयैः' इति रघौ ३।१३

स्थलम् (न०) १ स्थानम् २ स्थलिः ।
„ 'लाभस्थौ सुखभाग्येशौ पश्यन्तौ वा सुखस्थलम् ।' इ० जा० पा० ।
अपि च—
'शीर्षोदयभाजि कण्टके सन्निचिते दीक्षणधीस्थले विदीज्ये ।' इति ज्यो० भ० ।

स्थानम् (न०) गृहम् ।
„ 'क्षेत्रस्थाने शुभक्षेत्रे तदीशे शुभसंयुते ।' इति ।
'तरणीन्दुकुजाः पुत्रस्थाने युक्ता न सौम्यगाः ।' इति च सर्वार्थचिंतामणौ ।

अथेदानीं मिलित्वाऽव्ययवाचकशब्दोदाहरणानि—

उपेत्य (अ०) समुपेत्य ।
„ 'दनुजगुरुमुपेत्यादित्यसूनुर्मदस्थ.' इ० ग्र० का० ।

मिलित्वा (अ०) समेत्य
„ 'मदे मिलित्वा मृदुमङ्गलेना कुर्वन्ति भार्यामरणं नरस्य ।' इ० ग्र० का० ।

सम्मिल्य (अ०) मिलित्वा ।
„ 'सम्मिल्य सौम्यास्फुजिदिन्दुजीवा स्मरे विवाहं झटिति प्रकुर्युः ।' इ. ग्र का ।

समुपेत्य (अ०) समेत्य ।
„ 'कलेवरेश समुपेत्य वित्तर.' । इ. ग्रं. का. ।

समेत्य (अ०) मिलित्वा
„ 'मित्रे कुप मङ्गलहेलिमन्दा. समेत्य जन्तोर्जननीं हरन्ति ।' इ ग्रं. का. ।
अथवा—
'मित्रोदयं राजमदं स्वराज्यं राज्यं रिपोर्यच्छति यो जनेश. ।
नेतुं समेत्योदयमेवमीयात्तमादराद्वै द्विजनेरितार्थः ॥
अस्यार्थः—मित्रोदयं लग्नस्थसूर्यं, राजमदं सप्तमस्थचन्द्रं, स्वराज्यं धनस्थबुधं एवं विधं उदयं लग्नं समेत्य प्राप्येति । इति ज्योतिर्विदाभरणे ।

अथ साम्प्रतं प्राप्यवाचकाव्ययशब्दोदाहरणानि—

अधिगम्य (अ०) सम्प्राप्य ।
„ 'सूर्यात्मजाशमधिगम्य हिमांशुरङ्गे' इ जं. प. ।

प्राप्य (अ०) अधिगम्य ।
„ प्राप्येन्द्रमन्त्रीन्दुगृहं यदोदये' इ. ग्र. का.

सम्प्राप्य (अ०) अधिगम्य ।
„ 'सम्प्राप्य पगु. कलश कलेवरे' इ. ग्रं. का ।

अथ साम्प्रतं सम्बन्धपर्यायाणामुदाहरणानि—

पृक्ति. (स्त्री०) सम्पर्क., स्पृष्टिः, स्पर्श. ।

" कलेवरेशे निजनेऽथवान्त्ये युक्तौ जनो चेत्कलुषग्रहाणाम् ।' इति ग्र का ।

सयोग (पु०) सम्पर्क ।

" सयोगो भवभे दिवाकरभुव ' इ ग्र का ।

ससर्ग (पु०) सङ्ग , सङ्गम ।

" ससर्गस्तनुभवने दिनेशचान्द्र्यो ।' इ, ग्र

सस्पर्श (पु०) । १-स्पर्श । २-सम्बन्ध ।

" सस्पर्शे मृतिमन्दिरे तनुविभो सौम्यैर्यदा नेक्षिते इ ग्र का ।

समागम (पु०) सयोग ।

" 'समागम शीतरुचे कलेवरे ।' इ ग्र का

सम्पर्क (पु०) १—सम्बन्ध । २—सयोग । ३—मेलक ।

" 'सम्पर्क सहजगृहे शुभग्रहाणाम् इ ग्र

सम्बन्ध (पु०) सयोगपूर्व ।

" सत्सम्बन्धे भाग्यगेहे विधीशे सद्धिर्दृष्टे जायते भाग्यवान्ना ।' इ ग्र का ।

स्पर्श (पु०) १—सम्पर्क । २—स्पर्शनम् ।

" स्पर्शे वित्ते बोधनस्याथवन्दो ' इ ग्र का

स्पृष्टि (स्त्री०) युक्ति सम्पर्क ।

" स्पृष्टौ कलेवरगृहे यदि लोहिताशो ' इ ग्र का ।

अथाऽधुनासम्बन्धिपर्यायोदाहरणानि—

सयोगी (इन्) (त्रि०) सयोगविशिष्ट ।

" सयोगिनीहास्तगृहे भृगोजने ' इ ग्र का ।

ससर्गी (इन्) (त्रि०) । १—ससर्गविशिष्ट । २—सङ्गी । मत्वर्थीय इति ।

" खलससर्गिणि भाव' इति जं प ।

सम्पर्की (इन्) (त्रि०) सम्पर्कविशिष्ट ।

" सम्पर्किणि सूनगृह दिवाविभो ।' इ ग्र

सम्बन्धी (इन्) (त्रि०) सम्बन्धविशिष्ट, गुणवान, सयुक ।

" 'चन्द्रोविलग्नसम्बन्धी वाहनेशसमन्वित ।' इति जा पा ।

अथ सम्प्रतीहोपयोगिनामण्प्रत्ययान्तादीना युक्तस्थितादिवाचकप्रकीर्णशब्दोदाहरणानि प्रदर्श्यन्त—

यथा—अण्प्रत्ययान्ता —

कौल (त्रि०) कुल वश , तत्र भव , इत्यनेनाण् प्रत्यय । दशमभावस्य इत्यर्थ ।

स्मार (त्रि०) स्मर काम 'तत्र भव' इत्यनेनाण् प्रत्यय । सप्तमभावस्य इत्यर्थ

कौश (त्रि०) कुश जल तत्र भव ' इत्यनेनाण् प्रत्यय । चतुर्थभावस्य इत्यर्थ ।

यथा—स्माराऽसुरेन्द्रमहित सहसा समेत कौल कलाधरनुतो यदि जन्मदिष्टे । कौशोऽनिजोऽखिलतनु पदमन्दिर सत्' इति ग्र का ।

अथवा—

'कौशो भवेत्कमलिनीपरिणायकश्चेत्स्मार सवित्कविरिहाहवयानकाले ।'

इति ज्यो० म० ।

अधिकल (पु०) पूर्ण ।

यथा—'पुरप्रवेशोऽधिकले विधौ हित इ ज्यो भ

अधिकृत् (त्) (त्रि०) अधिकारवान् ।

,, 'लग्नाधिकृति' 'लग्नाधिकारवतीत्यर्थ जै० प०।

अधियोगसञ्ज्ञ (पु०) योगविशेष।

,, 'एकोऽपि जीवो बलवान् विलग्ने केन्द्रत्रिकोणे शशिज. कविर्वा। द्वाभ्या च ताभ्यामधियोगसञ्ज्ञ' इ० वि० मा०।

अधिश्रितः (त्रि०) स्थित।

,, 'सौम्योऽधिश्रितकण्टकोऽतिबलवान्' इ० वि० मा०।

अध्यासित. (त्रि०) १ अधिष्ठित, २ निषेवित।

,, 'अध्यासितेऽस्तेऽवनिजेऽङ्गना क्षति' इ अ

अध्यासीन (त्रि०) उपविष्ट।

,, 'अध्यासीनेऽङ्गे गुरावङ्गपुष्टि.' इ अ का

अध्युषित (त्रि०) उषित, स्थित। 'वसा' इति भाषा

,, ''पदतो धनभे कलाधिभूगुरुशुक्राध्युषिते' जै० प०।

अन्वित (त्रि०) युक्तः, मिलित।

,, 'पापान्विते यदि विदेशगतोऽतिमूर्ख' इ० जा० पा०।

अभिगत (त्रि०) सेवित, आश्रित।

,, 'कायाख्येऽभिगत इनात्मजे सचापे' इ० अ०

अभ्युपेतः (त्रि०) उपगत, प्राप्त।

,, 'तुषाररश्मौ तनयेऽभ्युपेते' इ० अ० का०।

अयात (त्रि०) अगतः, अप्राप्त।

,, 'शुभदृष्टिमयाते' इ० जै० प०।

अवलम्बित (त्रि०) संश्रित, आश्रित।

,, 'अवलम्बित उद्गमगेह इने' इ० अ० का०।

अष्टमः (त्रि०)
नवम ,,
षष्ठ ,,

,, 'अष्टमो मङ्गल सौरिर्नवमः षष्ठ आस्फुजित्।' इ० अ० का०।

आकीर्णः (त्रि०) १ व्याप्तः, २ समाक्रान्त

,, 'आकीर्णेऽङ्गे पद्मिनीपालसूनौ इ अ का।

आक्रान्तः (त्रि०) १ कृताक्रमण, व्याप्तः, २ अभिभूत, पराभूत व्याकुल इत्यर्थ।

,, श्यामो वा व्यपगतरश्मिमण्डलो वा रूक्षो वा व्यपगतरश्मिवान् कृशो वा। आक्रान्त' इति भृगुसिद्धान्ते' इति सूर्यसिद्धान्ते रङ्गनाथविवृतौ।

अथवा—

'नेत्रद्वय पापयुत च पापाक्रान्तौ तदीशौ' इ० अ० का०।

आरूढ (त्रि०) कृतारोहणम्।

,, 'तमोग्रहो गुभारूढौ' इत्युडु प्र०।

आवासः (पु०) गृहम्, वासस्थानम्।

यथा—'आवासे सुरमन्त्रिणो हरिपदे' इ० अ० का०

आश्रित्य (अ०) संश्रित्य।

,, 'यस्मिन्भावे स्थित खेटस्तदाश्रित्य स्वक फलम्। ददाति' इति श्लोकशतके।

कलित (त्रि०) आप्तः, युक्त

,, 'भार्गवेण कलिते व्ययलाभे' इ० अ० का०।

अथवा—

पापयुग्मकलिते सुतपुण्ये' इ० जै० प०।

कृताधिकार (त्रि०) कृत अधिकार. स्वामित्व येन।

,, 'निशाकरागारकृताधिकार' इति। कर्क-

राशि गत इत्यर्थ । इ० जै० प० ।

क्षीणकल (पु०) अपूर्णकल ।

,, क्षीणकलाकलाप' क्षीणचन्द्र इत्यर्थ इ० जै० प० ।

चन्द्राधियोग (पु०) योगविशेष ।

'सौम्यै स्मरादिनिधनेष्वधियोग इन्दो इ० वृ० जा० ।

दृष्टियुत (त्रि०) दृगाढ्य ।

, बुधदृष्टियुते सौख्ये' ज्ञस्य दृशायुक्त इत्यर्थ । जै० प० ।

निरत (त्रि०) १ लीन, तत्पर, २ नियुक्त अधिकृत ।

,, 'वैरिरन्ध्रनिरतैरतिपापैरीक्षिते शशिनि मृत्युमुपैति । इ० वि० मा० ।

निष्ठ (त्रि०) स्थित ।

,, 'मानसे मलिनखेचरनिष्ठे' इति ।

अथवा—

'सैंहिकेयनलिनीपतिनिष्ठे इति च जै प ।

पतित (त्रि०) प्रस्कन्नम्, गलित ।

,, 'व्यायारिपूग्रा पतिता हरन्ति कष्ट शिशूना जनने तदानीम ।' इ० ग्र० का० ।

प्रकल्प्य (अ ) कल्पयित्वा ।

यथा—

'इत्थ तानादिभावाना लग्न तत्तत्प्रक ल्प्य वै । सर्वं फलं वदेत' इ श्लो श ।

प्रपूर्ण (त्रि०) } पूरित
प्रपूरित ,, }

,, प्रपूर्णेऽब्जे पड्वले कि कलाभि ' इ ग्र

,, प्रपूरिते षोडशभि कलाभि सुधाकरे' इ ग्र का ।

मिश्र (त्रि ) मिलित, मिश्रित, सम्पृक्त, सयुक्त ।

, अत्यन्ताशुभद पाप पापमध्ये यदा भवेत् सम्बधी तु शुभो मिश्रो ऽसम्बन्धी त्वशुभ-प्रद ।' इ श्लोक श

यथातथा (अ०) क्रमनिवृत्यर्थवाचकोऽयम् ।

, निधनारिधनव्ययस्थिता रविचन्द्रारयमा यथा तथा ।' इति वृ जा ।

याप्य (त्रि०), यापनीय, निरसनम्, परित्याग ।

,, 'न शुभगदिता योगा सदृष्टा याप्या स्यु ।'

पूर्ण यथोक्त फल न प्रयच्छन्तीत्यर्थ । इ वृ जा ।

योगाधियोग (पु ०) योगविशेष ।

, 'योगाधियोग सहितस्त्रिभि (ज्ञज्याच्छै) स्यात्' इ वि मा ।

वह (त्रि०) वाहक, वहनकर्ता ।

,, ऋषविशेषभुजा सयमात्मजा धिषणधिष्ण्य मृगाङ्कवह धनु ।' इति ज्यो भ ।

अथवा—

, धिषणधिष्ण्यपधिष्ण्यवह धनु ' इति ।

अथवा—

'उदयगा वनिता विधुभूवहा' इति च ग्र

विराजमान (त्रि०) दीप्तिविशिष्ट । शोभमान, सुशोभित (बैठा) ।

" विराजमाने द्विजराजखेचरे कृशे त्रिके भूतनयान्विते तथा ।' इ. प्र. का. ।
समनुपतितः (त्रि०) सम्यक् प्रकारेणानुपतितोऽनुगलित. (गिरा हुग्रा) ।
" 'समनुपतिताः सबुधास्त्रयो ग्रहाः' इ बृ जा
" ग्रथेदानी मतुप् प्रत्ययान्ता. शब्दा प्र द
तपोवान् (त्रि०) गुरुसहितः ।
तमोवान् (त्रि०) राहुसहित ।
भानुमान् (त्रि०) रविसहित ।
" 'व्योम्निभानुमति किं तपोवति' इ. प्र का.

ग्रथवा

'ग्रचलाजशानीक्षितवत्युदये' इति गिरधर. ।
ग्रङ्गपवान् (त्रि०) लग्नेशसहित ।
ग्रस्तपवान् (त्रि०) सप्तमेशसहित ।
" 'मन्मथेऽङ्गपवतीह नुर्मृतिर्मन्मथेऽस्तपवति स्त्रियास्तथा' इति ज्यो भ ।
पण्डितवान् (त्रि०) बुधसहित. ।
" 'षण्डाया पण्डितवति' पञ्चमे बुधसहित '
साधुमान् (त्रि०) शुभसहित ।
" 'सुधाकरे साधुमति' शुभग्रहसहिते चन्द्र'
मन्दवान् (त्रि०) शनिसहित ।
" 'चन्द्रे मन्दवति' (शनिसहिते चन्द्र इत्यर्थ )' इति च ज्यो. भ ।

ग्रथेदानी मत्वर्थीयशब्दोदाहरणानि—
ग्रधिकारी (इन्) (त्रि०) ग्रधिकारोऽस्ति ग्रस्य ग्रत इनिठनावितीनि ।
यथा—'प्रथमभवनचारी मृत्युभावाधिकारी' इ० प्र० ग्र० ।
ग्रधिशाली (इन्) (त्रि०) युक्तः, पदान्तेषु क्तवाचकोऽयम् ।
" 'निधनभवनपालो सहोत्थाधिशाली' इ० प्र० प्र० ।
ग्रवलम्बी (इन्) (त्रि०) ग्राश्रितः ।
प्रालेयभानावबलम्बिनि द्युने' इ प्र. का
केन्द्री (इन्) (त्रि०) केन्द्रेऽस्त्यस्मिन् ग्रत इनिठनावित्यनेन मत्वर्थीय इनि ।
" 'यस्याङ्गिनः केन्द्रिणि मन्त्रिणीह' इ० प्र० ।
जु. (प्) (त्रि०) सेवनम् । 'जुषी' प्रीति. सेवनयोः ।
'क्विप् च' इत्यनेन क्विप् । मत्वर्थीय ।
" 'तस्य त्रिकोणजुषि कष्टतमे तदानीम्' इति प्रश्नमार्गे ।
पाली (इन्) (त्रि०) स्वामी । 'पाल' रक्षणे । ग्रत इनिठनावित्यनेन मत्वर्थीय इनिः ।
" 'सुतस्थानपाली रिपुस्थानशाली' इति ।
'निधनभवनपाली सहोत्थाधिशाली इति च प्र० ग्र० ।
भाक् (ज्) (त्रि०) पृथक्करणम् । 'भाज्' पृथक्करणे ।
'मत्वर्थीय. क्विप्, । पदान्ते युक्तवाचकोऽयम् ।
" 'क्षीणोदयभाजि कण्टके सन्निचिते दीक्षणधीस्थले विदीज्ये ।' इति । 'विदि विशोदयभाजि' इति । 'मकरमङ्गल रविजभाजम्' इति च ज्यो० भ० ।

ग्रथवा—

'तुर्ये तिग्मरश्मिसुतभाजि' इति । 'तुर्ये

चान्द्रिभाजि' इ० जं० प० ।

अथवा—

'भानुजन्मनि मृगोदयभाजि इ० ग्रं० का०

यायी (इन्) (त्रि०) १ यातः, २ सग्रामे अग्रगामी आक्रमणकारी ।

" काव्य पातालयायी' इ० जा० ल० ।

'मदनपतिद्यूनयायी' इ० जं० प० ।

'राहुवक्त्रे स्थिते सूर्ये चन्द्रे हृदयसंस्थिते । यायिनो विजयस्तत्र' इ० न० ज० ।

युक् (ज्) (त्रि०) योग । 'युजिर्' योगे । 'ऋत्विग्दधृक्स्रगित्यादिना 'क्विन्' 'मत्वर्थीय' ।'

" 'आरयुजि व्यये' इति । 'वागधीशयुजिव्यये इ० जं० प० ।

अथवा—

'अन्त्ये गिरीशयुजि विद्युजिभाग्ये' इ० ग्रं० का० ।

योगी (इन्) (त्रि०) योगयुक्तः । योगोऽस्यास्ति । 'अत इनठनावितीनि. ।

" 'तुर्य्ये रुधिरयोगिनि' इ० जं० प० ।

अथवा—

'मेदिनीतनययोगिनि युग्मे' इ० ग्र० का०

विहारी (इन्) (त्रि०) विहारकर्त्ता । 'मत्वर्थीय इनि ।'

" स्वाद्यकातसलिलभे गुरुभृग्वोर्दृष्टियोगयुजि सौधविहारी ।' इ० जं० प० ।

सयोगी (इन्) (त्रि०) सयोगविशिष्ट. । यथा—'सयोगिनीहास्तगृहे भृगोर्जने' इ० ग्र०

ससर्गी (इन्) (त्रि०) ससर्गविशिष्ट., २ सङ्गी 'मत्वर्थीय इनिः ।

" 'खलससर्गिणि भावे' इ० जं० प० ।

सङ्गी (इन्) (त्रि०) सक्तः, सङ्गविशिष्टः

" 'पद्मिनीरमणसङ्गिनि तुर्ये' इति । 'द्वादशेऽर्कशिखिसङ्गिनि ।

'तुर्ये केतुसङ्गिनि' इति च जं० प० ।

अथवा—

'रोहिणीरमणसङ्गिनि शौर्य्ये' इति ग्र० ।

सम्पर्की (इन्) (त्रि०) सम्पर्कविशिष्ट. ।

" 'सम्पर्किणि द्यूनगृहे दिवाविभोः' इ ग्रं. ।

सम्बन्धी (इन्) (त्रि०) सम्बन्धविशिष्ट., गुणवान्, सयुक् ।

" 'चन्द्रोविलग्नसम्बन्धी वाहनेशसमन्वितः ।' इ० जा० पा० ।

स्थायी (इन्) (त्रि०) पश्चात्क्षेत्रगामी, पश्चाद्वादकारी, स्थायी पौरसज्ञो वा राजा ।

" 'राहुवक्त्रे स्थितेसूर्ये चन्द्रे हृदयसंस्थिते । यायिनो विजयस्तत्र स्थायिनो भङ्ग आहवे ।' इ० न० ज० ।

स्पृक् (श्) (त्रि०) सस्पर्शनम् । 'स्पृश' सस्पर्शने ।

'स्पर्शोऽनुदके क्विन्' 'मत्वर्थीयः ।

" 'मदनस्पृशि चावनेये' इ. ज्यो म० ।

अथवा—

यदा द्वितीयस्पृशि भूकुमारे' इ. ग्रं. का. ।

अथ सम्प्रति 'णिनि' प्रत्ययान्तशब्दोदाहरणानि—

आलम्बी (इन्) (त्रि०) आश्रयी । आलम्बितु शीलमस्यास्ति इति णिनि ।

„ 'धनधाम्नि निजोच्चराशिगद्युचरालम्बिनि' इ० जै० प० ।

गामी (इन्) (त्रि०) गमनशील । 'गम्लृ' गतौ ।

'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन णिनि ।

„ 'कलशगामिनि पङ्कजिनीपितौ' इ जा भ ।

अथवा—

पुवत्तिगामिनि शीतलरोचिषि' इ प्र का ।

चारी (इन) (त्रि०) चरणशील । 'चर' गतिभक्षणयो 'सुप्यजातौणिनिस्ताच्छील्ये' इत्यनेन णिनि ।

„ 'प्रथमभवनचारी मृत्युभावाधिकारी' इ प्र प्र ।

अथवा—

'चण्डांशुमाली मृतिभावचारी' इ प्र का ।

निवासी (इन्) (त्रि०) निवसनशील । निवसति तच्छील । वस० णिनि ।

„ 'मेदिनीतनयभागनिवासी' इ प्र प्र ।

अथवा—

'अथ निवासिनि सोमगृहाशके इ प्र का ।

वर्त्ती(इन्) (त्रि०)वर्तिष्णु ।वर्तनशील । 'अलङ्कृञिति 'इष्णुच्' ।

„ 'सराजमन्त्री कुलमानवर्ती सहसमूमङ्गलला-भभाव ।' इति ।

'कलशवर्तिनि योऽनुभुवि व्रजेत् । इति च ज्यो० भ० ।

अथवा—

'काये सकाव्ये नृपवर्तिनीन्दौ' इ प्र का ।

वासी (इन्) (त्रि०) वसनशील । 'वस' निवासे ।

'सुप्यजातौ णिनिस्ताच्छील्ये' इत्यनेन णिनि ।

यथा—'वधूभवासिनि क्षपाधिनायके इ प्र का ।

शाली (इन्) (त्रि०) शोभायमान • शालते ।

'शाल' कत्थने । ताच्छील्ये णिनि पदान्ते युक्तवाचकोऽयम् ।

„ 'सुतस्थानपाली रिपुस्थानशाली इ प्र प्र ।

अथवा—

'कलत्रशाली सकुज कलाप ' इ प्र का ।

अथेदानी सहसमासजशब्दोदाहरणानि—

साधिकार (त्रि०) अधिकारसहित ।

'अधिकारेण स्वाच्चादिस्वामित्वेन सहित । 'सहस्य स सज्ञायाम् इत्यनेन 'स इत्यस्य पूर्वनिपात ।

„ सहोदरे भास्वति साधिकारे इति । 'तुङ्गादिवर्गे किमु साधिकारे वित्तेऽञ्चिते इति च प्र का ।

सधन (पु०) घनेन लग्नेन सहित ।

समद „ मदेन सप्तमेन सहित ।

ससुख „ सुखेन चतुर्थेन सहित ।

, 'सघन कविसूनुरुदयमे समदो राजसुतो यदातदा । ससुखो गुरुरालयाश्रयात्' इति ज्यो भ ।

तत्रैव—

ससौम्यराज्यश्च सभास्वदायः सपूज्यकेन्द्रः ससितोदयश्चेत्' इति. ज्यो. भ.।

'सराजमंत्री कुलमानवर्ती सहंसभूमङ्गललाभभावः' इति. ज्यो. भः। 'भूपविशेषभुजा सयमासृजा' इति. ज्यो. भः। 'करिकरेऽसृजि पूर्णि सलेयभे' इति. ज्यो. भ.।

'सवित्कविरिहाह्वयानकाले' इ. ज्यो. भ.।

'समन्दमृगोदये' इति. ज्यो. भ.।

'सविदि भीरुघने कविमानगे' इति च ज्यो. भ.।

अथवा—

'सरस्वतीशे ससरस्वतीशे' इ. प्र. का.।

अथाधुना दृष्टिपर्यायोदाहरणानि—

आलोकः (पुं०) दर्शनम्।

„ 'निशाकरालोकगतेऽस्तगे रवौ' इति।

आलोकनम् (नं०) ईक्षणम्।

„ 'आलोकनाप्ते विधिगे क्षपाकरे' इति।

आलोचनम् (न०) दर्शनम्।

„ 'आलोचनेतेऽस्तगते महीसुते।' इति।

ईक्षणम् (न०) दृष्टिः।

„ 'मन्देक्षणेन सहिते मदमन्दिरे नुः' इति।

ईक्षा (स्त्री०) दृक्।

„ 'ईक्षागुरोर्बलवती कथिताऽतिशस्ता नो सा शुभा भवति भास्करनन्दनस्य।' इ. प्र.।

दर्शनम् (न०) दृष्टिः।

„ 'सहोदरे भास्करिदर्शनान्विते' इति।

दृक् (श्) (स्त्री०) ईक्षा।

„ 'पञ्चत्वगेहे पविपाणिपूज्ये दृशासमेते बलिवन्दितस्य।' इति।

दृशिः (स्त्री०) दृष्टिः।

„ 'शशाङ्कदृश्या सहिते स्वगे शनौ' इति।

दृष्टिः (स्त्री०) दर्शनम्।

„ 'भार्यानिकेतं भृगुदृष्टियुक्तं नरस्य पाणिग्रहणंत्ववश्यम् इति।

द्योतनम् (न०) वीक्षणम्।

„ दिवाकरद्योतनगेऽर्थभेगुरौ' इति।

निध्यानम् (न०) दर्शनम्।

„ महीजनिध्यानमितेऽस्तभावे' इति।

निभालनम् (न०) वीक्षणम्।

„ स्मरे कुजे काव्यनिभालनंगते' इति।

निर्वर्णनम् (न०) दृष्टिः।

„ 'निर्वर्णनेते धिषणस्य भार्गवे' इति।

निशमनम् (न०) दृक्।

„ 'कल्याणे सकवौ गुरोर्निशमनंयाते महीनन्दने' इति।

निशामनम् (न०) दृष्टिः।

„ 'सूरेर्निशामनमिते तनये तमीशे' इति च प्र. का.।

अथेदानीं दृष्टपर्यायोदाहरणानि—

अवलोकितः (त्रि०) ईक्षितः।

यथा—'रस्थे हिमांशाववलोकितेऽह्निना' इ. प्र.।

आलोकितः (त्रि०) दृष्टः।

„ 'आलोकितेऽखिलसर्गजननोदये नुः' इ. प्र.

ईक्षितः (त्रि०) विलोकितः।

„ 'यदि हरौ हरिणो गुरुदेक्षितो' इ. प्र. का.

निरीक्षितः (त्रि०) दृष्टः।

„ 'षष्ठेशेन निरीक्षिते मृतपतौ आरेण सन्नायते' इ. जा. पा.।

परिलोकितः (त्रि०) दृष्टः।
" 'विधौ विधिस्थे परिलोकिते विदा' इ. प्र.
परीक्षितः (त्रि०) दृष्टः
" 'कलेवरेशे कलुषं परीक्षिते' इ. प्र. का.।
प्रदृष्टः (त्रि०) प्रेक्षितः।
" 'सतैः प्रदृष्टे सतराशियाते' इ. प्र. का.।
प्रेक्षितः (त्रि०) दृष्टः।
" 'वियस्वता प्रेक्षित अक्षनाथे' इ. प्र. का.।
प्रोद्वीक्षितः (त्रि०) दृष्टः
" 'प्रोद्वीक्षिते पङ्कजिनीप्रियेण' इ. प्र. का.।
लोकितः (त्रि०) ईक्षितः।
" 'वित्तेशरस्थे बुधगुरुविधुभिर्लोकिते लोकवन्द्यो' इ. प्र. का.।
विलोकितः (त्रि०) अवलोकितः।
" 'कल्याणकायभवनेशविलोकितो वा' इ. प्र.
संवीक्षितः (त्रि०) समीक्षित।
" 'संवीक्षितेऽखिलदृशा यदि लोकवन्द्यो लाकम्पृणेन वृषभेण सभार्गवेण। इ. प्र.।
सन्दृष्टः (त्रि०) अवलोकित.।
" 'सन्दृष्टो हरपतिना हरी हरिस्थो' इ. प्र.।
समालोकितः (त्रि०) दृष्टः।
" 'समालोकितसौरिणा सौम्यभावे' इ. प्र.।
समीक्षितः (त्रि०) समालोकित।
" 'सता गृहे शुभग्रहैः समन्विते समीक्षिते' इ.
अथाधुना दृष्टिदृष्टवाचकप्रकीर्णशब्दोदाहरणानि—
दत्तनेत्रः (त्रि०) दत्तदृष्टिः।
" 'सुतालयदत्तनेत्र' इ जै प।
दृष्टदेहः (त्रि०) दृष्टमूर्तिः।
" 'रविदृष्टदेहः' इ. जै. प.।
दृष्टमूर्तिः (त्रि०) दृष्टशरीरः।
" 'बृहस्पतिर्भौमगृहेऽष्टमस्थः सूर्येन्दुभौमार्कजदृष्टमूर्तिः। इ. स. चि.।
दृष्टशरीरः (त्रि०) दृष्टदेहः।
" 'प्रसवतनोर्यदि पापनभोगः पञ्चमगो रिपुदृष्टशरीरः।' इ. मु. चि.।
दृष्टिघटितः (त्रि०) ईक्षणघटितः।
" 'शुक्रदृष्टिघटिते रसवादी' इ जै. प.।
दृष्टिशुद्धः (त्रि०) दृक्शुद्धः।
" 'हतदृष्टिशुद्ध.।' 'पापदृष्टिरहित इत्यर्थः। इ. जै. प.।
प्रेक्षणता (स्त्री०) वीक्षणता।
यथा—'कलानिधिप्रेक्षणता प्रयाते' इ. जै. प.।
प्रेक्षणत्वम् (न०) वीक्षणत्वम्।
" 'छायासुतप्रेक्षणत्वं प्रयातः' इ. जै. प.।
अथ साम्प्रत युतीक्षणवाचकशब्दोदाहरणानि—
ईक्षान्वयवान् (मतुबन्तः) (त्रि०) दृग्योगवान्।
" 'मान्दो वेश्मस्थे तत्पतौक्षान्वयवति' इ प्र.
दर्शनयोगः (पु०) दृष्टियोगः।
" 'मन्दराहुकृतदर्शनयोगे' इति।
युतिदृक् (श्)(स्त्री०) योगदर्शनम्।
" 'विमलयुतिदृशा' सद्योगदृष्ट्या इत्यर्थः। इति।
युतिवीक्षणम् (न०) योगदृक्।
" 'अर्कजीवयुतिवीक्षणसत्त्वे' इति च जै. प।
युतीक्षणम् (न०) योगवीक्षणम्।
" 'सौख्यालये सौम्ययुतीक्षणे यदि' इ. प्र.।

" 'पापाभ्रसयोगमृतेऽमृतांशौ' इ प्र का ।

विना (अ०) हिरुक् ।

द्वयाप्ता प्रस्तमिते विना शनिसितौ' इ जा. पा

हिरुक् (अ०) विना ।

" 'हेलि हिरुग् हिमकराद् द्रविणे व्यये च'

अथ साम्प्रत वर्जितवाचकशब्दोदाहरणानि—

उज्झित (त्रि०) वर्जित ।

" 'अथो, बलोज्झिते लोचनपे त्रिके वा'

ऊन (त्रि०) हीन ।

" 'कोलेक्षिते तद्गृहहेतुनाऽर्योनो दु ख तप्त '

ऊनित (त्रि०) वर्जित. ।

" 'वीर्योनिते भवपवे' इ प्र का ।

च्युत (त्रि०) रहित ।

" नीचोनो भगणच्च्युत. षडधिकश्चेत्षड्-हृदौच्च बलम्' इ जा प. ।

अथवा—

" 'स्वोच्चोनितो दिविचरो रसभात्प्रपुष्टश्च-क्राच्च्युत कृतलव सपुराणभक्त ।' इति मुकुन्दपद्धतौ ।

मुक्तम् (त्रि०) रहितम् ।

" 'नीचारिपापगगनाटनदृष्टिमुक्ते' इ. जा पा

वर्जित (त्रि०) रहित, परित्यक्त ।

" 'द्रष्ट्रा वर्जितदृश्यकस्य गुरुणा' इ जा. प.

वर्ज्य (त्रि०) वर्जनीय ।

" 'योगाप्तिवर्ज्यमितरान् क्षपयन्ति भावान् पापा ' इ वि मा ।

वि (अ०) विगत ।

यथा—'सहजपापनिरीक्षितचन्द्रमा विगुभदृग् जननी-मरणप्रद ।' इत्यु० मा० ।

विमुक्त (त्रि०) रहित ।

" 'दशाक्षिकाणोऽमलदृग्विमुक्ते' इ प्र का ।

वियुक्त (त्रि०) वियुत ।

" 'मन्नन्दुवागीशदृशा वियुक्ते' इ प्र. का ।

वियुत (त्रि०) वियुक्त ।

" 'प्रथो सोऽग्र सोमे व्यय उदयपे वीर्यवियुते'

विवर्जित (त्रि०) विरहित ।

" 'सद्वीनमभ्रस्थल माहेयेन विवर्जित यदि तदा' इ प्र. का ।

विशोध्यम् (त्रि०) विश्लेष्यम् ।

" 'दोस्त्रिभोन, त्रिभोर्ध्वविशोध्य रसं.' इ प्र सा. २।१

विश्लेष्यम् (त्रि०) विशोध्यम् ।

" 'रात्रे शेषमित युत दिनदलेनाऽह्लोगत शेषक विश्लेष्य खलु पूर्वपश्चिमनतम्' इ जा प. १।२

वीत (त्रि०) विरहित ।

" 'स्वाज्ञार्यहितपा. । त्रिकेऽस्ते वीतोर्ज्जा' 'वीतोर्ज्जा बलविरहिता इत्यर्थ ।' इ प्र.

अथेदानीमन्तरवाचकशब्दोदाहरणानि—

अन्तरम् (न०) शोध्यशोधकयोरवशिष्टम्, वैशेष्यम् ।

" 'वृत्तस्य मध्य किल केन्द्रमुक्त केन्द्र प्रहो-च्चान्तरमुच्यतेऽत्र । यतोऽन्तरे तावति तुङ्गदेशाच्छीघ्रोच्चवृत्तस्य सदैव केन्द्रम् ॥' इ. सि. शि ।

विवरम् (न०) अन्तरम् ।

, 'ज्या प्रोज्झ्य शेष तत्त्वाश्विहृत तद्विवरो-द्धृतम्' इ सू सि ।

वीक्षणसमागम (पु०) ईक्षान्वय ।

„ 'सौम्यवीक्षणसमागमसत्वे' इ जं प ।

अथ सम्प्रति दृष्ट्वा वाचकाव्ययशब्दोदाहरणानि–

अवेक्ष्य (अ०) आलोक्य ।

„ विधोर्बलमवेक्ष्य वा दलनकण्डक गृहाङ्गणम्' इ मु चि ।

आलोक्य (अ०) दृष्ट्वा ।

„ 'आलोक्य वक्रो नृविलग्नग शनि शिशो श्मशाने जनन करोति हि ।' इ प्र का ।

दृष्ट्वा (अ०) विलोक्य ।

„ 'दृष्ट्वोदयस्थ दनुजार्च्चित मत्स्यमनी विधत्ते विगद विश यदि ।' इ प्र का ।

प्रेक्ष्य (अ०) दृष्ट्वा ।

„ मूलग्नग प्रेक्ष्य कुज श्मशाने' मन्दमित्यनुवर्त्तते । इ वृ जा ।

विलोक्य (अ०) आलोक्य ।

„ तत्रारिष्ट तथा चेष्ट विलोक्य प्रवल वदेत्' इ श्लो श ।

सन्दृश्य (अ०) दृष्ट्वा ।

„ सन्दृश्य काव्य स्मरग सुरेज्य करोति लब्धि द्रुतमङ्गनाया ।' इ प्र का ।

समीक्ष्य (अ०) आलोक्य ।

„ निधनगो विधीश्वर स्वकीयमन्दिर यदा । समीक्ष्य मानवेश्वर कराति' इ प्र का ।

अथाधुना मध्यपर्यायोदाहरणानि—

अन्त (र्) (अ०) मध्य ।

„ अन्त यदिन्यशुभयोर्मृगगे पतङ्गे' इ वृ जा

अन्तरम् (न०) मध्य ।

„ 'सदन्तरे व्योम्नि सुधाकरान्विते' इ प्र

अन्तरा (अ०) मध्य ।

„ 'अन्तराऽसृजि सौम्यखेटयो ' इ प्र का ।

अन्तरालम् (न०) अभ्यन्तरम ।

„ 'किंवार्कचन्द्रावसदन्तराले' इ प्र का ।

अन्तरालकम् (न०) अभ्यन्तरम् ।

यथा—'सदन्तरालके तुषाररोचिषि' इ प्र का ।

अभ्यन्तरम् (न०) अन्तरालम् ।

„ 'अभ्यन्तरे कलमपखेटयो कलेट' इ प्र का

मध्य (पु० न०) अन्तरम् ।

„ 'मध्येऽसता पुष्करवासिना शशी' इ प्र का

अथाधुना मध्यगतपर्यायोदाहरणानि—

अन्तरगत (त्रि०) मध्यगत ।

„ 'शुक्र खलान्तरगत सखल सितांद्रा' इ अथवा—

'अरौ शुभान्तरगते भवपे' इ प्र का ।

अन्तर्गत (त्रि०) मध्यगत ।

„ "अन्तर्गते शोभनयो शशाके इ प्र का ।

मध्यग (त्रि०) अन्तर्गत ।

„ 'चतुष्टयेऽस्यो शुभमध्यगेऽब्जे' इ प्र का ।

मध्यगत (त्रि०) मध्ययात ।

„ 'सौम्यमध्यगतेऽथवा' 'शुभयोरन्तर्गत' इत्यर्थ जा पा ।

मध्ययात (त्रि०) मध्यगत ।

„ लाभालय तदधिपेऽमलमध्ययाते इ प्र

अथेदानी विनार्थवाचकाव्ययशब्दोदाहृणानि–

अन्तरेण (अ०) विना ।

„ 'शुभदृष्टिमन्तरेण' शुभदृष्टि विनेत्यर्थ । ज प ।

ऋते (अ०) विना

यार्त्तववती मृगपौष्णवायुहस्ताश्विधातृभिरर लभते च गर्भम् ।' इति मु० चि० ।

'इष्' इच्छायाम् (इच्छा करना, चाहना) ।

(तुदादौ) परस्मैपदे—(स०) ।

लटि—इच्छति, इच्छत , इच्छन्ति ।

यथा—'यवना' ने-च्छन्ति' केचित्तथा' इ वृ जा । वि० लि०—इच्छेत्, इच्छेताम्, इच्छेयु ।

भावे—इष्यते । यथा—'जलराशौ विलग्नस्थे दूर नौयानमिष्यते' इ० वि० मा० । 'मासोत्तर तत्र विवाह इष्यते' इ० मु० चि० ।

'वाछि' इच्छायाम्(इच्छा करना, चाहना) ।

(भ्वादौ) परस्मैपदे—(स०) ।

लटि—वाञ्छति, वाञ्छत , वाञ्छन्ति । यथा—होरेत्यहोरात्रविकल्परूपे 'वाञ्छन्ति' पूर्वापरवर्णलोपात् ।, इ० वृ० जा० । वि० लि०—वाञ्छेत्, वाञ्छेताम्, वाञ्छेयु ।

'वश्' कान्तौ । 'कान्तिरिच्छा (चाहना, इच्छा करना) ।

(अदादौ) परस्मैपदे)—(स०) ।

लटि—वष्टि, उष्ट , उशन्ति । यथा—'ऐन्दव बलमुशन्ति किं न ते' इति वि० वृ० ।

वा

'स्त्रीणा विधोर्बलमुशन्ति' विवाहगर्भसस्कारयो' इ० मु० चि० । वि० लि०—वश्यात्, उश्याताम्, उश्यु ।

'लगे' सङ्गे (सङ्ग करना, लगना) ।

(भ्वादौ) परस्मैपदे (अ०) ।

भावे=लग्यत, क्तप्रत्यये लग्नम् । लटि—लगति, लगत., लगन्ति । वि लि.—लगेत्, लगेताम्, लगेयु

'लघि' भोजननिवृत्तावपि (भोजन न करना) ।

(भ्वादौ) आत्मनेपदे ।

लटि—लघते, लघेते, लघन्ते । वि० लि०—लंघेत, लघेयाताम्, लंघेरन् ।

'वदि' अभिवादनस्तुत्यो (प्रणाम करना, प्रशसा करना, स्तुति करना) ।

(भ्वादौ) आत्मनेपदे—(स०) ।

लटि—(प्र पु ) वन्दते, वन्देते, वन्दन्ते । (म पु) वन्दसे, वन्देथे, वन्दध्वे । (उ पु ) वन्दे, वन्दावहे, वन्दामहे । यथा—'ज्योतिर्विदकमलावबोधनविधौ वन्दे पर भास्करम् ।' इति सि० शि० । वि. लि वन्देत, वन्देयाताम्, वन्देरन् ।

'शसु' स्तुतौ (प्रशसा करना) ।

(भ्वादौ) परस्मैपदे—(स०) ।

लटि—शसति, शसत , शसन्ति । यथा—'स्वर्णाद्यमन्नाशने, शसन्त्येषु नवेषु' इति वि० मा० । वि० लि० शसेत्, शसेताम्, शसेयु ।

'कृष्' विलेखने । विलेखनमाकर्षणम् (खीचना) ।

(भ्वादौ) परस्मैपदे (स०)

लटि—कर्षति, कर्षत , कर्षन्ति । वि लि —कर्षेत, कर्षेताम्, कर्षेयु । यथा—'रिष्ट कर्षति पूर्णेन्दु.' इ

'षेवृ' सेवने (सेवा करना, भजन करना) ।

(भ्वादौ) (आत्मनेपदे (स०)

लटि—सेवते, सेवेते, सेवन्ते । वि लि सेवेत, सेवेयाताम्, सेवेरन् । यथा— पष्ठचष्टमीभूतविधुक्षयेषु नो 'सेवेत' ना तैलपलेक्षुर रतम् ।' इ मु चि ।

'प्रच्छ्' ज्ञीप्सायाम् (पूछना, प्रश्न करना) ।

(तुदादौ) परस्मैपदे (स०) ।

लटि—पृच्छति, पृच्छत , पृच्छन्ति । वि लि —पृच्छेत्,

पृच्छेताम्, पृच्छेयु.।
'शीङ्' स्वप्ने (सोना)।

(अदादौ) परस्मैपदे (अ०)

लटि–शेते, शयाते, शेरते। वि.लि.–शयीत, शयीयाताम्, शयीरन्। भावे–शय्यते। 'णिजि'–शाययति–ते।
'पत्लृ' पतने गतौ वा (गिरना, जाना)।

(भ्वादौ) परस्मैपदे (अ०)

लटि—पतति, पततः, पतन्ति। वि. लि–पतेत्, पतेताम् पतेयुः। यथा—'अस्त्र पतेःमङ्गलभङ्गलक्ष्म' इ वि. वृ।
'स्मृ' स्मरणे (चिन्तायाम्) (चिन्ता करना, ध्यान करना)।

(भ्वादौ) परस्मैपदे (स०)

लटि–स्मरति, स्मरतः, स्मरन्ति। यथा–'नक्तञ्चते चापररात्रमेषामेतत्पर वासवमस्मरन्ति' इ वि
लोटि–(प्र. पु) स्मरतु स्मरतात्। स्मरताम्। स्मरन्तु। (म पु) स्मर स्मरतात्। स्मरतम्। स्मरत। (उ पु.) स्मराणि, स्मराव, स्मराम। यथा—'स्मर' राम करण च विष्णुरूपम्' इ अ ला. १।२ वि लि.—स्मरेत्, स्मरेताम्, स्मरेयुः।
'षिधु' संराद्धौ। संराद्धिः=निष्पत्तिः (सिद्ध होना पूर्ण हो जाना)।

(दिवादौ) परस्मैपदे (अ०)

लटि—सिद्ध्यति, सिद्ध्यतः, सिद्ध्यन्ति। यथा—'प्रारब्ध 'सिद्ध्यति' सदा' इ. वि. मा.। वि लि–सिद्ध्येत्, सिद्ध्येताम्, सिद्ध्येयु।
'फल' निष्पत्तौ (सफल होना, कामसिद्ध होना, परिणाम निकलना)।

(भ्वादौ) परस्मैपदे (अ०)

लटि–फलति, फलत, फलन्ति। वि. लि.—फलेत्, फलेताम्, फलेयुः। यथा—फलेद्यदि प्राक्तनमेव तत्किम्' इ. वि. वृ.।
'वृङ्' सम्भक्तौ वरणे च (स्वीकार करना, वरण करना)।

(क्र्यादौ) आत्मनेपदे (स०)

लटि—वृणीते, वृणाते, वृणते। वि. लि—वृणीत, वृणीयाताम्, वृणीरन्।
'वृञ्' वरणे (वरण करना, चुनना, वरना)

(स्वादौ) परस्मैपदे–(स०)

लटि–वृणोति, वृणुतः, वृण्वन्ति। वि लि–वृणुयात्, वृणुयाताम्, वृणुयुः। यथा—'उल्लिख्य सामुद्रिकलक्षणानि वरः कुमारी वृणुयान्निमित्तैः।' इ वि.वृ.
'क्षि' क्षये (अकर्मकः) (नाश करना) (अन्तर्भाविण्यर्थस्तु सकर्मक)।

(चुरादौ) आत्मनेपदे (अ० स०)

लटि–क्षीयते, क्षीयेते, क्षीयन्ते। यथा–'क्षीयन्ते' व्ययभवनादसत्तु वामम्' इ वृ. जा.। वि.लि.–क्षीयेत, क्षीयेयाताम्, क्षीयेरन्।
'णश' अदर्शने (नष्ट होना, न दिखलाई पड़ना)।

(दिवादौ) परस्मैपदे (अ०)

लटि–नश्यति, नश्यत, नश्यन्ति। यथा—यदि न पश्यति नश्यति तत्कृतम्' इ वि. वृ.। वि. लि–नश्येत्, नश्येताम्, नश्येयु। यथा–'क्रूरस्य नश्येद्बलरूपसम्पद्' इ. वि वृ.।
'वि+णश' अदर्शने (नष्ट होना)।

(दिवादौ) परस्मैपदे (अ०)

लटि—विनश्यति, विनश्यत, विनश्यन्ति। यथा—'त्यक्तो 'विनश्यति' कुजार्कजयोस्तथाये। इ वृ जा। वि लि—विनश्येत्, विनश्येताम्, विनश्येयु।

'वि+पद्' आपत्तौ (विपत्ति में फसना)।

(दिवादौ) आत्मनेपदे (स० अ०)

लटि—विपद्यते, विपद्येते विपद्यन्ते। यथा—'नारी गर्भयुता विपद्यते' इ वृ जा। वि लि.—विपद्येत, विपद्ययाताम्, विपद्येरन्।

'पीड' अवगाहने (पीडा देना दबाना)।

(चुरादौ) परस्मैपदे (स०)

लटि—पीडयति, पीडयत, पीडयन्ति। वि. लि—पीडयेत्, पीडयेताम्, पीडयेयु।

आत्मनेपदे

लटि—पीडयते, पीडयेने, पीडयन्ते। वि लि—पीडयेत, पीडयेयाताम्, पीडयेरन्। भावे—पीड्यते।

'रुजो' भङ्गे (पीडित होना, रोगी होना)।

(तुदादौ) परस्मैपदे—(अ० स०)।

लटि—रुजति, रुजत, रुजन्ति। वि० लि०—रुजेत्, रुजेताम्, रुजेयु।

'ज्वर्' रोगे (ज्वर आना)।

(भ्वादौ) परस्मैपदे—(अ०)।

लटि—ज्वरति ज्वरत, ज्वरन्ति। वि० लि०—ज्वरेत्, ज्वरेताम्, ज्वरेयु।

व्यय्' भयसञ्चलनयो (डरना, दुखी होना)।

(भ्वादौ) आत्मनेपदे—(अ०)।

लटि—व्ययते, व्ययेते, व्ययन्ते,। वि० लि०—व्यथेत, व्यथेयाताम्, व्यथेरन्।

मीङ्' हिंसायाम् हिंसात्र प्राणवियोगः (हिंसा करना)।

(दिवादौ) आत्मनेपदे—(स०)।

लटि—मीयते, मीयेते, मीयन्ते। यथा—'जीवेत्त्वापि विभङ्गरिष्टजशिशू रिष्टं विना मीयते' इति जा० प०।४०। वि० लि० मीयेत, मीयेयाताम्, मीयेरन्।

'मृङ्' प्राणत्यागे (मरना)।

(तुदादौ) आत्मनेपदे—(अ०)।

लटि—म्रियते म्रियेते, म्रियन्ते। वि० लि०—म्रियेत, म्रियेयाताम् म्रियेरन्।

'जीव' प्राणधारणे (जीना)।

(भ्वादौ) परस्मैपदे (अ०)।

लटि—जीवति, जीवत, जीवन्ति। यथा—'ज्येष्ठासमीरोरगरौद्रपूर्वानयेषु नो जीवति' जातरोग।' इ० वि० मा०। वि० लि०—जीवेत्, जीवेताम्, जीवेयु। यथा—'जीवेत्त्वापि विभङ्गरिष्टजशिशू रिष्ट इ० जा० प० ४०।

'क्षिप' प्रेरणे (फेंकना)।

(तुदादौ) परस्मैपदे (स०)।

लटि—क्षिपति, क्षिपत, क्षिपन्ति। यथा—'क्षिपति' सप्तदिनान्युदयास्तयो. सुरगुरुश्च भृगुश्च' इ० वि० वृ०। वि० लि०—क्षिपेत, क्षिपेताम्, क्षिपेयु।

आत्मनेपदे

लटि—क्षिपते, क्षिपेते, क्षिपेन्ते, वि० लि०—क्षिपेत, क्षिपेयाताम्, क्षिपेरन।

'क्षप प्रेरणे (प्रेरणा करना)।

(चुरादौ) परस्मैपद (स०)।

लटि—क्षपयति, क्षपयत क्षपयन्ति। यथा—योधा-

प्तिवज्र्यमितरान् क्षपयन्ति भावान इ वि मा।
वि० लि०—क्षपयेत् क्षपयेताम्, क्षपयेयु।
'खनु' अवदारणे (खोदना)।
(भ्वादौ) आत्मनेपदे (स०)।
लटि—खनते, खनेते, खनन्ते। वि० लि०—खनेत, खनेयाताम्, खनेरन्।
परस्मैपदे
लटि—खनति खनत, खनन्ति। यथा—अशुभ-शुकमख स खनत्यसून् इ वि व,। वि० लि०—खनेत, खनेताम्, खनेयु।
भिदिर्' विदारणे (भेदन करना)।
(रुधादौ) आत्मपदे (स०)।
लटि—भिन्ते भिन्दाते भिन्दते। वि० लि०—भिन्दीत, भिन्दीयाताम भिन्दीरन्।
परस्मैपदे
लटि—(प्र पु) भिनत्ति भिन्त भिन्दन्ति। (म पु) भिनत्सि भित्थ भित्थ। (उ पु) भिनद्मि, भिन्द्व, भिन्द्म। यथा—'कभशकदमसौ भिनत्यसृक शनिरुद्धरश्चेज्जनक्षय' इति। पुष्टा-श्चेतत्त्क्षय त च भि द्म।' इति च प्र ला।
जि जये (उत्कर्षप्राप्ति, श्रेष्ठ बनना)।
(भ्वादौ) परस्मैपदे (अ०)
लटि—जयति जयत, जयन्ति,। यथा—'जयति, शास्त्रमिद यवनेष्वपि।' इ वि व०।
वा—
'अवनीकृता 'जयति' केवशब्द्धतिरच।' इ प्र ला १।१
'वि+जि' विजये (उत्कर्ष प्राप्ति)।

(भ्वादौ) आत्मनेपदे (अ०)।
लटि—विजयते, विजयेते, विजयन्ते। 'प्राय शुक्लगो, युतौ विजयते याम्योत्तराशास्थित इ० वि० लि० विजयेत, विजयेयाताम् विजयेरन्।
'लस श्लेषणक्रीडनयो, (आलिङ्गन करना, चिपटना, खेलना)।
(भ्वादौ) परस्मैपदे—(अ० स०)
लटि—लसति, लसत, लसन्ति, वि० लि०—लसेत् लसेताम्, लसेयु।
'वि+लस' " " "
(भ्वादौ) परस्मैपदे—(अ० स०)।
लटि—विलसति, विलसत, विलसन्ति। लोटि—विलसतु विलसतात। विलसताम्। विलसन्तु। यथा—किमपरै रुधिरबिन्दुवपुर्विलसन्तु ये' इ वि० व०। वि० लि०—विलसेत् विलसेताम्, विलसेयु।
'क्रीड़ क्रीडने (खेलना)।
(भ्वादौ) आत्मनेपदे—(अकर्मक)।
लटि—क्रीडते, क्रीडेते, क्रीडन्ते। यथा—पद्मिन्या चाप्दमाश स्वनवमसहित क्रीडते सानुराग, इ ली व। वि० लि० क्रीडेत, क्रीडेयाताम्, क्रीडेरन्।
परस्मैपदे—
लटि—क्रीडति, क्रीडत, क्रीडन्ति। वि० लि० क्रीडेत, क्रीडेताम, क्रीडेयु।
'सह मर्षणे (सहना)।
(भ्वादौ) आत्मनेपदे—(स०)।
लटि—सहते, सहेते, सहन्ते, यथा—'प्रायो

विवाहपटलं तटलम्बमान. सावस्तृणो न 'सहते' इति वि. वृ.। वि० लि० सहेत, सहेयाताम्, सहेरन्।

'अञ्जू' व्यक्तिम्रक्षणकान्तिगतिषु (व्यक्त करना, चिकना, इच्छा करना, जाना)।

(रुधादौ) परस्मैपदे—(स० अ०)।

लटि—अनक्ति, अङ्क्तः, अञ्जन्ति। वि० लि० अञ्ज्यात् अञ्ज्याताम् अञ्ज्युः।

'वि+अञ्जू' व्यक्तिम्रक्षणकान्तिगतिषु (व्यक्त करना)।

लटि—व्यनक्ति, व्यङ्क्तः, व्यञ्जन्ति। यथा—'सन्धौ खेटो नि.फलोभावभार्ग-स्तुल्यः सम्यग्भावपक्ति व्यनक्ति। भावपक्तिः भावफल व्यनक्ति प्रथ्यति स्वपाक स्वफल' इति नि० वृ०। वि० लि० व्यञ्ज्यात्, व्यञ्ज्याताम्, व्यञ्ज्युः।

'अभि+वि+अजि' (चुरादौ) परस्मैपदे—(अकर्मक)।

लटि—अभिव्यञ्जयति, अभिव्यञ्जयतः, अभिव्यञ्जयन्ति। यथा—'सर्वेऽभिव्यञ्जयन्ति' स्वदशामवाप्य' इ वृ. जा। वि० लि० अभिव्यञ्जयेत, अभिव्यञ्जयेताम्, अभिव्यञ्जयेयु।

आत्मनेपदे—

लटि—अभिव्यञ्जयते, अभिव्यञ्जयेते, अभिव्यञ्जयन्ते। वि० लि० अभिव्यञ्जयेत, अभिव्यञ्जयेयाताम्, अभिव्यञ्जयेरन्।

'प्र+आ+रभ' राभस्ये (आरम्भ करना)।

(भ्वादौ) आत्मनेपदे—(स०)।

लटि—(प्र० पु०) प्रारभते, प्रारभेते, प्रारभन्ते। यथा–'शशाङ्ककुजयोर्लग्ने स्ववर्गस्थयोर्युद्धं 'प्रारभते' इति वि. मा.। लटि—(म० पु०) प्रारभसे, प्रारभेथे, प्रारभध्वे। (उ० पु०) प्रारभे, प्रारभावहे, प्रारभामहे। यथा—स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं 'प्रारभे' इति वृ. जा।१।१। वि० लि० प्रारभेत, प्रारभेयाताम्, प्रारभेरन्।

'लघि' आप्यायने क्रमणे च (सन्तुष्ट करना, लघना)।

(चुरादौ) परस्मैपदे—(स०)।

लटि—लघयति, लघयतः, लघयन्ति। वि० लि० लघयेत्, लघयेताम्, लघयेयुः। यथा—'वायव्यानलकोणगोऽस्ति परिघो याता न तं 'लघयेत्', इ. वि. मा.।

'मुच' प्रमोदने, मोचने च (हर्षित होना, छोड़ना)।

(चुरादौ) परस्मैपदे—(स०)।

लटि—मोचयति, मोचयतः, मोचयन्ति। यथा—'विधुमष्टमपष्ठमूर्ति यन्मोचयन्ति तदयम् इ. वि. वृ.। वि लि. मोचयेत्, मोचयेताम्, मोचयेयु.।

आत्मनेपदे—

लटि—मोचयते, मोचयेते, मोचयन्ते। वि. लि. मोचयेत, मोचयेयाताम्, मोचयेरन्।

'मुच्लृ' मोक्षणे (छोड़ना)।

(तुदादौ) परस्मैपदे—(स०)।

लटि—मुञ्चति, मुञ्चतः, मुञ्चन्ति। वि० लि० मुञ्चेत् मुञ्चेताम्, मुञ्चेयुः।

आत्मनेपदे—

लटि—मुञ्चते, मुञ्चेते, मुञ्चन्ते। वि० लि०

मुञ्चेत, मुञ्चेयाताम्, मुञ्चेरन् ।

'वि+स्तृञ्' आच्छादने (ढांकना, घेरना, आच्छादन करना) ।

(क्र्यादौ) परस्मैपदे—(स०) ।

लटि—'विस्तृणाति, विस्तृणीतः, विस्तृणन्ति । यथा—'तेनानन्द वरायोविस्तृणाति' इति वि. वृ. । विस्तृणाति=विस्तारयति णिजन्तर्भावः । वि लि० विस्तृणीयात्, विस्तृणीयाताम् विस्तृणीयुः ।

आत्मनेपदे—

लटि—विस्तृणीते, विस्तृणाते, विस्तृणते । वि० लि० विस्तृणीत, विस्तृणीयाताम्, विस्तृणीरन् ।

णम—प्रह्वत्वे=शिरसा नतौ, शब्दे च (शिर से प्रणाम करना, शब्द करना) ।

भ्वादौ, परस्मैपदे, (स०) ।

लटि—नमति, नमतः, नमन्ति । वि० लि० नमेत्, नमेताम्, नमेयुः ।

'उप+नम' उपनमने, प्रणाम करना ।

(भ्वादौ) परस्मैपदे—(स०)

लटि—उपनमति, उपनमतः, उपनमन्ति । यथा—एव नरा नरदकाणनयादुभिः पुंसेचरं 'उपनमन्ति' नितम्बिनीनाम् ।' इति वि. वृ. । वि०लि० उपनमेत्, उपनमेताम् उपनमेयुः ।

'परि+नम' परिणमने परिपाक को प्राप्त) ।

(भ्वादौ) परस्मैपदे—(स०)

लटि—परिणमति, परिणमतः, परिणमन्ति । यथा—परिणमति=परिपाकं प्राप्नोति । वि० लि०—परिणमेत्, परिणमेताम्, परिणमेयुः ।

'प्र+णम' प्रह्वत्वे शब्दे च (प्रणाम करना, शब्द करना) ।

(भ्वादौ) परस्मैपदे—(स०)

लटि—प्रणमति, प्रणमतः, प्रणमन्ति । वि० लि०—प्रणमेत्, प्रणमेताम् प्रणमेयुः ।

शुष् शोषणे (सूखना) ।

(दिवादौ) परस्मैपदे—(अ०) ।

लटि—'शुष्यति, शुष्यतः, शुष्यन्ति । यथा—'उरः पुरः शुष्यति यस्य चार्द्रम्, इ. वि. वृ. । वि० लि०—शुष्येत् शुष्येताम्, शुष्येयुः ।

'जागृ' निद्राक्षये (जागना) ।

(अदादौ) परस्मैपदे—(अ०) ।

लटि—जागर्ति, जागृतः, जाग्रति । यथा—'प्राशिष्यमाणो दिवि दक्षिणस्यां जागर्ति' इति वि. वृ. । जागर्ति=प्रबुध्यति यानेऽधिकृतः । वि० लि० जागृयात्, जागृयाताम्, जागृयुः ।

'ध्वन' शब्दे (शब्द करना) ।

(भ्वादौ) परस्मैपदे—(स०) ।

लटि—ध्वनति, ध्वनतः, ध्वनन्ति । यथा—'सवरथो. सविता यदि कारणं 'ध्वनति' ना नितरां यरनाध्वनिः ।' इति वि वृ । लटि—ध्वनयति, ध्वनयतः, ध्वनयन्ति, यथा-ध्वानयति, ध्वानयतः, ध्वानयन्ति । वि० लि० ध्वनेत्, ध्वनेताम्, ध्वनेयु । ध्वनयेत्, ध्वनयेताम्, ध्वनयेयु, यथा ध्वानयेत्, ध्वानयेताम्, ध्वानयेयु ।

तनु विस्तारे (फैलाना, तनना) ।

(तनादौ) आत्मनेपदे—(स०) ।

लटि—तनुते, तन्वाते, तन्वते, । यथा—'तनुगा

यदि तत्तनुते वधू' इति वि० वृ०। वि० लि० तन्वीत, तन्वीयाताम् तन्वीरन्।

परस्मैपदे—

लटि—तनोति, तनुत, तन्वन्ति,। यथा—'प्रयोग निहृत्यैव सिद्धितनोति' इ मु चि । वि० लि० तनुयात तनुयाताम्, तनुयु,।

'आ+तनु'

(तनादौ) परस्मैपदे (स०)।

लटि—आतनोति, आतनुत, आतन्वन्ति,। यथा—'मुहूर्तचिन्तामणिमातनोति'। इ० मु चि० ११२ वि० लि० आतनुयात्, आतनुयाताम्, आतनुयु,।

'हु' दानादनयो (देना, खाना)।

(जुहोत्यादौ) परस्मैपदे (स०)

लटि—जुहोति, जुहुत, जुह्वति,। वि० लि० जुहुयात, जुहुयाताम्, जुहुयु,।

'मुष स्तेये (चोरी करना)

(क्र्यादौ) परस्मैपदे (स०)।

लटि—मुष्णाति, मुष्णीत, मुष्णन्ति,। वि० लि० मुष्णीयात्, मुष्णीयाताम्, मुष्णीयु,।

'चुर स्तेये (चोरी करना)।

(चुरादौ) परस्मैपदे (स०)।

लटि—चोरयति, चोरयत, चोरयन्ति,। वि० लि० चोरयेत्, चोरयेताम् चोरयेयु,

'आत्मनेपदे—

लटि—चोरयते, चोरयते, चोरयते। वि० लि० चोरयेत्, चोरयेयाताम्, चोरयेरन्।

'अव' रक्षणगतिकान्त्यादिषु (रक्षण, गमन, इच्छा प्रभृति)।

(भ्वादौ) परस्मैपदे (स० अ०)।

लटि—अवति, अवत, अवन्ति,। वि० लि० अवेत् अवेताम् अवेयु,।

'पा' रक्षणे (रक्षा करना)।

(अदादौ) परस्मैपदे (स०)।

लटि—पाति, पात, पान्ति। वि० लि० पायात्, पायाताम्, पायु।

'भा' दीप्तौ (शोभित होना)

(अदादौ) परस्मैपदे (अ०)।

लटि—भाति, भात, भान्ति। वि० लि० भायात्, भायाताम् भायु,।

'वा' गतिगन्धनयो (जाना और बताना)

(अदादौ) परस्मैपदे (अ०)

लटि—वाति, वात, वान्ति,। वि० लि० वायात् वायाताम्, वायु,।

'णह बन्धने (बाधना)।

(दिवादौ) परस्मैपदे (स० अ०)।

लटि—नह्यति नह्यत नह्यन्ति। वि० लि० नह्येत्, नह्येताम्, नह्येयु।

आत्मनेपदे

लटि—नह्यते, नह्येते नह्यन्ते। वि० लि० नह्येत, नह्येयाताम्, नह्येरन्,।

'शुच शोके (शोक करना, सोचना)।

(भ्वादौ) परस्मैपदे (अ० स०)

लटि—शोचति, शोचत, शोचन्ति,। वि० लि० शोचेत्, शोचेताम् शोचेयु,।

'मुद हर्षे (हर्षित होना)।

देवमातृप०—अदिति, ऋनामा, शेषस्तु रवौ । स्वर्गप०—अमर्त्यभवनम् अवरोह, ऊर्ध्वलोक, खम्, गौ (गो), तविष, ताविष, त्रिदशालय, त्रिदशावास, त्रिदिव, त्रिपिष्टपम् (न०) त्रिविष्टपम्(न)दिदिवि, दिवम्, द्यौ (दिव) दीदिवि, देवलोक, देवसद्मा(अन्), द्यु (अ०), द्यो (द्यो), नभ (अस्), नाक, फलोदय, भुवि (इस्) (अ०), भोगभूमि, मन्दर, मेरुपृष्ठम् मेरुशृङ्ग, वासवावास, शक्रभवनम्, सुरसद्मा (अन) सुरालय, सुरावास, सुराश्रय, सैरिक, सैरिभ, सौरिक, स्व (र्) (अ०), स्वग, स्वर्लोक, इति ।

मेरुप०—कनकाचल, कर्णिकाचल, कर्णिकाद्रि, काञ्चनगिरि, गोधुक् (ह्), देवगिरि, मणि सानु, महामेरु, मरु, रत्नसानु, सुमेरु, सुरा लय, स्वर्गिगिरि, स्वर्गिरि, स्वर्णाद्रि, हेमाद्रि ॥

देवविमानपर्याया -देवयानम् विमान (पु० न०), व्योमयानम् सुरयानम् ।

सभाप०—आस्या, आस्थानम्, आस्थानी, गोष्ठी, घटा, परिषद्, पर्षद्, सद (स्), (स्त्री० न०), ससद् सभा, समाज, समिति ।

देवसभाप०—देवसभा, सुधर्मा, सुरसभा ।

देवनदीप०—मन्दाकिनी, वियद्गङ्गा, सुरदीर्घिका, स्वर्णदी ।

देवतरुभेदा-(१) कल्पवृक्ष, (२) पारिजातक, (३) मन्दार, (४) सन्तान, (५) हरिचन्दन, (पु० न०), चैते पञ्च देवतरव सन्ति ।

देवो (दिव्यो) द्यानपर्याया —चैत्ररथम्, देवोद्यानम, मिश्रकम्, वैभ्राजम्, सिध्रकावणम् ।

देववैद्यप०—अब्धिजौ, अकृजौ, अश्विनीकुमारौ, अश्विनीपुत्रौ अश्विनीसुतौ, अश्विनौ, आश्विनेयौ, आश्विनौ, गदागदौ, गदान्तकौ, दस्रौ, देवचिकित्सकौ, देवभिषजौ देववैद्यौ, नासत्यौ, नासिक्यौ पुष्करस्रजौ, प्रवरवाहनौ, यज्ञवहौ, यमलौ, यमौ, युग्मौ, रासभवाहनौ, वडवासुतौ, वरवाहनौ, वरानाकौ, वाडवेयौ, सुरचिकित्सकौ, स्ववैद्यौ ।

वैद्यप०—अगदङ्कार, आयुर्वेदक, आयुर्वेदिक, आयुर्वेदी (इन), चिकित्सक, दोषज्ञ, भिषक् (ज्) रोगहारी (इन्), वैद्य ।

देववर्द्धकिप०--अमरशिल्पी (इन्), त्वष्टा (ष्टृ), देववर्द्धकि, द्युवर्द्धकि, भौमन, विश्वकर्मा (अन), विश्वकृत् (त), सुरशिल्पी (इन) ।

वर्द्धकिप०—काष्ठतट् (क्ष), तक्षा (मन्), त्वष्टा (ष्टृ) रथकार, रथकृत् (त), वर्द्धकि, स्थपति ।

ऋषिप०—ऋषि मन्त्रद्रष्टा (ष्टृ), मुनि, मौन व्रती (इन्) मौनी (इन), रिषि (हलादिश्च), ( विद्याविदग्धमतयो रिषय प्रसिद्धा ' इति प्रयोगात्) वाचयम, व्रती (इन), शसितव्रत, शापास्त्र, सत्यवचा, (अस्) ।

ऋषिभेदा —(१) ब्रह्मर्षि (वसिष्ठाद्या), (२) देवर्षि (कचादय), (३) महर्षि (व्यासादय), (४) परमर्षि (भेलाद्या), (५) काण्डर्षि (जैमिन्याद्या), (६) श्रुतर्षि (सुश्रु-

तार्क्ष्य, (७) राजर्षि (ऋतुपर्णादय चैते ऋषीणां सप्तभेदा सन्ति ।

सुरर्षिभेदा —(१) नारद, (२) पर्वत, (३) भरत, (४) देवत, (५) कच, (६) तुम्बुरु इत्यादय ।

नारदपर्याय —कपिवक्त्र कलहप्रिय, कलिकारक, देवब्रह्मा (ब्रन्), देवल, नारद पिशुन, विधातृभू ।

सप्तर्षिभेदा —(१) मरीचि, (२) अत्रि, (३) पुलह, (४) पुलस्त्य, (५) क्रतु, (६) अङ्गिरा (अस), (७) वशिष्ठश्चैते सप्तर्षीणां भेदा सन्ति ।

सप्तर्षिपत्नीभेदा —(१) सम्भूति, (२) अनसूया, (३) क्षमा, (४) प्रीति, (५) सन्नति, (६) लज्जा, (७) अरुन्धती, चैता मरीचे क्रमात्सप्तर्षीणां पत्न्या सन्ति ।

ब्रह्मर्षिभेदा —(१) मरीचि, (२) अत्रि, (३) अङ्गिरा (अस्), (४) पुलस्त्य (५) पुलह, (६) क्रतु, (७) भृगु, (८) दक्ष, (९) वसिष्ठश्चेत्यादय ।

वशिष्ठपर्याया —अक्षमालाजानि, अरुन्धतीजानि, वशिष्ठ, वसिष्ठ ।

वशिष्ठपत्नी०—अक्षमाला अरुन्धती ।

ज्योतिष्कदेवनाम—ज्योतिष्का ।

ज्योतिष्कदेवभेदा —(१) चन्द्र, (२) अर्क, (३) ग्रहा, (४) नक्षत्राणि, (५) तारकाश्चेत्येते ज्योतिष्कदेवानां पञ्चभेदा सन्ति ।

देवपथपर्याया —छायापथ, छायामार्ग, देवपथ, देवमार्ग, नभ सरित् (त्), सुराध्वा (अन्) सोमधारा ।

'छायापथो नाम ज्योतिश्चक्रमध्यवर्ती कश्चित्तिरश्चीनोऽवकाश इति मल्लिनाथ । 'देवैरचिताऽदिभिगमयितृत्वेनाधिकृतत्वलक्षित पन्था देवपथ उच्यते । देवानापन्था ।

वनपर्याया —अटवी (स्त्री०), अरण्यम्, कक्ष, काननम्, कान्तारम, गहनम्, भाग, दव, दाव, वनम् वाक्षम, विपिनम् षण्डम्, सत्रम् ।

उपवनप०—अपवनम्, आराम, उपवनम्, वेलम् ।

उद्यानप०—आक्रीड, उद्यानम ।

बाह्यारामप०—पौरक, बाह्याराम ।

गृहारामप०—गृहाराम, निष्कुट ।

राजक्रीडोद्यानप०—प्रमदवनम् ।

पुष्पवाटीप०—पुष्पवाटिका, पुष्पवाटी, वृक्षवाटिका, वृक्षवाटी ।

क्षुद्रारामप०—क्षुद्राराम, प्रसीदिका ।

वृक्षप०—तरु, द्रुमं वृक्ष शाखी शेषस्तु वास्तुविचारे ।

सरोवरप०—कासार, तटाक, तडाक, तडाग । पद्माकर, सर (अस) (न०), सरसम्, सरसी (स्त्री०), सरोवर ।

अल्पसरोवरप०—वल्ल, पल्वल, वेशन्त ।

अगस्त्यपर्याया —अगस्ति, अगस्त्य, आग्निमारुत, आग्नेय, इल्वलारि, उदयन, पौनेय, कलशीसुत, कुम्भभव कुम्भयोनि, कुम्भसम्भव, क्वाथि, घटज, घटोद्भव, घटोद्भवमुनि,

तपन, दक्षिणर्षि, दक्षिणारति, दण्डयाम, दीक्षाग्नि, पीताब्धि, मानसूनु मान्य, मुनि, मैत्रावरुण –णि, वातापिद्विट् (ष), वारुणि, *विन्ध्यकूटक सत्याग्नि, सुरारिहन्ता (न्त)*,

अगस्त्यपत्नीप०—कौषातकी, लोपामुद्रा, वरदा, वरप्रदा, वैदर्भी।

अगस्त्यपुत्रभेदौ–(१) इध्मवाह (२) दृढच्युत्।

अगस्त्यदिक्—अराची दक्षिणा।

अगस्त्योदयास्तप०—अगस्त्यदर्शन, अगस्त्यदृश्य, *अगस्त्योदय । अगस्त्यलोप, अगस्त्यास्त ।*

तदुक्तं गणेशेन—

'पलभाष्टवधोनसयुता गजशैला वसुखेचरा लवा। इह तावति भास्करे क्रमाद् घटजोऽस्त मुदयं च गच्छति ॥ इति ग्रहलाघवे।

ध्रुवप०—उत्तानपादज, औत्तानपाद —दि, ग्रहाधार, ग्रहाश्रय, ज्योतीरथ, ध्रुव, नक्षत्रनेमि, मुनीतितनय।

ध्रुवमातृप०—सुनीति।

ध्रुवपितृप०—उत्तानपाद। *

*ध्रुवदिक्प० उत्तरा।

उत्पत्तिवाचकशब्दा —उत्थ, उत्पत्ति, उत्पन्न, उद्भव, उद्भूत ज, जननम्, जनि –नी, जनित, जनु जनु (उष) जनू, जन्मम् जन्म (अन्), जन्यम्, ज यु, जात, जातक, जाति, परिभूति, प्रजननम् प्रजात –क प्रभव, प्रसव, प्रसूत—ति, भव भाव, भू, भूत मज्जा—त –क, समुत्पन्न, समुद्भव, समुद्भूत सम्भव, सम्भूत, सू, सूत—ति।

१–२८

प्राणिवाचकप०—कलेवरी (इन), चेतन, जन, जनिमान् (मतु०), जनुष्मान (मतु०), जन्तु, जन्मवान् (मतु०), जन्मी (इन), जन्यु, जात-*जन्मा (अन्), जायमान, तनुभृत् (त), देहभृत् (त)*, देही (इन्), प्राणभृत् (त्), प्राणी (इन्), भवी (इन्), शरीरी (इन)।

मनुष्यपर्यायाः—कान्त, चेतन, दीर्घप्रेक्षी (इन्), द्विपाद, ना (नृ), पिशितेक्षण, भूमिज, भूस्थ, भूस्पृक् (श), मनुज, मनुजनि, मनुभव, मनुष्य, मनूद्भव, मर्त्य, मानव, मानुष, वक्ता (क्तृ), विट् (श्), शतायु (उष्), प ।

पुरुषपर्यायाः—नर, ना(नृ), पञ्चजन, पुमान् (पुं स्), पुरुष, पूरुष।

देवधेनुप०—कामधेनु, कामधुक् (ह), देवधेनु, स्वर्गी।

नन्दिनीप०—कामधेनुपुत्री, नन्दिनी, वशिष्ठधेनु।

गोप०—अघ्न्या अनडुही, अनुडवाही, अर्जुनी, उषा, उस्रा, गौ (गो), तम्या, तम्बा, तवा, निलिम्पिका, माता (तृ), माहा माहेयी, रोहिणी, शृङ्गिणी, सुरभि, सौरभेयी।

देवाहारप०—अमृतम्, देवभोज्यम, देवान्ध (अस्) (न०) देवान्नम, देवाहार, पीयूषम्, पेयूषम, समुद्रनवनीतम् सुधा।

आहारप०—अदनम् अभ्यवहार, अवष्वाण, अशनम्, आहार, खादनम्, घासि (पु०), जग्धि (स्त्री०), जक्षणम् जमनम्, जवनम् निघस, न्याद, प्रत्यवसानम्, प्सातम्, भक्षणम्, भोजनम्, लेह, वल्भनम्, विष्वाण, स्वदनम्।

२९–५६

खादनीयद्रव्यभेदा—(१) चोष्य (त्रि०) (२) भक्ष्य (त्रि०), (३) भोज्यम् (४) लेह्यम्, चैते खाद्यद्रव्यस्य चत्वारो भेदा सन्ति।

दैत्यपर्यायाः—असुर, दैतेय, दैत्य। शेषस्तु शुक्रे दानवप० दनुज, दानव, शेषस्तु शेषे।

शत्रुप० अप्रिय, अभिघाती (इन), अभिजिघांसु, अभिभव, अभिमति, अभिमाति, अभियाति, अभियाती (इन्), अमित्र अमित्रक, अराति, अरि, असहनः असुहृत् (द्), अहित घातक, जिघांसु जिगांसु, दस्यु, दुर्हृत् (द्), द्विषन् (त्), द्विट् (ष्), द्वेषण द्वेषी (इन्), द्वेष्य, पर, परिपन्थक, परिपन्थी (इन्), पर्य्यवस्थाता (तृ), प्रतिपक्ष, प्रत्यनीक, प्रत्यर्थी, प्रत्यवस्थाता (तृ) भ्रातृव्य, रिपु, विद्विष, विद्विट् (ष्), विद्वेषी (इन्), विपक्ष—क, विरोधी (इन्), वैरी (इन्), शत्रु, शात्रव, सापत्न, हिंसक, हिंसन।

कामादिशत्रुभेदा—(१) काम, (२) क्रोध, (३) लोभ, (४) मद (५) मोह, (६) मत्सरश्चैते कामादय षट् शत्रव सन्ति।

वैरपर्याया—द्वेषणः विरोध, विद्वेष, वैरम्, शत्रुता, सपत्नता।

यज्ञपर्याया—अध्वर अभिषव, आहव, इज्या, इष्टम् इष्टि, क्रतु, धर्म्म, धृति, प्रयाग बर्हि (ष्), मख, मन्यु, मह, मेध, मेन यज, यज्ञ, याग, वसुन, वितानम्, विश्वहर्यत, विष्णु, सस्तर, संस्था, सत्रम्, सप्ततन्तु, सव, सवनम्, सहसानु, सानु, स्तोम, हव, हवनम्, होम।

यज्ञभेदाः—(१) अग्निष्टुद्यज्ञ (२) अग्निष्टोम०, (३) अग्निहोत्र०, (४) अतिरात्र० अश्वमेध०, (६) अष्टकपालेष्टि०, (७) आग्रायण०, (८) इष्टाकृत०, (९) इष्टापूर्त०, (१०) इष्टिकर्म०, (११) गोमेध०, (१२) चातुर्मास्य०, (१३) द्वादशाह०, (१४) पौर्णमास० (१५) दर्श०, (१६) नरमेध०, (१७) पुण्डरीक०, (१८) राजसूय०, (१९) वाजपेय०, (२०) विश्वजित्०, (२१) सर्वमेध०, (२२) साद्यस्क०, (२३) सारस्वत०, (२४) सोमयाग, (२५) सौत्रामणियज्ञ, (२६) शिवयाग, (२७) विष्णुयाग, इत्यादयो यज्ञभेदा स्यु।

अग्निपर्याया—अग्नि, अनल, कृशानु, पावक, शेषस्त्वग्नौ।

मुखप० आननम्, आस्यम्, वनम्, घनोत्तमम्, चरम्, तुण्डम्, तेरम, दन्तालय, दशनगृहम्, द्विजालय, मुखम्, लपनम्, वक्त्रम्, वदनम्, स्नेहरसनम्।

पूजितप० अञ्चितम्, अपचायितम्, अपचितम्, अर्चितम्, अर्हितम्, नमसितम्, नमस्यितम्, पूजितम्, महितम्।

योनिप० कारणम्, योनि, योनी।

हव्यप०—दैवान्नम्, सान्नाय्यम्, हवनीयम्, हवि, (ष्), हव्यम्, होतव्यद्रव्यम होमीयद्रव्यम्।

धान्यप० अद्यम्, अन्नम् भोगार्हम्, भोग्यम्, भोज्यम्, धान्यम्, व्रीहि, सस्यम्, सीत्यम् स्तम्बकरि।

यदुक्तं स्मृतौ—

शस्य क्षेत्रगत प्राहु, सतुष धान्यमुच्यते।

ग्राम वितुषमित्युक्तं स्विन्नमन्न मुदाहृतम् ॥
इति शा० चि० । २१५३१

धान्यभेदाः—(१) व्रीहि, (२) यव, (३) मसूर, (४) गोधूम, (५) मुद्ग, (६) माषः (७) तिल, (८) चणक, (९) अणु (चीनाकः), (१०) प्रियङ्गु, (११) कोद्रव, (१२) मकुष्ठक, (१३) कलाय (१४) कुलत्थ, (१५) षष्टिक, (१६) सर्षप (१७) अतसी, (१८) श्यामाकश्चैते धान्यानामष्टादश भेदाः सन्ति ।

व्रीहिपर्यायाः—अन्नम्, धान्यम्, भोगार्ह, व्रीहि, 'धान' 'साठी' इति च भाषा ।

तण्डुलप०—तण्डुल, (पु०), धान्यसार (पु०), 'चाउर' इति, 'चावल' इति च भाषा ।

तिलपर्याया—तिल पापघ्न, पितृतर्पणम्, होमधान्यम् 'तिल' इति भाषा

यवप०—तीक्ष्णशूक, यव, हयप्रिय, 'जौ' इति भाषा ।

गोधूमप०—गोधूम, सुमन, । 'गेहूँ' इति भाषा ।

चणकप०—चणक हरिमन्थक, 'चना' 'छोला' इति च भाषा ।

अतसीप०—अतसी, उमा, क्षुमा, । 'अलसी' इति भाषा ।

माषप० नन्दी (इन्), बली (इन्) मदन, माष, बीजवर, वृष्य, । 'उडद' इति भषा ।

तुवरीप०—आढकी, तुवरी, वर्णा । 'अरहर' 'तूअर' इति च भाषा ।

मुद्गप०—अयन, वलाट, मुद्ग, लोम्य, हरि, हरित, 'मूंग' इति भाषा ।

१–२८

मसूरप०—मङ्गल्यक, मसूर, । 'मसूर' इति भाषा ।

कलायप० कलायः, खण्डिक, त्रिपुट, सतीनकः, सातीन, हरेणु, । 'मटर' इति भाषा ।

सर्षपप० कदम्बकः, तन्तुभ, सर्षप, । 'सरसो' इति भाषा ।

श्वेतसर्षपप० श्वेतसर्षप, सिद्धार्थ, । 'सफेद सरसो' इतिभाषा ।

कङ्गनीप०—कगु, कगुनी, क्वङ्गु, पीततण्डुला प्रियङ्गु । काकुणी, इति भाषा ।

कोद्रवप०—उद्दल, काद्रव, कोद्रव, कोरदूषक, । 'कोदो' इति भाषा ।

यवनालप०—जूर्णह्वय, जोन्नाला, देवधान्यम्, बीजपुष्पिका, यवनाल, योनल । 'जुवार' इति भाषा ।

कुलत्थप०—कालवृन्त, कुलत्थ, 'कुलथ' इति भाषा ।

कर्पासीप०—कर्पासी, कार्पासी, तूला, वदरा, वदरी, समुद्रान्ता, । 'कपास का पेड' इति भाषा ।

कर्पासफलप०—कर्पासफलम्, कार्पासम्, कार्पासास्थि, वदर, विनौला' कपासिआ' 'वाडवा' इति च भाषा ।

कर्पासप०—कर्पास, कार्पास—क, कर्पासी, कर्पासिका, कार्पासी, तुण्डिकेरी, पिचव्य, वदरा, वादर वस्त्रयोनि । 'कपास' इति भाषा ।

कार्पासतूलप०—कार्पासतूल, तुल, तूल, तूलकम्, तूलपिचु, निर्बीजकार्पास, पिचु, पिचुतूल, । 'रुई' इति भाषा ।

२९–५६

**गुडप०**—इक्षुपाकः, इक्षुरसक्वाथः, गुडः। 'गुड' इति भाषा।

**शर्कराप०**—शर्करा, सिता, सितोपला,। 'मिश्री' इति भाषा।

**खण्डप०**—खण्डः, मधुधूलिः, 'खाण्ड' इति भाषा।

**मत्स्यण्डीप०**—फाणितम्, मत्स्यण्डिका, मत्स्यण्डी, मत्स्याण्डिका, मत्स्याण्डी। 'राव' इति भाषा।

**रसालाप०**—मर्जिता मार्जिता, रसाला, शिखरिणी। 'चाटने योग्य पदार्थ 'शिखरन' इति भाषा।

**गृहपर्यायाः**—अगारम्, अधिवासः, अधिवासनम्, अवसथः, आगारम्, आलयः, आवसथः, आवसथ्यः, आवासः, आश्रयः, उटजम्, उदवसितम्, ओकम्, ओकः (अस्) (न०), कुटः, कुटि–टी, कुटीरः, कुलम्, केतनम्, केतरम् क्षयः, गृहम्, गृहाः (पुं० ब०), गेहम्, धामम्, धाम (अन्) (न०), धिष्ण्यम्, निकाय्यः, निकार्यम्, निकेतः, निकेतनम्, निलयः, निवसतिः, निवसनम्, निवासः, निवेशनम्, निशान्तम्, पस्त्यम्, बुदिरम्, भवनम्, मन्दिरम्, मन्दिरा, महाकीर्तनम्, वसति.=ती, वस्तम्, वस्त्यम्, वासः, वास्तु, सिटम्, विशयम्, विश्रामः, वेशः, वेश्म (अन्), शय्यम्, शरणम्, शाला, शिबिरम्, संवासः, सस्त्यायः, सदनम्, सद्म (अन्), सभा, सादनम्, साला, स्थानम्, हर्म्यम्।

**गृहभेदाः**—(१) नन्दावर्त्तः (नन्द्यावर्त), (२) रुचकः, (३) वर्द्धमानः, (४) विच्छन्दक शेषस्तु वास्तुविचारे।

**सुवर्णपर्यायाः**—अग्निः, अग्निबीजम्, अग्निभम्, अग्निवीजम्, अग्निवीर्यम्, अग्निशिखम्, अजरम्, अनलम्, अपिञ्जरम्, अर्जुनम्, अष्टापदम्, आग्नेयम, उज्ज्वलम्, औजसम्, कनकम्, कर्चूरम्, कर्णिकारच्छायम्, कर्णिकाराभम्, कर्बुरम्, कर्वूरम्, कर्वुरम्, कलधौतम, कल्याणम्, काञ्चनम्, कार्तस्वरम्, गाङ्गेयम्, गारुडम्, गैरिकम्, चन्द्रम्, चामीकरम्, चाम्पेयम्, चाम्पेयकम्, चारुरत्नम्, चारुरूपम्, जातरूपम्, जाम्बवम्, जाम्बूनदम्, चारुरूपम्, तपनीयम्, तारजीवनम्, तेजः (अस्) (न०), दाक्षायणम्, दीप्तकम्, दीप्तम्, निष्कम्, पिञ्जानम्, पीतकम्, मर्मम्, मर्म (अन्), भास्करम्, भूत्तमम्, भूरि, भूषणार्हम्, मङ्गल्यम्, मनोहरम्, महारजतम्, रक्तवर्णम्, रजतम्, रत्नवरम्, रुक्मम्, राः (रै), लोभनम्, लोहवरम्, लोहोत्तमम्, वसु, वह्निबीजम्, वह्निवीजम्, वेणुतटजकाञ्चनम्, वेणुतटीभवम्, वैणवम्, शातकुम्भम्, शातकौम्भम्, शिलोद्भवम्, शुक्रम्, शृङ्गारम्, श्रीकेतनम्, श्रीमकुटम्, श्रीमत्कुम्भम्, सुवर्णम्, सौमेरवम्, स्वर्णम्, हाटकम्, हिमम्, हिरण्यम्, हेमम्, हेम (अन्)।

**पर्वतप०**—अगः, अचलः, अद्रिः, अवनिधर, अवनीधरः, अहार्य्य, इलाधर, उर्वङ्ग, उर्वीधरः, ऐरावतः, कटकी (इन्), कन्दराकर, कुकीलः, कुटः, कुट्टार, कुट्टोरः, कुधर, कुध्र, कुलपर्वतः, कुलशैलः, कुलाचल, कुलाद्रिः, क्षितिभृत्, क्ष्माभृत्, गिरि, गोत्र, ग्रावा (अन्), जीमूत., दन्ती (इन्), दर्दुरः, दुर्गम, धर, धरणीकीलक, धरणीध्रः, धराधरः, धातुभृत्, नगः, पर्वतः, पृथुशेखरः, प्रपाती

(इन्), प्रस्थवान् (मतु०), फलिक, बन्धाकि, भाकूट, भूधर, भूध्र, भूभृत् (त्), महीधर, महीध्र, वृक्षवान् (मतु०), व्यश, शिखरी (इन्), शिलोच्चय, शृङ्गवान् (मतु०), शृङ्गी (इन), शैल, सानुमान् (मतु०), स्थावर, स्थिर, एते सर्वे नृलिङ्गा।

हारावल्या वर्षपर्वतभेदा — (१) हिमवान् (मतु०) (२) हेमकूट, (३) निषध, (४) मेरु, (५) चैत्र (६) कर्णी (इन्), (७) शृङ्गी (इन्), एते सप्त वर्षविकृतय, माजकगिरय, स्यु।

ग्रन्थान्तरे तु कुलाचलभेदा — (१) हिमालय, (२) हेमकूट, (३) निषध, (४) नील (५) श्वेत, (६) शृङ्गवान्, (मतु०), (७) माल्यवान्, (मतु०) (८) गन्धमादनम्, एतेऽष्टौ कुलाचलभेदा सन्ति।

विष्णुपुराणे तु कुलपर्वतभेदा — (१) महेन्द्र (माहेन्द्र) (२) शुक्ति (शुक्तिमान्), (३) मलय, (४) ऋक्षक (ऋक्षपर्वत), (५) विन्ध्य, (६) सह्य, (७) पारिया (पा) त्रश्चते सप्तकुलपर्वतभेदा सन्ति।

पूर्वपर्वतपर्याया — उदय, उदयगिरि, उदयपर्वत, उदयाचल, उदयाद्रि, पूर्वपर्वत, पूर्वाद्रि, प्राक्पर्वत।

पश्चिमपर्वतप० — अस्त, अस्तमयाचल अस्ताचल, अस्ताद्रि, चरमाद्रि, पश्चिमपर्वत, पश्चिमाचल।

देवयोनिभेदा — (१) विद्याधर, (२) अप्सरा, (अस), (स्त्री०), (३) यक्ष, (४) रक्ष (अस्) (न०), (५) गन्धर्व, (६) किन्नर, (७) पिशाच, (८) गुह्यक, (९) सिद्ध, (१०) भूतश्चैते देवयोनीना दशभेदा सन्ति।

विद्याधरपर्याया — कामरूपी (इन), खेचर, द्युचर, विद्याधर, सत्ययौवन, स्थिरयौवन।

अप्सर प० — अप्सरा, (अस्) (स्त्री०), अप्सरस (स्त्री० ब०), देवगणिका, रतमदा, रतेमदा, सुदमात्मजा, सुमदात्मजा, सुमदा, सुरस्त्री, स्वर्गस्त्री, स्वर्वधू, स्वर्वेश्या।

हलायुधेऽप्सरसा भेदा — (१) घृताची, (२) मेनका, (३) रम्भा, (४) उर्वशी, (५) तिलोत्तमा, (६) सुकेशी, (७) मञ्जुघोषा, एते सप्ताप्सरसा भेदा।

*अन्यत्र तासा भेदा यथा—*

(१) उर्वशी (२) मेनका, (३) रम्भा, (४) घृताची, (५) पुञ्जिकस्थली, (६) सुकेशी, (७) मञ्जुघोषा, (८) महारङ्गवती, चैते (अष्टौ) भेदा सन्ति।

वह्निपुराणे गणभेदनामाध्याये तु यथा— (१) उर्वशी, (२) मेनका, (३) रम्भा, (४) मिश्रकेशी, (५) अलम्बुषा, (६) विश्वाची, (७) घृताची, (८) पञ्चचूडा, (९) तिलोत्तमा, (१०) भानुमती, (११) अबला, (१२) वर्चा चैते द्वादशभेदा सन्ति।

स्त्रीपर्याया — अनुदरा अबला, जोषा जोषित् (त), जोषिता, नारी, पयोरुहवधू, प्रतीपदर्शिनी मण्डयन्ती, महला, महिला, महिली,

महेला, महेलिका, महेली, मेहला, मेहली, मेहिला, योषित्, योषा, योषिता, रामा, वधू वधूजन, वनिता, वर्णिनी, वशा, वामिता, सीमन्तिनी, स्त्री०।

स्त्रीणां विशेषभेदा – अङ्गना, अञ्चितभ्रू, अनमेक्षणा, एकवासा (अस), एणनयना, कान्ता, कामिनी, कामुका, कुरङ्गनयना, चारुनेत्रा, जनि, जनी, तनु, तन्वङ्गी, तन्वी, तरललोचना, त्रिनता, दर्शिनी, नताङ्गी, नतोदरा, नितम्बिनी, प्रमदा, भाविनी, भीरु, भरु, भीलु, भीलू, मत्तेभगमना, मनोज्ञा, मनोविलासवती, मनोहरा, मानिनी, मृगाक्षी, रत्नभूता, रमणा, रमणी, रममाणा, रामा ललना, ललिता, लीलावती, वामदृक् (श्), वामलोचना, वामाक्षी, विलासिनी, शर्वरी, सिन्दूरतिलका, सुतनु, सुनयना, सुनेत्रा, सुन्दरा, सुन्दराङ्गी, सुन्दरी, सुभ्रू, सुलोचना, सुस्मितास्या, स्मरवती, हरिणेक्षणा।

गुणोत्कृष्टस्त्रीपर्याया — उत्तमा, चारुवर्द्धना, मत्तकाशि (सि) नी, वरवर्णिनी, वरा, वरारोहा, श्यामा।

कोपनशीलस्त्रीप० — कोपना, कोपनी, कोपिनी, क्रोधना, चण्डी, भामिनी।

प्रेमवतीस्त्रीप० — कान्ता, दयिता, प्रणयिनी, प्राणसमा, प्राणेशा, प्राणेश्वरी प्रिया, प्रेमवती, प्रेयसी, प्रेष्ठा, वल्लभा, हृदयेशा, हृदयेश्वरी।

चतुरोन्मत्तस्त्रीप० — वाणिनी।

कुटुम्बिनीप० — कुटुम्बिनी, गृहिणी, पुरन्ध्री, मातृका।

तरुणीस्त्रीप० — चरी, चिरण्टी, तरुणी, तलुनी, दिक्करी, दृष्ट (ढ) रजा, (अस्), धनिका, प्रौढा, मध्यमा, युवति – ती, वयस्था, श्यामा, सुवया (अस्), सुस्तनी।

वेश्याप० — कामलेखा, क्षुद्रा, खगालिका, गणिका, झर्झरा, पणाङ्गना, पण्याङ्गना, भुजिष्या, भोग्या, रूपाजीवा, लञ्जिका, वारमुख्या, वारवधू, वारवाणि – णी, वेश्या, शूला, साधारणस्त्री, स्मरदीपिका।

रज प० — आर्त्तवम्, कुसुमम् पुष्पम्, रज (अस्), स्त्रीकुसुमम्, स्त्रीधर्म, स्त्रीपुष्पम्, स्त्रीप्रसूनम्, स्त्रीसुमम्।

गर्भधारणयोग्यकालप० — ऋतु (पु०), षोडशदिनान्तर्गतः काल।

ऋतुमतीप० — अधि, अवि – वी, आत्रेयी, मार्तण्डवती, उदक्या, ऋतुमती, पांसुला, पुष्पवती, पुष्पिता, मलिना – नी, म्लाना, रजस्वला, रजोवती, स्त्रीधर्मिणी।

यक्षप० — यक्ष, शेषस्तु कुबेरे।

रक्ष प० — (रक्ष) शेषस्तु निर्ऋतौ।

गन्धर्वप० — गन्धर्व, शेषस्तु कुबेरे।

किन्नरप० — किन्नर, " "।

पिशाचप० — पिशाच, शेषस्तु निर्ऋतौ।

गुह्यकप० — गुह्यक, शेषस्तु कुबेरे।

सिद्धप० — सिद्ध, देवयोनिविशेष।

सिद्धभेदा — (१) सनक (२) सनन्दन, (३) सनातन (४) सनत्कुमार, इत्येते चत्वारस्सिद्धा सन्ति।

सनत्कुमारपर्याया—आयुर्वेदसंहिताकारः वैधात्रः, सनत्कुमारः, सनात्कुमारः।

सिद्धानां चतुर्विंशतिभेदा अपि सन्ति ते तु ग्रन्थान्तरे द्रष्टव्याः।

जिनप०—अधीश्वरः, अनेकान्तवादी (इन्), अभयदः, अर्हन् (त्), आप्तः, केवली (इन्), क्षीणाष्टकर्मा (अन्), जगत्प्रभुः, जिनः, जिनेश्वरः, तीर्थकरः, तीर्थङ्करः, त्रिकालवित् (द्), देवाधिदेवः, परमेष्ठी (इन्), पारगतः, पुरुषोत्तमः, बोधिदः, भगवान् (मतु०), वीतरागः, शम्भुः सर्वज्ञः, सर्वदर्शी (इन्), सर्वीयः, सार्वः, स्याद्वादी (इन्), स्वयम्भू.।

जिनभेदाः—(१) ऋषभः, (२) अजितः, (३) शम्भवः, (४) अभिनन्दनः, (५) सुमतिः, (६) पद्मप्रभः, (७) सुपार्श्वः, (८) चन्द्रप्रभः, (९) सुविधिः, (१०) शीतल, (११) श्रेयांसः, (१२) वासुपूज्यः, (१३) विमलः, (१४) अनन्तः, (१५) धर्म्म, (१६) शान्तिः (१७) कुन्थुः, (१८) अरः, (१९) मल्लिः, (२०) मुनिसुव्रतः, (२१) नमिः, (२२) नेमिः, (२३) पार्श्वः, (२४) वीर, श्चेत्येते जिनाना चतुर्विंशतिभेदाः सन्ति।

भूतपर्यायाः—बालग्रहः, भूतः (पुं० न०), भूतापुत्रः, रुद्रानुचरः, शिवपार्श्वगः।

गणदेवताभेदाः—(१) रुद्राः (११), (२) वसवः (८), (३) आदित्याः (१२), (४) विश्वेदेवाः (१०, १३), (५) साध्याः (१२), (६) मरुद्गणाः (४९), (७) तुषिताः (३६), (८) आभास्वराः (६४), (९), म (मा) हाराजिकाः (२२०,२३६), (१०) वैकुण्ठाः (१४), (१२) सुशर्म्माणः (१०)।

तदुक्तं शेषनाममालायां (परिशिष्टे) (५,६,७, । ३५३-४) 'द्वादशार्का, वसवोऽष्टौ, विश्वेदेवास्त्रयोदश।'

षट्त्रिंशत्तुषिताश्चैव, षष्टिराभस्वरा अपि॥
षट्त्रिंशदधिके माहाराजिकाश्च शते उभे।
रुद्रा एकादश,—कोनपञ्चाशद्वायवो, ऽपरे॥
चतुर्दश तु वैकुण्ठाः, सुशर्म्माणः पुनर्दश।
साध्याश्च द्वादशेत्याद्या, विज्ञेया, गणदेवताः॥'

इति।

रुद्रभेदाः—(मात्स्ये)—(१) अजैकपादहिर्बुध्नः, (२) विरूपाक्षः, (३) रैवतः, (४) हरः, (५) बहुरूपः, (६) त्र्यम्बकः, (७) सुरेश्वरः, (८)-सावित्रः, (९) जयन्तः, (१०) पिनाकी (इन्), (११) अपराजित—श्चैते रुद्रस्यैकादशभेदाः सन्ति।

तद्भेदाः—(केशवे तु)—(१) अजैकपात् (द्), (२) अहिर्बुध्न्यः, (३) पिनाकी (इन्), (४) अपराजितः, (५) कपर्दी (इन्), (६)-भुवनाधीशः, (७) भगः (वः), (८) स्थाणुः, (९), वृषाकपिः, (१०) गिरिशः, (११) वीरभद्र-श्चेत्येते रुद्रस्यैकादशभेदा. सन्ति।

वसुभेदाः—(भरतमते) (१) धरः, (२) ध्रुवः, (३) सोमः, (४) विष्णुः, (५) अनिलः, (६) अनलः, (७) प्रत्यूषः, (८) प्रभासश्चैतेऽष्टौ, वसवः सन्ति।

तद्भेदाः— (महाभारते तु) (१) आपः, (२) ध्रुवः, (३) सोमः, (४) धरः, (५) अनिलः, (६) अनलः, (७) प्रत्यूषः, (८) प्रभासश्चेतेऽष्टौ वसवः सन्ति ।

आदित्यभेदाः— विष्णुः, यमः, शेषस्तु रवौ ।

विश्वेदेवभेदाः—(१) क्रतुः, (२) दक्षः, (३) वसुः, (४) सत्यः, (५) कामः, (६) कालः, (७) ध्वनिः (धृतिः), (८) रोचकः (कुरुः), (९) माद्रवाः (अस्), (१०) पुरुरवाः (अस्), इत्येते विश्वेदेवानां दशभेदाः सन्ति ।

मतान्तरे तु—

'दृष्टिश्राद्धे क्रतू दक्षौ सत्यौ नान्दीमुखे वसू । सापिण्ड्यके कामकालौ तीर्थे च धूरिलोचनौ ॥ पुरुरवार्द्रवौ चेतौ पार्वणे समुदाहृतौ । हेमश्राद्धे धनरुची कथ्येते विश्वदेवकौ । एकोदिष्टे रुद्रसञ्ज्ञो विश्वेदेवास्त्रयोदश ।' इति हेमाद्रौ शंखबृहस्पत्युक्तेः ।

आदिदेवपर्यायाः—आदिदेवाः, आद्यदेवाः, पूर्वदेवाः, प्रथमदेवाः ।

आदिदेवभेदाः—(१) ब्रह्मा (अन्), (२) विष्णुः, (३) शिवः, इत्येते आदिदेवानां त्रयो भेदाः सन्ति ।

सर्वदेवभेदाः— आदित्या (द्वादश), रुद्राः (एकादश), वसव (अष्टौ), प्रजापतिः (ब्रह्मा) (एकः), इन्द्र (एकः), अथवा—द्वौ दस्रौ एव देवना त्रयस्त्रिंशद्भेदाः स्युः ।

ब्रह्मपर्यायाः—अजः, अण्डजः, अब्जजः, अब्जयोनिः, अष्टकर्णः, अष्टश्रवाः—(अस्), आः, आत्मभूः, आपचः, उः, कः, कञ्जः, कञ्जजः, कञ्जारः, कमनः, कमलासनः, कमलोद्भवः, कविः, कुशकेतुः, कृपाद्वैतः, खसपर्णः, गुणसागरः, चतुराननः, चतुर्मुखः, चिन्तामणिः, चिरञ्जीवी (इन्), चिरन्तनः, जटाधरः, जन्युः, देवदेवः, द्रुघ (घ) णः, द्रुहिणः, धरुजः, धाता (तृ), नाभिः, नाभिजः, नाभिजन्मा (अन्), निधनः, पद्मगर्भः, पद्मजन्मा (अन्), पद्मपाणिः, पद्मभूः, पद्मयोनि, पद्मलाञ्छनः, पद्मासनः, परमेष्ठी (इन्), पितामहः, पुराणगः, पुराणगीः, पुराणगीतः, पुरुषः, पूर्वः, प्रजापतिः, प्रपितामहः, प्रपूज्यः, प्रभुः, प्राण, प्रणदः, बहुरूपः, बहुरेताः (अस्), ब्रह्मा (अन्), भवान्तकृत् (त्), भाववृत्तः, भूतात्मा (अन्), मः, मञ्जुप्राणः, महावीर्यः, मृगयुः, रजोमूर्तिः, लोकनाथः, लोकेशः, वसुश्रवाः (अस्), विधाता (तृ), विधि, विरञ्चः, विरञ्चनः विरञ्च्यः, विरिञ्चः, विरिञ्चिः, विरिञ्चिः, विश्वरेताः (अस्), विश्वसृट् (ज्), विश्वात्मा (अन्), विश्वेश्वरः, वेदगर्भः, वेदी (दे) शः, वेधाः (अस्), शतधृतिः, शतपत्रनिवासः, शतानन्दः, शम्भुः, शाश्वतः, सञ्जः, सत्यकः, सदानन्दः, सनत् (त) (अ०), सनातनः, सनात् (त) (अ०), सन्ध्यारागः, सरोजजन्मा (अन्), सरोजी (इन्), सर्वकर्ता (तृ), सर्वतोमुखः, सामयोनिः, सारसूः, सुधावर्षी (इन्), सुरज्येष्ठः, सुरासुरगुरुः, स्थविरः, स्रष्टा (ष्टृ), स्वभूः, स्वयम्भु—म्भूः, स्वायम्भवमनुपिता (तृ), हंसरथः, हंसवाहः, हंसवाहनः,

हिरण्यगर्भः ।

ब्रह्मपुरीप०—मनोवती ।

ब्रह्मपत्नीनामनी—(१) स्वरा (एषा ज्येष्ठा पत्नी), (२) सावित्री (एषा कनिष्ठा पत्नी)।

सावित्रीपर्यायाः—गायत्री, त्रिपदा, त्रिपदादेवी, पृश्निसुता, ब्रह्मपत्नी, ब्रह्माणी, वेदमाता (तृ), वैश्वामित्री, श्रुतिजननी, सावित्री, सूर्यतनया, सूर्यसुता ।

पत्नीप०—ऊढा, करात्ती, कलत्रम् (न०), क्षेत्रम् (न०), गृहिणी, गृहाः (पु० ब०), गेहिनी, जनी, जाया, दार, (पु०), दारा (स्त्री०), दाराः (पु० ब०), द्वितीया, पत्नी, परिग्रह (पु०), पाणिगृहीता–ती, पालुषी, प्रिया, भार्या, वधूः, सधर्मचारिणी, सधर्मिणी, सहचरी, सहधर्मिणी । इति ।

ब्रह्मणो बालयोगिमानसपुत्रनामानि—(१) सनकः, (२) सनन्दन, (३) सनातन, (४) सनत्कुमार (५) नारद इत्यादय एते बालयोगिन. सन्ति ।

तस्य सस्त्रीकमानसपुत्रनामानि—(१) मरीचि, (२) अत्रिः, (३) अङ्गिरा (अस्), (४) पुलस्त्य, (५) पुलह (६) क्रतु (७) भृगु (८) दक्ष, (९) प्रचेतस् (पु० ब०), (१०) वसिष्ठ, इत्यादयस्तस्य सस्त्रीकमानसपुत्राः सन्ति ।

यदुक्त श्रीमद्भागवते;—

'उत्सङ्गान्नारदो जज्ञे, दक्षोऽङ्गुष्ठात्स्वयम्भुवः' । इति ।

तत्पुत्री (सरस्वती) पर्याया—अन्त्यसन्ध्येश्वरी, इरा, ईश्वरी, गीः (र्), गिरा, गिरादेवी, गिर्देवी, गोः, (गो), ब्रह्मकन्यका, ब्रह्मपुत्री, ब्रह्मसुता, ब्राह्मी, भारती, भाषा, महाश्वेता, रसा, वचसामधीशा, वर्णमातृका, वाक् (च्), वाक्प्रदा, वाक्येश्वरी, वाग्देवता, वाग्देवी, वागीशा, वागीश्वरी, वाचा, वाणी, विद्यादेवी, वेदाग्रजा, वेदाग्रणी, वेदी, शारदा, शुक्ला, श्री, सन्ध्या, सरस्वती, सायं सन्ध्यादेवता ।

कन्याप०—अनागतार्त्तवा, अरजाः (अस्), मलकनन्दा, कनी, कन्यका, कन्या, कुमारिका, कुमारी, गौरी, नग्ना, नग्निका ।

पुत्रीप०—अङ्गजा, आत्मजा, उद्वहा, तनया, तनुजा, तनूजा, दारिका, दुहिता (तृ), देहसञ्चारिणी, धीदा, नन्दना, नन्दिनी, पुत्रका, पुत्रिका, पुत्री, समदु, समर्धुका, सुता, सूनु—नू, स्वजा ।

भाषणप०—अभिधानम् (न०), उक्ति (स्त्री०), उदितम्, गदितम्, जल्पितम्, भणितम्, भाषणम्, भाषितम्, लपितम्, वचनम्, वच (अस्), वाक्यम्, (एते क्लीबलिङ्गा) व्याहार (पु०) ।

वीणाप०—अनुवादिनी, कण्ठकूणिका, घोषवती, ध्वनिमाला, वङ्कमल्ली, वल्लकी, विपञ्चिका, विपञ्ची, वीणा ।

वीणागुणप०—तन्त्री ।

सप्ततन्त्रीयुक्तवीणाप०—चित्रा, परिवादिनी ।

शिवादीना वीणानामानि—शिवस्य 'अनालम्बी', सरस्वत्या 'कच्छपी', नारदस्य 'महती', गणानाम् 'प्रभावती', विश्वावसो (गन्धर्वविशेषस्य)

बृहती'। तुम्बुरो (गन्धर्वविशेषस्य) कलावती'। चण्डालानां वीणानामानि—कटोलवीणा, काण्ड वीणा, किन्नरी, कुवीणा, खु खणी, चाण्डालिका, डक्करी, वल्लकी, सारिका।

**कण्ठगतमाधुर्य्यपर्याया** —स्वर, अथवा स्वरा — निषादादय।

**स्वरभेदा** —(१) निषाद, (२) ऋषभ, (३) गान्धार, (४) षड्ज, (५) मध्यम, (६) धैवत, (७) पञ्चम इत्येते स्वराणा सप्तभेदा स्यु।

**तद्भेदप०**—(मतान्तरे) (१) षड्ज, (२) ऋषभ, (३) गान्धार, (४) मध्यम, (५) पञ्चम, (६) धैवत, (७) निषाद, इत्येते मतान्तरे तद्भेदा स्यु।

**तेषां साङ्केतिकभेदा** — 'स०' 'रि०' 'ग०' 'म०' 'प०' 'ध०' 'नि०' इत्यपरे स्मृता।

इह नारदोक्तियथा—

'षड्ज रौति मयूरस्तु गावो नर्दन्ति चार्षभम्।
अजाविको च गान्धार क्रौञ्चो नर्दति मध्यमम्॥
पुष्पसाधारणे काले कोकिलो रौति पञ्चमम्।
अश्वस्तुधैवत रौति, निषाद रौति कुञ्जर'॥

इति। अम० सु० व्या० १।७।१

**स्वरसन्दोहपर्यायौ** —ग्राम, स्वरसन्दोह।

**ग्रामभेदा** —(१) नन्द्यावर्त (षड्जग्राम), (२) जीमूत (मध्यमग्राम) (३) सुभद्र (गान्धार-ग्राम), इत्येते ग्रामस्य त्रयो भेदा स्यु।

**मूर्छनापर्याय** —मूर्छना (ग्रामसप्तमांशो नाम मूर्छना गीताङ्ग वा)।

**मूर्छनाभेदा** —(१) ललिता, (२) मध्यमा, (३) चित्रा, (४) रोहिणी, (५) मतङ्गजा, (६) सौवीरी, (७) षण्डमध्या, (८) पञ्चमा, (६) मत्सरी (१०) मृदुमध्या, (११) शुद्धा, (१२) अन्ता, (१३) कलावती, (१४) तीव्रा, (१५) रौद्री, (१६) ब्राह्मी (१७) वैष्णवी, (१८) खेदरी, (१६) सुरा, (२०) नादावती, (२१) विशाला, इत्येतेमूर्च्छनाया एकविंशतिभेदा स्यु।

**तानपर्याय** —तान (पु०) गानाङ्गविराव।

यथा—

'विस्तीर्य्यन्ते प्रयोगा यैर्मूर्छनाशेषसंश्रया।
तानास्तेऽप्यूनपञ्चाशत् सप्तस्वरसमुद्भवा॥
तेभ्य एव भवन्त्यन्ये कूटताना. पृथक् पृथक्।
ते स्यु पञ्चसहस्राणि त्रयस्त्रिंशच्छतानि च।इति।

श० चिं ६।१०६७

**तानभेदा** —(१) अग्निष्टोम, (२) अत्यग्नि॰ष्टोम,, (३) वाजपेय, (४) षोडशी (स्त्री०), (५) पुण्डरीक, (६) अश्वमेध, (७) राजसूय, (८) स्विष्टकृत्, (६) बहुसौवर्ण, (१०) गोसव, (११) महाव्रत, (१२) विश्वजित् (तृ), (१३) ब्रह्मयज्ञ, (१४) प्राजापत्य, (१५) अश्वक्रान्त, (१६) रथक्रान्त, (१७) विष्णुक्रान्त, (१८) सूर्यक्रान्त (१६)गजक्रान्त, (२०)बलभिद्(द्), (२१) नागपक्षक, (२२) चातुर्मास्य, (२३) संस्थाख्य, (२४) शस्त्र, (२५) उक्थ, (२६) सौत्रामणी (स्त्री०), (२७)चित्रा(स्त्री०), (२८) उद्भिदाह्वय, (२६) सावित्री (स्त्री०), (३०) अर्द्धसावित्री (स्त्री०), (३१) सर्वतोभद्र (३२)

आदित्यनामयनः, (३३) गवामयननामकः, (३४) सर्पाणामयनः, (३५) कोणपायनः, (३६) अग्निचित् (त्), (३७) द्वादशाहः, (३८) उपांशुः, (३९) सोमाभिधः, (४०) अश्वप्रतिग्रहः, (४१) वर्हिरथः, (४२) अभ्युदय, (४३) सर्वस्वदक्षिणः, (४४) दीक्षा (स्त्री०), (४५) सोमाख्यः, (४६) समिधाह्वयः, (४७) स्वाहाकारः, (४८)तनूनपात् (त्), (४९) गोदोहन, इत्येते तानानामूनपञ्चाशद्भेदाः स्युः।

गानपर्यायाः—गानम्, गान्धर्वम्, गीतम् गीतिः, गेयम्। इति।

अंगुलिप०—अंगुरिः—री, अंगुलिः—ली, अंगुलीया, करशाखा।

अंगुष्ठप०—अंगुलः, अंगुष्ठः, करवीरः, वृद्धाअंगुलिः।

तर्जनीप०—अंगुष्ठनिकटांगुलिः, तर्जनी, प्रदेशनी, प्रदेशिनी।

मध्यांगुलिप०—ज्येष्ठा, मध्यमा, मध्या।

अनामिकाप०—अनामा, अनामिका, उपकनिष्ठांगुलिः, सावित्री।

कनिष्ठांगुलिप०—कनिष्ठा, कनीनिका, दुर्बलांगुलिः।

नखप०—अंगुलिजः, अंगुलीकण्टकः, अंगुलीसम्भूतः, करकण्टः—कः। करचन्द्र, करजः, कररुहः, करशूकः, कराग्रजः, करोद्भवः, कामांकुशः, खरूलः, नखः, नखरः, (पु = न०), पाणिजः, पाणिरुहः, पुनर्नवः, पुनर्भवः, भुजाकण्टः, महाराजः, रतिरथः, स्मरांकुशः।

१–२८

रागप० रागः (पुं०) भैरवादिः, गायनशास्त्रीयरागः।

रागभेदाः—(भरतहनुमन्मते) (१) भैरवः, (२) कौशिकः, (३) हिन्दोलः, (४) दीपकः, (५) श्रीरागः, (६)मेघः, इत्येते षड्रागाः स्युः।

तद्भेदाः—(कलानाथसोमेश्वरमते) (१) मालवः, (२)मल्लारः, (३) श्रीरागः, (४) वसन्तः (५) हिल्लोलः, (६) कर्णाटश्चैते मतान्तरे रागाणां षड्भेदाः स्युः।

रागिणीपर्यायाः—रागिणी, रागपत्नी, रागभार्या।

रागिणीभेदाः—(१) धानसी, (२) मानसी, (३) रामकीरी, (४) सिन्धुडा, (५) आशावरी, (६) भैरवी, चेमाः, षण्मालवप्रियाः। (१) वेलावली, (२) पूरवी, (३) कानडा, (४) माधवी, (५) कोडा, (६) केदारिका, चेमाःषण्मल्लारप्रियाः। (१) गान्धारी, (२) शुभगा, (३) गौरी, (४) कौमारी, (५) वेलोयारी, (६)वैरागी, चेमाः षट् च श्रीरागप्रियाः। (१) तुडी, (२) पञ्चमी, (३) ललिता, (४) पठमञ्जरी, (५) गुर्जरी, (६) विभाषा, चेमाः षड्वसन्तरागप्रियाः। (१) मायूरी, (२) दीपिका, (३) देशकारी, (४) पाहिडा, (५) कराडी, (६) मोरहाटी, चेमाः षड् हिल्लोलरागप्रियाः। (१) नाटिका, (२) भूपाली, (३) रामकेली, (४) गडा, (५) कामोदा, (६) कल्याणी, चेमाः षट् कर्णाटराग प्रियाः। एवं रागिणीनां षट्त्रिंशद्भेदाः स्युः।

२९–३६

वेदपर्याया —आगम, आम्नाय ऋषि, छन्द (अस्) (न०), त्रयी (स्त्री०), निगम, ब्रह्म (अन्) (न०), वेद, श्रुति (स्त्री०), स्वाध्याय ।

प्रणवप०—ओङ्कार, प्रणव ।

वेदभेदा —(१) ऋक् (च्), (२) यजु (ष्), (३) साम (अन्), (४) अथर्व (अन्), चैते वेदस्य चत्वारो भेदा. स्यु ।

उपवेदभेदा —(१) आयुर्वेद (ऋगुपवेद), (२) धनुर्वेद (यजुरुपवेद), (३) गान्धर्ववेद (साम्न उपवेद), (४) अर्थशास्त्रम् (अथर्वोपवेद) चैते उपवेदाना चत्वार उपभेदा स्यु ।

अगपर्याया —अङ्गम्, अपघन, अवयव, गात्रम्, प्रतीक ।

षडङ्गभेदा —(१) पादौ, (२) हस्तौ, (३) नयने, (४) श्रवणे, (५) नासिके, (६) मुखम्, चैतानि षडङ्गानि स्यु ।

षट्शास्त्रभेदा —(१) छन्द (अस्), (वेदस्य पादौ), (२) कल्प (वेदस्य हस्तौ), (३) ज्योतिषम् (वेदस्य चक्षुषी), (४) निरुक्तम् (वेदस्य श्रोत्रे) (५) शिक्षा (वेदस्य नासिके), (६) व्याकरणम् (वेदस्य मुखम्), चैते शास्त्राणा षड्भेदा स्यु ।

छन्द पर्याया —छन्द (अस्), पद्यम् वृत्तम् ।

छन्दोजातिभेदा —(१) उक्ता, (२) मध्या (३) प्रतिष्ठा, (४) अन्या (५) सुप्रतिष्ठा, (६) गायत्री, (७) उष्णिक् (ह्) (८) अनुष्टुप (भ्) (९) बृहती, (१०) पङ्क्ति (११) त्रिष्टुप (भ्), (१२) जगती, (१३) अतिजगती, (१४) शक्वरी, (१५) अतिशक्वरी, (१६) अष्टि, (१७) अत्यष्टि, (१८) धृति, (१९) अति धृति (२०) कृति (२१) प्रकृति, (२२) आकृति (२३) विकृति, (२४) सकृति, (२५) अभिकृति, (२६) उत्कृतिश्चैते छन्दसा षड्विंशति-जातिभेदा स्यु ।

श्रुतिजातिभेदा —(१) तीव्रा, (२) कुमुद्वती, (३) मन्दा, (४) छन्दोवती, (५) दयावती, (६) रञ्जनी, (७) रतिका, (८) रौद्री, (९) क्रोधा, (१०) वज्रिका, (११) प्रसारिणी, (१२) प्रीति, (१३) मार्जनी, (१४) क्षिति, (१५) रक्ता, (१६) सन्दीपनी, (१७) आलापिनी, (१८) मदन्ती, (१९) रोहिणी, (२०) रम्या, (२१) उग्रा, (२२) क्षोभिणी, चैते श्रुतेर्द्वाविंशतिजातिभेदा स्यु ।

कल्पपर्याया—कल्प, क्रम, यज्ञविद्या, विधि, बोधायनापस्तम्बाश्वलायनादिमहर्षिप्रणीतग्रन्थ ।

ज्योतिषप०—ग्रहणादिगणनशास्त्रम्, ज्योतिश्शास्त्रम् ज्योतिषम्, ज्योतिषम्, वेदचक्षु ।

ज्योतिश्शास्त्रभेदा —(१) सिद्धान्त, (२) संहिता, (३) होरा चैते ज्योतिषशास्त्रस्य त्रयो मुख्यभेदा स्यु ।

यदुक्तम्—

'सिद्धान्त संहिता होरारूपस्कन्धत्रयात्मकम्' इति।

केचित्तु—

(१) केरलीयम् (कृष्णीयप्रश्नशास्त्रम्), (२) शकुनम् (वसन्तराजादिप्रणीतशास्त्रम्), चैताभ्या सहितं पञ्चस्कन्धात्मकमेतच्छास्त्रमुच्यते । ये

होराविदो मुहूर्त्तशास्त्रं श्रीपतिकृतरत्नमालादि विद्यामाधवीयं च होराशास्त्रात पृथङ् मन्यन्ते तन्मते ज्योतिश्शास्त्रं षट्स्कन्धात्मकं बोध्यम्।

निरुक्तपर्याया: निरुक्तम्, निरुक्ति, निर्वचनम् पदभञ्जनम्, व्याकरणपरिशिष्टम्, यास्कप्रणीतग्रन्थ।

शिक्षाप०—वेदशिक्षणप्रकारवान्, महर्षिनारदपाणिनि प्रणीतग्रन्थ. शिक्षा।

व्याकरणप०—ग्राम्नायाननम, पदम् वेदवदनम्, व्याकरणम शब्दशास्त्रम्, श्रुतिमुखम्।

व्याकरणभेदा.—(१) ऐन्द्रम्, (२) चान्द्रम् (३) काशकृत्स्नम्, (४) कौमारम्, (५) सारस्वतम्, (६) शाकटायनम् (७) आपिशलेयम्, (८) शाकलम्, (९) पाणिनीयम् (१०) हैमम् चैते व्याकरणशास्त्रस्य दशभेदा स्यु।

शाब्दिकनामानि (१) इन्द्र, (२) चन्द्र, (३) काशकृत्स्न, (४) आपिशलि (५) शाकटायन, (६) पाणिनि, (७) अमर (अमरसिंह), अद्युनास्य व्याकरण नोपलभ्यते। (८) जैनेन्द्र, (हेमचन्द्राचार्य) श्चेत्यस्य शब्दानुशासन व्याकरणशास्त्रमिदानीमुपलभ्यते।

वेदान्तपर्याया —उपनिषत् (द्), ब्रह्मविद्या, वेदान्त।

सांख्यप०—कापिलम्, शाख्यम्, सांख्यम्।

मीमांसाप०—मीमांसा, विचारणा, वेदविचारणा, पूर्वमीमांसा, उत्तरमीमांसा च मीमांसापूर्वोत्तर भेदेन प्रसिद्ध शास्त्र तज्जैमिनिव्यासप्रणीतम्। तदेव वाक्यम्।

षड्दर्शनभेदा —(१) वैशेषिकम् (कणादस्य), (२) न्याय (गोतमस्य), (३) मीमांसा (जैमिने), (४) सांख्यम् (कपिलस्य), (५) पातञ्जलम्- (पतञ्जले), (६) वेदान्त (व्यासस्य), चैतानि षड्दर्शनानि स्यु।

धर्मशास्त्रपर्याया: —मनुशासनम्, धर्मशास्त्रम्, धर्मसंहिता, स्मृति, मन्वादिप्रणीतशास्त्राणि।

धर्मशास्त्रप्रयोजकनामानि—(१) मनु, (२) अत्रि, (३) विष्णु, (४) हारीत, (५) याज्ञवल्क्य, (६) उशना, (७) अङ्गिरा (प्रसू), यम, (९) आपस्तम्ब, (१०) संवर्त, (११) कात्यायन, (१२) बृहस्पति, (१३) पराशर:, (१४) व्यास, (१५) शंख, (१६) लिखित, (१७) दक्ष, (१८) गौतम, (१९) शातातप, (२०) वशिष्ठ, श्चैते विंशति धर्मशास्त्रकारा, तेष्वष्टादशैव प्रसिद्धधर्मशास्त्र(स्मृति)कारा सन्ति, तेनाष्टादशस्मृतय एव ज्ञेया।

पुराणपर्याया —चिरन्तनम्, पञ्चलक्षणम्, पुराणम्, पुरातनम्, प्रतनम्, प्रत्नम्।

तल्लक्षणभेदा —(१) सर्ग, (२) प्रतिसर्ग, (३) वंश, (४) मन्वन्तराणि, (५) वंशानुचरित, चैतत्पञ्चलक्षणात्मक पुराणम्।

तदुक्तम्

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च।
वंशानुचरित चेति पुराण पञ्चलक्षणम्', इति। श चि १ १८४

पुराणनामानि—(१) मात्स्यम्, (२) मार्कण्डेयम्, (३) भाविष्यम्, (४) भागवतम्, (५) ब्राह्मम्,

(६) ब्राह्माण्डम्, (७) ब्राह्मवैवर्त्तम्, (८) वायव्यम्, (९) वामनीयम्, (१०) वैष्णवम्, (११) वाराहीयम्, (१२) आग्नेयम्, (१३) नारदीयम्, (१४) पाद्मम्, (१५) लैङ्गम्, (१६) गारुडम्, (१७) कौर्म्मम्, (१८) स्कान्दम्, चैतान्यष्टादश पुराणानि स्युः ।

तदुक्तम्—

'मद्वयं, भद्वयं, चैव, ब्रत्रयं, वचतुष्टयम् । अनापलिङ्गकूस्कानि पुराणानि पृथक् पृथक् ।

इति । श चि ११।१८४

विद्यापर्यायौ—विद्या, शास्त्रम् ।

विद्याभेदाः—(१) आन्वीक्षिकी (अस्यामात्मविज्ञानम्), (२) त्रयी (अस्यां धर्माधर्मौ), (३) वार्ता (अस्यामर्थानर्थौ), (४) दण्डनीतिः (अस्यां नयानयौ चिन्त्यौ), चैते विद्यायाश्चत्वारो भेदाः स्युः ।

तच्चतुर्दशभेदाः—(१) शिक्षा, (२) कल्पः, (३) व्याकरणम्, (४) छन्दः (अस्), (५) ज्योतिः (ष्) (६) निरुक्तिः (७) ऋक् (च्), (८) यजुः (ष्), (९) साम (अन्), (१०) अथर्व (अन्), (११) मीमांसा, (१२) आन्वीक्षिकी (तर्कविद्या, न्यायः), (१३) धर्मशास्त्रम् (स्मृतिः), (१४) पुराणम्, चैताश्चतुर्दशविद्याः स्युः । (१५) आयुर्वेदः, (१६) धनुर्वेदः, (१७) गान्धर्वः, (१८) अर्थशास्त्रं, चैता अष्टादश विद्याः स्युः ।

ग्रन्थपर्यायौ—ग्रन्थः, द्वात्रिंशदक्षरी ।

महाकाव्यप०—महाकाव्यम्, सर्गबन्धः ।

नाटकप०—नाटकम्, महारूपकम्, गद्यपद्यप्राकृतभाषामयो ग्रन्थः ।

इतिहासप०—इतिहासः, पुरावृत्तम् पूर्वचरितम् । पूर्ववृत्तप्रतिपादकव्यासादिप्रणीतो भारतादिग्रन्थः ।

आख्यायिकाप०—आख्यायिका उपलब्धार्था, उपलब्धार्थकथा, कादम्बरीवासवदत्तादयः ।

आन्वीक्षिकीप०—आन्वीक्षिकी, तर्कविद्या, तर्कशास्त्रम्, न्यायः ।

कामन्दकीयप०—कामन्दकीयम्, कौटिल्या-(चाणक्या) र्थशास्त्रम् ।

चम्पूप०—चम्पूः (स्त्री०), गद्यपद्यमयवाक् ।

खण्डकथाप०—खण्डकथा, वाङ्मयप्रभेदः ।

सन्दर्भप०—गुम्फः ग्रन्थनम्, परिस्पन्दः, प्रतियत्नः, प्रबन्धः, रचना, श्रन्थनम्, सन्दर्भः ।

पादप०—अह्रिः, अङ्घ्रिः, क्रमः, क्रमणः, चरणः, चलनः, पत् (द्), पदः, पात् (द्), पादः ।

हस्तप०—करः, करिः, किष्कुः, कुलिः, तलः, पञ्चशाखः, पाणिः, भुजदलः, भुजादलः शमः, शयः, शालः, सलः, हस्तः ।

बाहुप०—कुलिः (पु०), दोः (स्) (पु० न०), दोषा (स्त्री), प्रवेष्टः, बाहः, बाहा (स्त्री), बाहुः, बाहूः (स्त्री०), भुजः, भुजा (स्त्री) ।

नेत्रपर्यायाः—अक्षि (न्), अम्बकम्, ईक्षणम्, गौः (गो), चक्षुः (ष्) ज्योतिः (इष्), तपनः, दर्शनम्, दर्शनेन्द्रियम्, देवदीपः, दैवदीपः, दृक् (श्) दृशा, दृशिः, दृशी दृष्टिः नयनम्, नेत्रम्, प्रेक्षणम्, रूपग्रहः, लोचनम्, विलोचनम्, वीक्षणम् ।

कर्णप०—कर्ण, ध्वनिग्रहः, पञ्जूष, महानाद, शब्दग्रह, शब्दाधिष्ठान, श्रवणम्, श्रव (स्), श्रवसम्, श्रुति (स्त्री०), श्रोत (स्), श्रोत्रम्।

नासिकाप०—गन्धज्ञा, गन्धनाडी, गन्धनालिका, गन्धनाली, गन्धवन्धा, गन्धवहा, गन्धहृत् (त्), घोणा, घ्राणम् नकुटकम् नक्रम्, नक्रा, नकुटकम्, नसा, नस्या, नासा, नासिका, नासिक्यम्, वक्र, विकूणिका, विघूणिका, शिंघाणी, शिंघिणी, शिंघिनी, सिंघिणी, सिंघिनी।

मुखप०—ग्राननम्, मुखम्, वदनम्, शेपस्तु देवे।

ग्रोष्ठप०-ग्रधर ग्रधरोष्ठ, ग्रोष्ठ, ग्रोष्ठा, छद', दन्तच्छद, दन्तच्छदन, दन्तवस्त्रम् दन्तवास (ग्रस्), दशनवास, (ग्रस्), दशनोच्छिष्ट, रदच्छद, रदनच्छद, रसालेपी (इन्), वाग्दल।

दन्तप०—खर, खादन, चर्वणसाधनास्थि, जम्भ, दश, दशक, दत् (त्), दन्त, दशन, दालु, द्विज भक्षमल्ल मल्ल-क मुखखुर, रथ, रद, रदन, रुचक, वक्त्रखुर।

जिह्वाप०—ग्रमृतवर्षिणी, काकु, जिह्व, जिह्वा, रशना, रसज्ञा, रसज्ञानेन्द्रियम्, रसन, रसना, रसमाता (तृ), रसमातृका, रसला, रसा, रसाङ्का, रसाल, रसाला रसिका, रस्ना, ललना, लोला, सुधास्रवा।

रसप०—रस, रसनाग्राह्यगुण, मधुरादि।

रसभेदा—(१) मधुर, (२) ग्रम्ल, (३) लवण, (४) कटुक, (५) तिक्त, (६) कषाय—इत्येते षड्रसा सन्ति।

कमलपर्याया—ग्रब्जम्, कमलम्, जलजम्, शेपस्तु रवौ।

ग्रासनप०—ग्रासनम्, उपवेशनाधारः, उपासनम्, पीठम्, पीठी, विष्टर।

ग्रासनभेदा—(१) पद्मासनम्, (२) स्वस्तिकासनम्, (३) भद्रासनम् (४) वज्रासनम्, (५) वीरासन, चेत्यादयोऽन्यान्यप्यासनानि स्युः।

नाभिपर्याया.—उदरावर्त, तुन्दकूपिका, तुन्दकूपी, नाभि—भी, पुतारिका, प्राण्यङ्गम् सिरामूलम्।

गुणपर्यायो—गुण, सत्वादि।

गुणभेदा—(१) सत्वम्, (२) रज (ग्रस्) (न०), तम (ग्रस्) (न०), इत्येते सत्वादयस्त्रयो गुणा सन्ति।

रजोगुणपर्यायो—रज (ग्रस्) (न०), द्वितीय गुण।

शरीरप०—तनु, देह मूर्ति, शरीरम्, शेपस्तु कुबेरे।

विश्वप०—ग्रखिल, कृत्स्न निखिल, विश्व, सकल समग्र, समस्त, सर्व, शेपस्तु सर्वशब्दे।

हेतुप०—कारणम, कार्यम्, हेतु (ग्रस्) (न०)।

निवासप०—ग्रागारम्, गृहम गेहम्, निवास, शेपस्तु देवे।

हंसप०—कनककण्ठ, क्षीराद, चक्राक्ष, चक्राङ्क, चक्राङ्ग, जालपात् (द), जालपादक, ज्येष्ठ, धवलपक्ष, धवलपक्षी (इन्), धोरण नीलाक्ष, परिप्लावी (इन्), पुष्दशक, प्रास्थित मराल, मानसालय, मानसौका (ग्रस्), मौक्तिकाशन,

वक्राङ्ग, वरट, शङ्कु, श्वेतगरुत् (त), श्वेतपक्ष, सङ्कुचित, सरकाक, सितच्छद, सितपक्ष, सूति ।

हंसीप०—वरटा, वरला, वारटा, वारला, हंसी।

रथप०—रथ, शताङ्ग, स्यन्दन ।

वाहनप०—धोरणम्, पत्रम्, यानम्, युग्यम्, योग्यम्, वाहनम्, वाह्यम्, सायात्रिकम् ।

विष्णुपर्याया॰—अ, अच्युत, अज, अजित, अद्रिभृत् (त्), अधोक्षज, अनन्त अनन्तशायी (इन्), अपराजित, अरिष्टनेमि, अव्यय असम्पुष, अहिवैरिवाह, आत्मयोनि, आदिदेव, आदिवराह, इन्द्रावरज, उच्चदेव, उपेन्द्र, ऋतधामा (अन्) एकशृङ्ग॰, कपिल कवि, काम, कालकुण्ठ, कालनेम्यरि, कुन्द, कृष्ण केशट, केशव, केशी (इन्), कैटभजित (त्) कैटभारि, कोक, कौस्तुभलक्ष्मक, कौस्तुभवक्षा (अस्), कौस्तुभोरा (अस), गदाधर, गदापाणि, गदी (इन्), गरुडध्वज गोविन्द, चक्रपाणि, चक्री (इन्) चतुर्भुज चतुष्पाणि जगन्नाथ, जनार्दन, जलशायी (इन्), जह्नु, तमोहा (अन्), त्रिककुत् (द्), त्रिविक्रम, दानवशत्रु, दामोदर, दाशार्ह, दैत्यशत्रु दैत्यारि, धरणीधर, धराधर, नरकान्तक नरकाराति नरकारि, नरायण, नलिनेशय, नारायण, पद्मनाभ, पद्मनाभि, पाञ्चजन्यधर॰, पीताम्बर, पुण्डरीकाक्ष, पुनर्वसु, पुराणपुरुष पुरुषोत्तम, पृश्निगर्भ, प्रपितामह, बभ्रु, बलिध्वंसी (इन्), बलिवैरी (इन्), ब्रह्मनाभ, मञ्जुकेशी (इन्), मधुरिपु, मल, माधव, मास, मुकुन्द॰, मुरमर्दन, मुरारिपु, मुरारि, यज्ञ, यज्ञपुरुष॰, यज्ञपूरुष, युगावर्त, रन्तिदेव, राहुभेदी (इन्), राहुमूर्धभित् (द) राहुवैरी (इन्), लक्ष्मीनाथ, वनमाली (इन्), वामन, वारिशय, वारीशशायी (इन्), वासु, वासुदेव, वासुभद्र, विधु, विरञ्चन, विरञ्चि॰, विश्वक्सेन, विश्वम्भर, विश्वरूप, विश्वेश्वर, विषयी (इन्), विष्टरश्रवा (अस्), विष्णु, वृन्दाङ्क, वृषशत्रु, वृषाकपि, वृष्णि, वेधा (अस्), वैकुण्ठ, वैजयन्तीधर, शतधामा (अन्), शतानन्द, शतावर्त, शम्भु, शशबिन्दु॰, शार्ङ्गधन्वा (अन्), शार्ङ्गपाणि, शार्ङ्गी (इन्), शिवकीर्त्तन, श्रवथ, श्रन्थ, श्रीकर श्रीदत्त, श्रीधर, श्रीनिवास, श्रीपति, श्रीवत्स, श्रीवत्सलाञ्छन, श्रीवत्साङ्क, श्रीवास, श्रीश, षड्बिन्दु, सनातन, सहस्रपाद, सुयामुन, सुरारिहा (अन्), सुरोत्तम, सुषेण, सोमगर्भ, सौरि, स्वभू, स्वर्णबिन्दु, हंस, हरि, ह्रुण, हृषीकेश हेमशङ्ख, इति ।

तदन्यानि यौगिकनामानि—अक्षज, अधोमुख, असयुत, अहि, आसन्द, उदारधि, उरुक्रम, उरुगाय, ऊर्ध्वकर्मा (अन्), एकदृक (श्), एकपात् (द्), एकाङ्ग, कपि, कालकुण्ठ॰, क्रतुपुरुष, खण्डास्य, गरुडगामी (इन्), चतुर्दंष्ट्र, चतुर्व्यूह, जन्मकील, जलेशय, जितमन्यु, तमोघ्न, तीर्थपाद, त्रिधामा (अन्), त्रिपात् (द), दशावतार, द्वादशमूल, द्विपद॰, धन्वी (इन्), धर्मनाभ, धर्मनेमि, धार, नरकजित्,

(त्), नवव्यूह, नवशक्ति, नृसिंह, नृसिंहवपु (प्), पद्मगर्भ, पद्महास, परपुरुष, पराक्रम, पराविद्ध, पाशुजालिक, पाण्डवाभील, पुण्य श्लोक, पुष्पहास, प्रमदन, बलिन्दम बहुरूप, बहुशृङ्ग भद्रःपिल महाक्रम, महातपा (स्), महामाय, महाहस मानञ्जर, यज्ञ धर, यज्ञनेमि, यमकाल यवनारि, योगनिद्रालु, रत्नबाहु, लतापर्ण, लोकनाभ, लोहिताक्ष, वश, वर्द्धमान, वरारोह, वायुवाहन, विधाता (तृ), विश्वभुक् (ज्), वृकोदर, वृषोत्साह, वैनतेयवाहन, शस्त्रपाणि, शतक, शतवीर, शद्रु, शरु, शलिक, श्रवण, श्रीगर्भ, श्रीवराह, षडङ्गजित् (त्), सदायोगी (इन्), समितिञ्जय, सरीसृप सहस्रजित् (त्), सात्वत, सिन्धुवृष, सुधन्वा (अन्), सुभद्र, सुवृष सूक्ष्मनाभ, सोमसिन्धु स्थिर, हिरण्यकेश, हिरण्यनाभ ।

पुनस्तवन्यानि यौगिकनामानि—अरिष्टसूदन, अरिष्टहा (अन्), कंसजित् (त्), कालनेमिहर, कालियदमन केशिसूदन, केशिहा (अन्), चाणूरसूदन द्विविदारि, धेनुकध्वंसी (इन्), धेनुकसूदन पूतनादूषण, पूतनासूदन, बलि बन्धन, बाणजित (त्) मधुमथन मैन्दमर्दन, यमलार्जुनभञ्जन राहुमूर्धहर शकटारि, शिशुपालनिषूदन साल्वारि हयग्रीवरिपु, हिरण्यकशिपुविदारण ।

विष्णुशत्रुनामानि—अरिष्ट कंस, कालनेमि कालिय, केशी (इन), कैटभ, चाणूर, द्विविद, धेनुक, नरक, पूतना, वलि बाण, मधु, मुर, मैन्द, यमलार्जुनौ, राहु, शकट, शिशुपाल, माल्व, हयग्रीव, हिरण्यकशिपु, रावण, जरासन्ध, निशुम्भ, मेरक, तारक प्रह्लाद ।

विष्णोरवतारभेदा—(१) मत्स्य (२) कूर्म्म, (३) वराह, (४) नृसिंह, (५) वामन (६) परशुराम, (७) राम, (८) बलराम, (९) बौद्ध, (१०) कल्किश्चैते विष्णो (कृष्णस्य) दशावतारा सन्ति। 'कृष्णस्तु स्वयं भगवान्विष्णुर्नावतार ।

तदुक्त—

'वनजौ, वनजौ, खर्व,—स्त्रिरामी, सकृपो, ऽकृप ।
अवतारा दशैवैते 'कृष्णस्तु भगवान' स्वयम् ।
राधाविनोदकाव्यटीकायाम् ॥१२५

कृष्णस्तु भगवान् स्वयम् इति श्रीमद्भागवते च ।

रामभेदा—(१) परशुराम (जामदग्नय), (२) राम (दाशरथि), (३) बलराम (रौहिणेय), चैते, त्रयो रामाः स्यु ।

विष्णो शङ्खपर्याय—पाञ्चजन्य (अथ दक्षिणावर्त) ।

तच्चक्रप०—सुदर्शन ।

तद्गदाप०—कौमोदकी, कौमोदकी, कौमोदी ।

तद्धनु प०—शार्ङ्गम् ।

तत्खड्गप०—नन्दक ।

तत्कण्ठस्यमणिप०—स्यमन्तक ।

तद्भुजमध्यस्यमणिप०—कौस्तुभ ।

तदङ्कप०—श्रीवत्स ।

तद्ध्वजप०—गरुड, भुजङ्गहा (अन्) ।

तन्मालाप०—वैजयन्ती ।

तन्निवासप०—क्षीरसागर ।

तच्छय्या (शेष) प०—अनन्त, आसुक, गौर, नागराज भूधर, विष्णुशय्या, शेष, सहस्रफण, सहस्रवदन, सितपङ्कजचिह्न ।

तत्पत्नी (लक्ष्मी) प०—अब्धिजा अम्बुजा, अश्व माता (तृ), आ इन्दिरा, ई, कन्दर्पमाता (तृ), कमला, करीषिणी, कल्याणी, क्षीरसागरकन्यका, क्षीरसागरसुता, क्षीराब्धितनया, क्षीराब्धिपुत्री, क्षीराब्धिमानुषी, क्षीरोदतनया, क्षीरोदसुता, चञ्चला, चला, जलधिजा-ता, दुग्धाब्धितनया, नारायणी, नीरजा, नीरजनिकेतना, पद्मगृहा, पद्ममालिनी, पद्मलाञ्छना, पद्मवासा (अस्), पद्मा, पद्मालया, पिङ्गला, पिप्पला, भर्भरी भार्गवी, भृगुपुत्री, मङ्गला, मा, रमा, लक्ष्मी, लोकजननी, लोकमाता (तृ), बिल्वद्रुमगृहा, विष्णुपत्नी, विष्णुशक्ति वृषाकपायी, शवित, श्री, सा, हरिप्रिया, हरिवल्लभा ।

इन्द्रप०—इन्द्र, पुरन्दर शक्र, शेषास्त्विन्द्रे ।

अवरजप०-अनुज, अवरज, कनिष्ठ कनीयान् (ईयस्), कन्यस, जघन्यज, यविष्ठ, यवीयान् (ईयस्), लघु ।

वक्ष प०-उर (अस्), क्रोडम् क्रोडा, भुजान्तरम्, वक्ष (अस्) वत्स, हृदयस्थानम् ।

लक्ष्मकप०—कलङ्कम्, चिन्हम्, लक्ष्मकम्, शेषस्तु चन्द्रे ।

गदाप०—गदा (स्त्री०) स्वनाम्ना प्रसिद्ध लोह मय शस्त्रम् ।

१-२८

हस्तप०-पाणि, हस्त, शेषस्तु ब्रह्मणि ।

ध्वजप०—केतनम् केतु, ध्वज पताका, वैजयन्ती ।

जलपर्याया—अङ्कुरम् अन्धस् आप (प्) (स्त्री० ब०), अब्भयुत्थम्, अमृतम् अम्बु, अम्भ (अस्), अर्ण (अस्), आप (अस्), इरा, उडु, उड्ड, उदम्, उदकम्, ऊर्जम्, ऋतम् कतम्, कबन्धम्, कम् (अ०) कमन्धम्, कमलम्, कम्बलम् कतुरम्, काण्डम्, कीलालम्, कुलीन सम्, कुशम क्रीटम्, कोमलम क्षणदम्, क्षरम्, क्षीरम्, गौ (गो), घनपदम, घनपुष्पम् घनरस, घृतम्, चन्द्रोरसम् चलम, जडम्, जलम् जल-पीयम, जीवनम्, जीवनीयम्, तामरसम् तायम्, दकम्, दहनाराति, दहनारि, दिव्यम्, दैव्यम्, धरुणम्, नरा (स्त्री०ब०) नलिनम्, नारम्, नारा (स्त्री० ब०), निम्नगम्, नीरम्, पय (अस्), पवित्रम्, पातालम्, पाथ (अस्), पानी-यम्, पावनम्, पिप्पलम्, पीयम्, पुष्करम्, प्राण-दम्, बन्धकम्, भुवनम्, मधु, मरुलम्, मलिनम्, मेघजम्, मेघपुष्पम्, मेघप्रसवम्, याद (अस्), यादोगृहम् यादोनिवास, रस, वनम्, वाजम् वा (र), वारम्, वारि, वारुणम्, विषम्, व्योम (अन्), शवम्, शवरम्, शम्बरम्, शरम्, शिवम्, षड्रसम्, संवरम्, सदनम्, सम्ब, सम्बलम्, सर (अस्), सरम्, सरिलम् सर्वत (अस्) (प०), सर्वतोमुखम् सलम्, सलिलम्, सारम, सुरम्, सेव्यम्, सोमम्, स्यन्दनम् ।

शय्याप०—शयनम्, तल्पम, शयनम्, शयनीयम्, शय्या, शायिका ।

२९-२९

पीतपर्याया.—पीत, हरिद्राभ, शेषस्तु गुरौ।

वस्त्रप०- अम्बरम्, वसनम्, वस्त्रम्, शेषस्तु रवौ।

श्वेतकमलप०-पुण्डरीकम्, सिताम्भोजम्, शेषस्तु-चन्द्रे।

अक्षिप० अक्षि (न्), नेत्रम्, शेषस्तु ग्रहाणि।

वारीश (समुद्र) प०—अकूपार, अकूवार, अपान्नाथ, अपाप, अपांपति, अपार, अप्पति, अब्धि, अम्बुधि, अम्भोधि, अम्भोनिधि, अम्भोराशि, अर्णव, अवारपार, इन्दुजनक, उदधि, उदन्वान् (मतु०), उर्वङ्क, ऊर्मिकोश, ऊर्मिमाली (इन्), कचङ्गल, कधि, कन्धि, कीलालधि, कूलङ्कष, क्षीराब्धि, क्षोणीप्राचीरम्, चन्द्रजनक, जलद, जलधि, जलनिधि, जलप, जलराशि, जलेन्द्र, तरङ्गि, तरन्त, तरिष, तरेय, तरीप, तारिष तिमि, तिमिकोश—ष, तिमिमाली (इन), तोयनिधि दानवगृह, दारद दैत्यगृह, द्वीपवान् (मतु०), धरणिप्लव, धरणिपूर, धुनिनाथ धेन, नदीकान्त नदीन, नदीपति, नदीश, नभस, निलय नीरधि, नीरनिधि, पयोधि, पयोनिधि, पयोराशि पराकुव, पलङ्कष पाथोधि, पाथोनिधि पारावार, पृथिवीप्लव, पेरु प्राणभास्वान् (मतु०), मकराकर मकरालय मन्थिर, महाकच्छ, महाशय, महीप्राचीरम्, महीप्रावरणम्, महीप्रावार, महोदधि, मितद्रु यादईश, याद पति, यादसांपति, यादोनाथ, रत्नकोश, रत्नराशि, रत्नाकर, लौहित्य, वनमवाह, वरुणावास, वाङ्क, वारांनिधि, वारिधि वारिनिधि, वारिराशि, वारीश, वार्धि, वाहिनीपति, विनत, वीचिमाली (इन्), शैलगृह, शैलशिविरम्, सवर, समुद्र, सरस्वान् (मतु०) सरितांपति सरित्पति, सरिन्नाथ, सागर, सिन्धु, स्तम्भि, स्तम्भी (इन्), स्रोत ईश।

समुद्रभेदा—(१) लवणसमुद्र, (२) इक्षुस०, (३) सुरास०, (४) घृतस०, (५) दधिस०, (६) दुग्धस० (७) जलस० चैते सप्तसमुद्रा. सन्ति। तदन्यभेदास्तु ग्रन्थान्तरे द्रष्टव्या।

धनु पर्याया.—अस्त्रम्, आयुधाग्र्यम् आस इष्वास, काण्डम्, कार्मुकम्, कोदण्डम् गुणी (इन्), चाप, तारकम् तूणता, त्रिणता, द्रुणम् धनु (न०), धनु (पु० स्त्री०), धनु (उष) (अस्त्री) धनू (स्त्री०), धन्वम्, धन्व (धन्), शरावोप शरावाप, शरासनम्, शार्ङ्गम्, शेप, सरासनम्, स्थावरम्।

इन्द्रियप०—अक्षम्, इन्द्रियम्, करणम्, खम्, ग्रहणम्, विषयस्रोत (अस) (न०), विषयायी (इन्), विषयि (इन) (न०), स्रोत (अस्) (न०), हृषीकम्।

इन्द्रियभेदौ (१) कर्मेन्द्रियम्, (२) ज्ञानेन्द्रियम्, चैताविन्द्रियस्य द्वौ भेदौ स्त।

कर्मेन्द्रियपर्याया —कर्मेन्द्रियम्, कृत्येन्द्रियम्, क्रियेन्द्रियम्।

ज्ञानेन्द्रियप०—ज्ञानेन्द्रियम्, धीन्द्रियम्, बुद्धीन्द्रियम्।

कर्मेन्द्रियभेदाः—(१) पायुः (गुदम्), (२) उपस्थम् (भगलिंगं च), (३) करौ (हस्तौ), (४) पादौ (चरणौ), वाक् (च) (वाणी), चेत्येते कर्मेन्द्रियस्य पञ्च प्रभेदाः स्युः ।

कर्मेन्द्रियविषयभेदाः[1]—(१) उत्सर्गः (विसर्गः, विण्मूत्रत्यागः), (२) आनन्दः (कामजसुखम्), (३) दानम् (वितरणम्), आदानं च (ग्रहणम्), (४) गतिः (गमनम्), (५) आलापः (वाक्यार्थकम्) ।

ज्ञानेन्द्रियप्रभेदाः—(१) श्रोत्रे (कर्णौ), (२) त्वक् (च) (त्वचा), (३) चक्षुषी (नेत्रे), (४) रसना (जिह्वा), (५) नासे (नासिके), चेत्येते ज्ञानेन्द्रियस्य पञ्चप्रभेदाः स्युः । मनश्चेतिषड्धीन्द्रियाणि ।

ज्ञानेन्द्रियविषयभेदाः—(१) शब्दः (शब्दग्रहणम्), (२) स्पर्शः (स्पर्शग्रहणम्), (३) रूपम् (रूपदर्शनम्), (४) रसः (रसग्रहणम्), (५) गन्धः (गन्धग्रहणम्), चेत्येते ज्ञानेन्द्रियस्य पञ्च विषयभेदाः स्युः ।

इन्द्रियाधिष्ठातृदेवनामानि—(१) श्रोत्रयोः (दिशः), (२) त्वच (वायुः), (३) चक्षुषोः (अर्कः), (४) जिह्वाया (वरुणः), (५) नासिकयोः (अश्विनौ), एतानि पञ्च बुद्धीन्द्रियाधिष्ठातृदेवनामानि । (६) वाच (अग्निः), (७) बाह्वोः (इन्द्रः), (८) पादयोः (विष्णुः), (९) गुदस्य (मित्रः), (१०) मेढ्रस्य (प्रजापतिः), एतानि पञ्च कर्मेन्द्रियाधिष्ठातृदेवनामानि । (११) मनसः (चन्द्रः) (उभयात्मकं मनः) ।

विषयपर्यायाः—अर्थः, इन्द्रियार्थः, गोचरः, विषयः, शब्दस्पर्शरूपरसगन्धाख्यः ।

विषयभेदाः—(१) शब्दः, (२) स्पर्शः, (३) रूपम् (४) रसः, (५) गन्धः—इत्येते विषयस्य गोचरस्येन्द्रियार्थस्य च पञ्च भेदाः स्युः । यथा—कर्णगोचरः । त्वग्गोचरः । दृग्गोचरः । वाग्गोचरः । घ्राणगोचर इत्यादय ।

भूतपर्यायाः—पृथिव्यादि, भूतः, महाभूतः ।

भूतभेदाः—(१) खम् (आकाशः), (२) कः (वायुः), (३) शिखी (अग्निः तेजो वा), (४) जलानि (आपः), (५) उर्वी (भूमिः) । 'ख–क–शिखि जलो-र्व्यः' इति पञ्च महाभूतभेदाः ।

भूतगुणभेदाः—(१) शब्दः, (२) स्पर्शः, (३) रूपम्, (४) रसः, (५) गन्धः । 'शब्दस्पर्श-रूप-रस-गन्धाः—खादीनां मुख्यगुणाः स्युः ।

क्षीर (दुग्ध) पर्यायाः—अमृतम् ऊधस्यम्, स्तन्यम्, क्षीरम्, गव्यम्, गोरसः, जीवनम्, जीवनीयम्, ज्येष्ठम्, दुग्धम्, ध्यामकम्, पयः (यम्), पीयूषम्, पीयूषम्, पुंसवनम्, प्रस्रवणम्, बालसात्म्यम्, मधु, मधुज्येष्ठम्, योग्यम्, रसायनतमा-

१–२५ २६–३०

[1] 'पायूपस्थं पाणिपादौ वाक्चेतीन्द्रियसंग्रहः । उत्सर्गानन्दादानगत्यालापाश्च तत्क्रियाः' इति । [2] 'मनः कर्णस्तथा नेत्रं रसना च त्वचा सह । नासिका चेति षड् ज्ञानेन्द्रियाणि प्रचक्षते ॥' इति ।

श्रयम्, रसोत्तमम्, वारिसात्म्यम्, सरम्, सोमजम्, सोमरसोद्भवम्, सोम्यम्, स्तन्यम्, स्वादु।

धारोष्णप०—अमृतम्।

सागरप०—अब्धि, समुद्र, सागर, शेषस्त्वर्णव।

कन्याप०—कन्यका, कन्या, तनया, सुता, शेषस्तु सरस्वत्याम्।

विष्णुप० विष्णु हरि, शेषस्त्वर्णव।

पत्नीप०—पत्नी, भार्या, वधू शेषस्तु ब्रह्मणि।

कामदेवप०—अङ्गज, अङ्गजनु (उप्), अनङ्ग, अनन्यज, आत्मभू, आत्मयोनि, इ, इरज, इराज, कञ्जन, कञ्जज, कन्तु, कन्दर्प, कमन, कलाकेलि, काम, कामदेव, कुसुमधन्वा (अन), कुसुमबाण कुसुमायुध, कुसुमेषु, चन्द्रसचिव चित्तोत्थ, चेतोभव, चैत्रसख, जराभीत, जराभीरु, दर्पक, पञ्चबाण, पञ्चशर, पञ्चेषु, पुष्पकेतन पुष्पचाप, पुष्पधनु, पुष्पधन्वा (अन), पुष्पध्वज, पुष्पबाण पुष्पास्त्र, पुष्पेषु, प्रकपक, प्रसूनाशनि, प्रसूनासम, बन्धु, मथन मदन, मधुदीप, मधुपुष्प, मधुसख, मधुसारथि मधुसुहृत् (द), मन शय, मनसिज, मनसिशय मनोज, मनोजनु (उप्), मनोजन्मा (अन), मनोदाही (इन्) मनोभव, मनोयोनि, मन्मथ, महोत्सव मापत्यम्, मार, मुर्मुर, यौवनोद्भेद, रणरणक, रतिपति रतिप्रिय, रतिरमण, रतिवर, रम, रवीषु, रागरज्जु, रूपास्त्र, लक्ष्मीज, लक्ष्मीजनु (उप्), लक्ष्मीसुत, वसन्तसख, वाम, विधाता (तृ), विषमेषु, विष्णुजनि, शमान्तक, शिखिमृत्यु, शृङ्गारजनु (उप्), शृङ्गारजन्मा (अन्), शृङ्गारयोनि, श्रीनन्दन, संसारगुरु, सङ्कल्पजन्मा (अन्), सङ्कल्पभव, सङ्कल्पयोनि, समधन्वी (इन्) सुरतप्रिय स्मर, स्मृतिभू, स्वरोचि (इष्) हृच्छय।

कामपत्नीप०—कामकला, कामपत्नी केलिकला, केलिकलावती, कैलती रति रागलता, से।

कामपुत्रीभेदौ—(१) तृट् (ष्) (तृष्णा), (२) प्रीतिश्चैते कामस्य द्वे पुत्र्यौ स्याताम्।

कामपरिचारकभेदा—(१) क्रोध, (२) दम्भ, (३) मद, (४) मोह, (५) लोभश्चैते पञ्च कामस्य परिचारकभेदा स्यु।

कामसायकभेदा—(१) अरविन्दम् (२) अशोकम्, (३) चूतम् (४) नवमल्लिका, (५) नीलोत्पलम्, चैतेपञ्च कामसायकस्य भेदा स्यु.।

कामस्य पञ्चबाणनामानि—(१) मोहन (सम्मोहन), (२) उन्मादन, (३) सन्तापन (तापन), (४) शोषण (५) स्तम्भन (मारण, निश्चेष्टाकरण, निश्चेष्टीकरणश्च), इत्येते कामस्य पञ्च बाणा स्यु।

बाणपर्याया—अक्ष, अजिह्मग, अस्त्रकण्टक, आशुग, इषु, कङ्कपत्र, कदम्ब, कलम्ब, काण्ड, कादम्ब, खग, खरु, गार्ध्रपक्ष, चित्रपुङ्ख, तीरम् तूणक्ष्वेड, नाराच पत्रवाह, पत्री (इन्), पृषत्क, प्रक्ष्वेडन, प्रदर, बाण मर्मभेदन, मर्मभेदी (इन्), मार्गण, रोध, रोप, रोपण लक्षहा (अन्), लोहनाल, लोहमयबाण, वाज, वाजी (इन्), वार विकर्ष—क, विक्षेप, विज्जाल,

सुपर्ण —क, सुपर्णीतनय, सुमुखसू, सुरेन्द्रजित् (त्), सौपर्णेय, स्वर्णकाय, स्वर्णपक्ष, हरिवाहन ।

गरुडपत्नीप०—उन्नति, उन्नूती ।

गरुडपुत्रप०—सुमुख ।

गरुडपितृप०—कश्यप, मारीच ।

गरुडमातृप०—विनता, सुपर्णा, सुपर्णी ।

पक्षिप —मड्गु, अगौका (अस), अण्डज, अनेकज, उत्पत, ऊरु, कण्ठाग्नि, कीकसमुख, खग, गरुत्मान (मतु०), चञ्चुभृत् (त), चञ्चुमान् (मतु०), तुण्ड, तुण्डी (इन) द्युग, द्विज, नगौका (अस) नभसङ्गम, नभोगम, नडीचरण, नीडज, नीडी (इन), नीडोद्भव, पक्षी (इन्), पतग, पतङ्ग, पतत् (त्), पतत्रि, पतत्री (इन), पत्ररथ, पत्रवाह, पत्रवाहन, पत्राङ्गी (इन्), पत्री (इन्), पिच्छन् (त्), पिपतिषन् (त्), पिपतिषन् (त्), पिपतिषु, पीतु, पुग, प्लावी (इन्), भसन्, (त्), मदन, मद्गुर, मलूक, मशाक, रसनाद, रसनारद, लोमकी (इन्), वशाकु, वया (अस्), वाजी (इन्), वानगामी (इन्), वारट्ट, वारङ्ग, वि, विकिर विप्रुप, विविष्किर, विष्कर, विहग, विहङ्ग, विहङ्गम, विहाया (अस्), वृक्षसद्मा (अन्), व्योमचारी (इन्), शकुन, शकुनि, शकुन्त, शकुन्ति, शरड, शलक, शुक, सरण्ड ।

शाकुनिकपक्षिनामानि—(१) कपोत, (२) काक, (३) कुक्कुर, (४) कुलाल, (५) खञ्जन, (६) खर, (७) गृध्र, (८) चक्रवाक (९) चटक, (१०) चाष, (११) नाण्डरीक, (१२) भारद्वाज, (१३) मयूर, (१४) वगुल, (१५) शशघ्न, (१६) शुक, (१७) श्यामा, (१८) श्येनक (१९) श्रीकर्ण, (२०) हारीतश्चैतानि शाकुनिकपक्षिणा नामानि ।



पक्षपर्याया.—गरुत् (त्) छद, छदनम्, तनूरुहम् पक्ष, पतत्रम्, पत्रम्, पिच्छम् वाज ।

पक्षिकुलायप०—कुलाय, नीडम् पञ्जरम् ।

स्वामिप०—राट् (ज), राजा (अन), स्वामी (इन्), दोषस्तु रवौ ।

नागप०—काद्रवेय, नाग, बहुफणसर्प, मनुष्याकाररुणाल,इत्यूनयुक्तसर्प ।

नागराजप०—अनन्त नागराज, शेष, वासुकिहैव ।

नागपुरीप०—भोगवती ।

नागभेदा —(१) वासुकि, (२) तक्षक, (३) महापद्म, (४) कालीय, (५) कुलिक, (६) कम्बल, (७) वलाहक, (८) अश्वतरश्चैते नागानामष्टौ भेदा स्यु ।

तन्नामान्तरभेदा.—(१) अनन्त, (२) वासुकि (सर्पराज), (३) पद्म, (४) महापद्म, (५) तक्षक, (६) कुलीर, (७) कर्कट, (८) शंख इत्यते नामान्तरेण नागानामष्टौ भेदा स्यु ।

तदन्ये भेदा.—(१) कुमुद, (२) नन्दसारी (इन्), (३) कर्कोटक, (४) पृथुश्रवा (अस), (५) वासुकि, (६) तक्षक, (७) कम्बल, (८) अश्वतर (९) हेममाली (इन्), (१०) नरेन्द्र, (११) वज्रदंष्ट्र, (१२) विष, इत्येते नागाना द्वादशभेदा स्यु ।

**नागलोकपर्याया**–अधोभुवनम्, तलम्, नागलोक, पातालम्, बलिवेश्म (अन्), बलिसद्म (अन्) रसा, रसातलम्, वडवामुखम्।

**पातालभेदा**—(१) अतलम्, (२) वितलम्, (३) सुतलम् (नितलम्) (४) तलातलम् (गभस्तिमत्) (मतु०), (५) महातलम् (६) रसातलम् (सुतलम), (७) पातालम्, इत्येते पातालस्य सप्त भेदा स्यु।

**नागमातृपर्याया**—कद्रु, कद्रू, नागमाता (तृ)।

**लोकप०**—जगत्, जगती, पिष्टपम् भुवनम्, लोक, विश्वम, विष्टपम्।

**लोकभेदा**—(१) स्वर्लोक, (२) मर्त्यलोक, (३) पाताललोक, इत्येते लोकस्य त्रयो भेदा स्यु।

**तदन्यभेदाः**—(१) भूर्लोक (विषुवद्रेखा, (२) भुवर्लोक, (३) स्वर्लोक (आकाश) (४) महर्लोक, (५) जनलोक, (६) तपोलोक, (७) सत्यलोक इत्यते लोकस्य सप्तभेदा स्यु।

**भुवनभेदा**—(१) अतलम्, (२) वितलम् (नितलम्), (३) सुतलम् (वितलम्), (४) तलातलम् (गभस्तिमत), (५) महातलम-(तलम) (६) रसातलम् (सुतलम) (७) पातालम् (८) भू, (९) भुव, (१०) स्व, (११) मह (स) (१२) जन, (१३) तप (स्), (१४) सत्यश्चत्येते भुवनस्य चतुर्दशभेदा स्यु।

तदुक्तमग्निपुराणे—

पातालाना च सप्ताना लोकाना च यदन्तरम्।
शुषिरं तानि कथ्यन्ते भुवनानि चतुर्दश ॥ इति।

१-२८

**छिद्रवाचकशब्दा**—छिद्रम्, द्वारम्, रन्ध्रम्।

**छिद्रभेदा**—(२) द्वे नेत्र, (२) द्वे श्रवणे, (२) द्वे नासे, (१) मुखम्, (१) मेहनम्, (१) पायु श्चैतानि नवच्छिद्राणि स्यु।

**पन्नग (सर्प) पर्याया**—अनिलाशन, अहि, आशीर्विष, आशीविष, उरग, उरङ्ग, उरङ्गम, कञ्चुकी (इन्), कद्रुज, कद्रुसुत, काकोदर, काद्रवेय, कुण्डली (इन), कुम्भीनस, गूढपात् (द्) गूढपाद, गोकर्ण, चक्री (इन्), चक्षु कर्ण, चक्षु श्रवा (अस्), चिकुर, जलरुण्ड, जिह्म, जिह्मग दंष्ट्री (इन), दन्दशूक, दर्वीकर, दर्वीधृत् (त), दर्वीभृत् (त), दीर्घजिह्व, दीर्घपृष्ठ दीर्घरसन, दृक्कर्ण, दृक्श्रवा (अस्) दृक्श्रुति द्विजिह्व, द्विरसन, नकुलद्वेषा (अन्) पन्नग पवनाशन, पुष्कर, पृदाकु, प्रचलाकी (इन), फटी (इन्), फणकर, फणधर, फणभृत् (त), फणवान (मतु०), फणाकर, फणाधर, फणाभर, फणाभृत् (त्), फणावान् (मतु०) फणी (इन्), फुल्लरीक, बिलवासी (इन्), बिलशय, बिलशयन, बिलेवासी (इन्), बिलेशय, बिलौका (अस्), भुजग, भुजङ्ग, भुजङ्गम भेकभुक् (ज), भोगधर, भोगभृत (त्), भोगी (इन), लतारसन, लेलिहान, वायुभक्ष, विषधर विषध्र, विषायुध, विषास्य, व्याड, व्याल, श्वाल्क, श्वसनाशन, श्वसनोत्सुक समकोल, सरीसृप, सर्प, हरि, हीर।

**अरि (शत्रु) पर्याया**—अरि, रिपु, शत्रु,

२८-२९

सपत्न, शेपस्तु देवे।

स्वर्णप०—कनकम्, काञ्चनम्, सुवर्णम् स्वर्णम्, हाटकम्, शेपस्तु देवे।

काय(शरीर)प०—अङ्गम्, अवयवस्थानम् अवष्टाङ्गम् आङ्गम्, आत्मा (अन्), इन्द्रियायतनम्, करणम्, कलेवरम्, काय, कुलम्, क्षेत्रम गात्रम्, घन, चतु शाखम्, जस्तम्, तनु, तनु (उप्), तनू, दशरथ, देह, पञ्जर, पिण्ड, पुद्गल पु (र), पुरम्, पुरी (इन), पौरम्, प्रजनुक, प्रजानुक, बन्ध, बलम्, बेरम्, भू, भूघन, भूतात्मा (अन्), मूर्ति, मूर्तिमत् (मतु०), वपु (उप्), वर्ष्म (अन्), विग्रह, व्याधिमन्दिरम् व्याधिस्थानम् शकटम्, शरीरम्, शस्तम्, क्षितम्, षडङ्गम्—कम्, सहननम्, सञ्चर, सिनम्, सूत्रशाखम्, स्कन्ध, स्थानकम्, स्वर्गलोकेश।

विष्णुशक्तिभेदा —(१) आधारा, (२) वैष्णवी, (३) सूक्ष्मा, (४) लक्ष्मी, (५) पुष्टि, (६) निरञ्जना, (७) जीवनी, (८) मोहनी, (९) माया, चैता विष्णोर्नवशक्तय।

विष्णुपार्षदभेदा —(१) कुमुद, (२) कुमुदाक्ष, (३) गरुड, (४) जय, (५)जयन्त, (६) नन्द, (७) पुष्पदन्त, (८) प्रबल, (९) बल, (१०) विजय, (११) विष्वक्सेन, (१२) श्रुतदेव, (१३) सात्वत, (१४) सुनन्द इत्यादयो विष्णो पार्षदा स्यु।

श्रीकृष्णपर्याया – अरिष्टहा (अन्), अर्जुनसखा अर्जुनसारथि, कंसजित्(त्), कंसरिपु, कंसाराति, कालियदमन, कृष्ण, केशिहा (अन्), गदाग्रज, गोकुलेश, गोपाल—क, गोपीवल्लभ, गोपेन्द्र, गोवर्द्धनधर, चाणूरसूदन, जयन्ताग्रज, दामोदर, दाशार्ह, देवकीनन्दन, दैवकेयः, द्वारकेश, द्विविदारि धेनुकध्वंसी(इन्) नन्दनन्दन, नन्दात्मज, परमाण्वङ्गक, पाण्डवायन, पाण्डवाभील, पूतनादूषण, पूतनासूदन, पृश्निभद्र, पृश्निशृङ्ग, बभ्रु, बलानुज, बाणजित् (त्), मथुरेश, मार्ज, मुरलीधर, मुरारि, मैन्दमर्दन, यमलार्जुनभञ्जन, यादव, यादवेन्द्र, राधाकान्त, राधारमण, राधावल्लभ, रुक्मिणीप्रिय, लोहिताक्ष, वंशीधर, वनमाली (इन्), वसुदेवभू, वासुदेव, वासुभद्र, वृन्दावनेश्वरक, व्रजकिशोर, व्रजनाथ, व्रजमोहन, व्रजवर, व्रजवल्लभ, शकटारि, शिशुपालनिषूदन, शैलधर, शौरि, श्रीकृष्ण, श्रीकृष्णचन्द्र, षडङ्गजित् (त्), षड्विन्दु, सत्त्व, साल्वारि, सुभद्र, सौरि, स्मरदेहकृत् (त्)।



श्रीकृष्णपितृप०—आनकदुन्दुभि, कृष्णपिता (तृ), दिन्दु, देवकीपति, भूकश्यप, वसुदेव, शौरि, श्रीकृष्णजनक।

श्रीकृष्णमातृप०—क्षितिदिति, देवकसुता, देवकात्मजा, देवकी, दैवकी वसुदेववधू, श्रीकृष्णजननी।

पितृप०—उत्पादक, गुरु, जनक, जनयिता (तृ) जनिता (तृ), जनित्र, जन्मकारक, जन्मद, जन्य, तात, देहकर्ता (तृ), पिता (तृ) प्रसविता (तृ), वप्प, बीजी (इन्), रेतोधा (अस्), वप्ता (तृ), वप्र, वप्र, सविता (तृ)।

मातृप०—अक्का, अम्बा, अम्बालिका, अम्बिका, जननिः—नी, जनयित्री, जनिः, जनित्री, जनी, जानी, प्रसूः, मधुमती, माता (मावन्तः), माता (तृ), शिफा, सावित्री ।

राधाप०—राधा, राधिका, रासक्रीडेश्वरी, वृन्दावनेश्वरी, वृषभानुनन्दिनी, वृषभानुसुता, सुरभानुपौत्री ।

रुक्मिणीप०—कुण्डिनपुरपतिकन्या, प्रद्युम्नजननी, भीष्मकपुत्री, रुक्म्यनुजा, रुक्मिणी, विदर्भजा, विदर्भराजतनया, वदर्भी ।

श्रीकृष्णपत्नीभेदाः—(१) रुक्मिणी, (२) सत्यभामा, (३) जाम्बवती, (४) भद्रा, (५) लक्ष्मणा, (६) कालिन्दी, (७) मित्रविन्दा, (८) नाग्नजितिरचैताः श्रीकृष्णचन्द्रस्याऽष्टौ पत्न्यः स्युः

श्रीकृष्णभ्रातृ (बलदेव) पर्यायाः—अच्युताग्रजः, अनन्तः, एककुण्डलः, एकचरः, कामपाल, कालिन्दीकर्षणः, कालिन्दीभेदनः, गुप्तचरः, गुप्तवरः, तालध्वजः, तालभृत् (त्), तालाङ्कः, द्विविदहन्ता (न्तृ), नीलवस्त्रः, नीलाम्बरः, पौरः, प्रलम्बघ्नः, प्रलम्बभित् (द्), प्रलापी (इन्), प्रियमधुः, फालः, बलः, बलदेवः, बलभद्रः, बलरामः, बली (इन्), भद्रचलनः, भद्राङ्गः, मधुप्रियः, मुष्टिकघ्नः, मुशली (इन्), मुसली (इन्), यमुनाभित् (द्), यमुनाकर्षणः, रामः, रुक्मिदर्पः, रुक्मिदारणः रुक्मिदारी (इन्), रुक्मिभित् (द्), रेवतीरमणः, रेवतीशः रौहिणेयः, शेषाहिनामभृत् (त्), सवर्तकः, सवर्तकी (इन्), सङ्कर्षणः, सात्वत सितासितः, सीरपाणिः, सीरी (इन्), मुरावल्लभः, सौनन्दी (इन्), हलधरः, हलभृत् (त्), हलायुधः, हली (इन्), हालः ।

बलदेवमुशलपर्यायः—सौनन्दम् ।

मुशलप० – अयोऽग्रम्, अयोनिः, मुशलः, मुषलः, मुसलः ।

बलहलप०—सवर्तकः, संवर्तकाह्वयम् ।

हलप०—गोदारणम्, लाङ्गलम्, सीरः, हलम् ।

बलदेवमातृप०—बलदेवमाता (तृ), रामजननी, रोहिणी, वसुदेववधूः ।

बलदेवपुत्रप०—शठः ।

बलदेवपत्नीप०—रेवतात्मजा, रेवती, रोहिणीस्नुषा ।

बलदेवभगिनीप०—नन्दनन्दिनी, नन्दपुत्री, नन्दा, नन्दात्मजा, नन्दिनी, नन्दी, बलदेवाग्रजा, यशोदात्मजा, विन्ध्यवासिनी, विन्ध्याचलनिवासिनी, शेषस्तुमायाम् ।

भगिनीप०—जामिः, यामिः—मी, भगिनी, भगिनती, सहोदरा–री, सोदरा, स्वसा (सृ) ।

ज्येष्ठभगिनीप०–अग्रजा, अवन्ती, अम्बा, जामिः, ज्येष्ठा ।

कनिष्ठभगिनीप०—अनुजा, अम्बिका, अवरजा, कनियसी, कनिष्ठा, कन्यसा ।

कालिन्दीप०—अर्कसुता, अर्कात्मजा, कलिन्दकन्या, कलिन्दतनया, कलिन्दपुत्री, कलिन्दशैलजा, कालिन्दी, तपनतनूजा, तपनी, तापी, दिवाकरात्मजा, यमनी, यमभगिनी, यमस्वसा (सृ), यमानुजा, यमी, यमुना, शमनस्वसा (सृ), श्यामा, सूर्यजा, सूर्यतनया, सूर्यसुता ।

यमप०—कालः, यमः, शेषस्तु यमे।
मदिराप०—मदिरा, मद्यम्, सुरा, शेषस्तु वरुणे।
प्रियप०—प्रियः, वल्लभः।
नन्दप०—कृष्णतातः, गोपमुख्यः, नन्दः, यशोदाजानि:, वसुदेवसखा, व्रजेश्वरः।
यशोदाप०—कृष्णजननी, नन्दपत्नी, यशोदा, विन्ध्यवासिनीमाता (तृ), व्रजेश्वरी।
गोपप०—आभीरः, गोधुक् (ह्), गोपः, गोपालः, गोसख्य, वल्लवः।
गोपीप०—गोपवधूः, गोपसुता, गोपाङ्गना, गोपालिका, गोपिका, गोपी, राधासखी, व्रजाङ्गना।
गोकुलप०—गोकुलम्, नन्दावासः, श्रीकृष्णनिवासग्रामः।
व्रजभूमिप०—व्रजभूः, व्रजमण्डलम्।
वृन्दावनपर्यायौ—वृन्दावनम्, श्रीकृष्णावासः।
श्रीकृष्णजन्मपुरी (मथुरा)प०—मथुरा, मथूरा, मधुपुरी, मधुरा, मधुवनम्, मधूपघ्नम्।
नृपपर्यायाः—अर्यपतिः, अवनीपतिः, इनः, इलेशः, क्षितिपः, क्ष्माभुक् (ज्), क्ष्माभृत् (त्) दण्डधरः, नरदेवः, नरपः, नरपतिः, नरपालः, नरेन्द्रः, नाभिः, नायकाधिपः, नृपः, नृपतिः, नृपालः, पार्थः, पार्थिवः, पृथिवीशक्रः, प्रजापः, प्रजापतिः, प्रजेश्वरः, भूपः, भूपतिः, भूपालः, भूभुक् (ज्), भूभृत् (त्), भूमिपः, भूमीन्द्रः, मध्यलोकेशः, महीक्षित् (त्), महीपः, महीपतिः, महीपालः, मूर्धाभिषिक्तः, मूर्धावसिक्तः, राट् (ज्), राजा (अन्), लोकपालः, स्कन्दः, स्कन्धः।

उक्तं च हलायुधे—४२१

'राजा राजन्यो राट् प्रजापतिः' इति। श्लो० ४२१ अस्य टीकायां पृ० ५६४।
मथुरानृपप०—आहुकः, उग्रसेनः, कंसजनकः, कंसवतीतातः, देवकाग्रजः, देवकीपितृव्यः, श्रीकृष्णमातामहः।
नृपभेदाः—(१) मरुत्तः (आविक्षितः), (२) सुहो (हा) त्र (आतिथिनः), (३) अङ्गः, (बृहद्रथः), (४) शिविः (औशीनरः), (५) भरतः (दौष्यन्तिः), (६) रामः (दाशरथिः), (७) भगीरथः (गङ्गाजनकः), (८) दिलीपः (रघुजनकः), (९) मान्धाता (तृ) (यौवनाश्वः), (१०) ययातिः (नाहुषः), (११) अम्बरीषः (नाभागः), (१२) शशबिन्दुः (चैत्ररथः), (१३) गयः (आमूर्त्तरयसः), (१४) रन्तिदेवः (साङ्कृत्यः), (१५) सगरः (इक्ष्वाकुवंशजः), (१६) पृथुः (वैन्यः), इत्येते भारते षोडश महान्तो नृपतयः स्युः।
कंसपर्यायाः—आहुकात्मजः, उग्रसेनसुतः कंसः, कंसासोदरः, कृष्णमातुलः, जरासन्धजामाता (तृ)।
कंसाप०—आहुकतनुजा, उग्रसेनसुता, कंसभगिनी, कंसवती कंसा, वसुदेवानुजपत्नी।
श्रीकृष्णनिवासपुरीप०—अब्धिनगरी, द्वारकः, द्वारका, द्वारकापुरी, द्वारवती, द्वारावती, द्वारिका, वनमालिनी।
श्रीकृष्णमालाभेदौ—(१) नन्दनमाला (२) वनमाला, चैते द्वे माले स्याताम्।
श्रीकृष्णमन्त्रिपर्यायौ—उद्धवः, पवनव्याधिः।

श्रीकृष्णस्यन्दनप०—शतानन्दः ।

श्रीकृष्णसखिप०—अर्जुन., धनञ्जय, पार्थ. ।

श्रीकृष्णसारथिभेदौ—(१) दारुक, (२) सात्यकि., येतौ द्वौ सारथी स्याताम् ।

सात्यकिपर्याया—पार्थशिष्यः, युयुधान, शिनेर्नेप्ता (प्तृ), सात्यकिः ।

श्रीकृष्णहयभेदाः—(१) मेघपुष्प, (२) वलाहक, (३) शैव्यः, (४) सुग्रीवश्चैते श्रीकृष्णरथस्य चत्वारोऽश्वा स्युः ।

प्रद्युम्नपर्याया—कार्ष्णि, कृष्णजनु. (उष्), कृष्णजन्मा (मन्), झषकेतन, झषध्वज, प्रद्युम्न, मकरकेतन, मकरध्वज, मकराङ्कक., मीनकेतनः, मीनकेतु, मीनाङ्क, रुक्मिणीनन्दनः, शवरारि, शम्बरसूदन, शम्बरारिः, शूर्पकारातिः, शूर्पकारि, श्रीकृष्णपुत्रः ।

तत्पत्नीभेदौ–(१) रति, (२) रुक्मिपुत्री चैते द्वे भार्ये स्त ।

अनिरुद्धपर्याया—अनिरुद्ध., उषापति., उषारमण., उषेश., ऋश्यकेतु ऋष्यकेतन, ऋष्यकेतु, ऋष्याङ्क, झषकेतु, बाणारि, ब्रह्मसू, विश्वकेतु ।

तत्पत्नीप०—अनिरुद्धभार्या, उषा, ऊषा, चित्रलेखासखी, प्रद्युम्नस्नुषा, बाणासुरसुता, विन्ध्यावलीपौत्री ।

शिवपर्यायाः—अकृतव्रण., अर्दंत, अग्निलोचन, अजः, अञ्जन, अट्टहास, अण्डकलोचन, अद्रिधन्वा (न्वन्), अन्धकरिपु, अन्धकसूदन, अपराजित, अब्दवाहनः, अम्बरीष, अर्द्धकाल, अर्द्धमकुटः, अव्ययः, अष्टमूर्ति, असुरारि, अस्थिधन्वा (न्वन्), अहिपर्यङ्क, अहिबुध्नः, अहिब्रध्नः, अहिर्बुध्न्य, आशावासाः (सस्), ईशः, ईशानः, ईश्वरः, उ, उग्रः, उड्डीशः, उन्मत्तवेशः, उमापति, उलन्दक, ऊर्ध्वरेताः (तस्), एकदृक् (श्), एकलिङ्ग, कङ्कटीक, कटपू, कटमर्दः, कटाटङ्क, कण्ठेकाल, कपर्दी (इन्), कपालभृत् (त्), कपाली (इन्), कपिशः, कामारि, कालकण्ठ, कालञ्जरः, कूटकृत् (त), कृतकर, कृत्तिवासाः (सस्), कृशानुरेताः, केदार, कोपवादी (इन्), कोलः, क्रतुध्वंसी (इन्), खट्वाङ्गी (इन्), खण्डपरशु, खण्डपर्शु, खर, गङ्गाधरः, गजदैत्यभित् (द्), गजारिः, गिरिश, गिरीशः, गुडाकेश, गुरु, गुह्य, गुह्यगुरु., गोपतिः, गोपालः, घसः, चन्दिलः, चन्द्रमौलि, चन्द्रशेखर, जगद्योनि, जटाझाट, जटाटीर, जटाटीरः, जटावान् (मतु॰), जयन्तः, जोटिङ्ग, झाण्डः, झिण्टिकान्त, झोटिङ्गः, डिण्डीशः, तमोहा (हन्), तरुणेन्दुशेखर, त्रिपुरान्तक, त्रिपुरारिः, त्रिलोचनः, त्र्यम्बकः, दक्षाध्वरराति, दशबाहु, दक्षाध्वप, दशोत्तम, दिगम्बर, दिग्वासाः (सस्), दिशाप्रियः, दिशाप्रियतमः, दृगायुद्ध, देवर्षि, धूम, धूर्जटिः, धूर्तकूट, ध्रुव, नटराट् (ज्), नन्दिवर्द्धनः, नराधार, नरास्थिमाली (इन्), नवशक्ति, नाट्यप्रिय, नीलकण्ठ, नीलग्रीव, नीललोहितः, पञ्चमुख, परमेश्वर, पशुपति, पांशुचन्दन, पिङ्गदृक् (श्), पिनाकी (इन्), पुरद्विट् (ष्),

प्रमथाधिप, प्रहस, वक, बभ्रु, बहुरूप, बुद्ध, भगनेत्रान्तक, भगाली (इन्), भद्राक, भद्रेश्वर, भरु, भर्ग, भर्ग्य, भव, भालदृक् (श्), भाललाञ्छन, भीम, भीष्म, भूतेश, भूमिकाय, भैरव, भोग, भौलिक, म, मखरिपु, मन्दरमणि, महाकाल महाङ्गीन, महादेव, महानट, महानाद, महाम्बुक, महाव्रत, महाव्रती (इन्), महेश, महेश्वर, मिहिराण, मृड, मृत्युञ्जय, योगी (इन्), रुद्र, रुलन्द, रेरिहाण, रेवत, लुलायवाहारि, वर, वरद, वराक, वर्वट, वह्निरेता (अस्), वाम, वामदेव, वार्वाहवाह, विरूपाक्ष, विशालाक्ष, विषान्तक, विहाय, शिरोरुह, वृद्ध, वृषकेतु, वृषध्वज, वृषपर्वा (अन्), वृषवाहन, वृषाकपि, व्योमकेश, शङ्कु, शम्भु, शर्व, शवर, शशिभूषण, शशिशेखर, शायी (इन्), शितिकण्ठ, शिपिविष्ट, शिव, शिवेश, शिशिर, शूली (इन्), शैलवासी (इन्), श्मशानसद्मा (अन्), श्रीकण्ठ, षाण्ड, सञ्ज, सन्ध्यानाटी (इन्), समुद्रवाहन, सम्बरारि, सर्वग सर्वज्ञ, सर्वतोमुख, सितांग, सुप्रसाद, सुभग, सुमहान् (त्), स्त्रीदेहार्द्ध, स्थाणु, स्थाल, स्मरशासन, स्मरहर, स्वभू, ह, हर, हरि, हिरण्यरेता (अस्), हीर, नटराजराज।

सर्वन्ये पर्याया—अघीश, अर्द्धनारीश, कङ्कालमाली (इन्), काशीनाथ, कुलेश्वर, कैलासनिकेतन, खेचर, तीव्र, देवदेव, धरणीश्वर, नन्दीश्वर, प्रियतम, फणधरधर, भीरु, भीषण, भूरिः, भृङ्गीश, यमान्तक, रसनायक, शिपिविष्ट, सिद्धदेव, हररूप, हिण्डी (इन्), हिमाद्रितनयापति।

शिवस्याष्टमूर्तिभेदा—(१) सर्व (क्षितिमूर्ति), (२) भव (जलमूर्ति), (३) रुद्र (अग्निमूर्ति), (४) उग्र (वायुमूर्ति), (५) भीम (आकाशमूर्ति), (६) पशुपति, (यजमानमूर्ति), (७) महादेव (चन्द्रमूर्ति), (८) ईशान (सूर्यमूर्ति), इत्येते शरभमूर्तें शिवस्याष्टपादा स्यु।

आशापर्याया—आशा, दिक्, दिशा शेषस्तु दिशि।

वासप०—वस्त्रम्, वास (अस्), शेषस्तु रवौ।

कालप०—काल, नील, श्याम, शेषस्तु शनौ।

कण्ठप०—कण्ठ, गल, निगरण।

कृत्ति (चर्म) प०—अजिनम्, अमृग्धरा, कृत्ति, चर्म (अन्), छवि, छादनी, त्वक (च्)।

गिरिप०—अद्रि, गिरि, पर्वत, शपस्तु देवे।

शिवगिरि (कैलास) प०—अष्टापद, कैलास, धनदावास, रजताद्रि, स्फटिकाचल, हराद्रि, हिमवद्द (द) स।

ईशप०—ईश, स्वामी, शेषस्तु रवौ।

रजतप०—इन्दुलोहम् कम्, कलधौतम्, कुप्यम्, कुमदाह्वयम्, खजुरम्, खर्जूरम्, चन्द्रभौत, चन्द्रभूति, चन्द्रलोहम्—कम्, चन्द्रवपु (उष्), चन्द्रहासम्, चन्द्राह्वयम्, जवीयसम्, तप्तरूपकम्, तारम्, नापुपम् दुर्वर्णम्, कम्, धौलम्, भीरुकम्, महावसु महावसु महाशुभ्रम्, यवीयसम्, रङ्गवीजम्, रजतम्, रश्मिजालम्, राजरङ्गम्, रुचिरम, रूप्यम्, रौप्यम्, लोहराजकम्, वङ्गजी-

वनम्, वसु, वसुश्रेष्ठम्, वाक्यलम् शुभ्रम्, शोध्यम्, श्रेष्ठम्, श्वेतम् कम्, सितम्, सुभीरु, सुप्रभीरु, सौधम्, सौम्यम् ।

गुडाका (निद्रा) पर्याया —गुडाका, तन्द्रा, तन्द्रि – न्द्री, तामसी, नन्दीमुखी, निद्रा, प्रमीला, शयनम्, श्वासहेति (स्त्री), सलय, संवेश, स्वप्नम्, स्वाप ।

अधिकनिद्राप०—सुखसुप्तिका, सुप्तम्, सुस्वाप, जटाप०—जटा, सटा ।

चन्द्रप०—इन्दु, चन्द्र, विधु, शशी (इन्) शेषस्तु चन्द्रे ।

शेखरप०—अवतंस, आपीड, उत्तंस, वतंस, शेखरः ।

गङ्गाप०—अर्घ्यतीर्थं., अलकनन्दा, उग्रशेखरा, ऋषिकुल्या, कुमारसू, खापगा, गङ्गका, गङ्गा, गङ्गाका, गङ्गिका, गान्दिनी, गान्धिनी, जह्नुकन्या, जह्नुतनया, जह्नुप्रजा, जह्नुसुता, जाह्नवी, ज्येष्ठा, तीर्थराज, त्रिदशदीर्घिका त्रिपथगा, त्रिमार्गगा, त्रिमार्गा त्रिस्रोता (अस), त्र्यध्वगा, देवनदी, देवसिन्धु, देवापगा, धर्मद्रवी, नन्दिनी, निर्जरनिम्नगा, पुण्या, भगीरथप्रजा, भवायना, भागीरथी, भीष्मजननी, भीष्मसू, मन्दाकिनी, रुद्रशेखरा, विष्णुपदी शिवशेखरा, शुभ्रा, शैलेन्द्रजा, समुद्रसुभगा, सरिद्वरा, सितसिन्धुः, सिद्धसिन्धु, सिद्धापगा, सुधा, सुरदीर्घिका, सुरनदी, सुरनिम्नगा, सुरवृन्द वन्दितपदा, सुरसरित् (त्), सुरसरिद्वरा, सुरापगा, सुरालयगमा, स्वरपगा, स्वर्गवापी, स्वर्गसरिद्वरा, स्वार्यपगा, स्वर्णदी, स्वर्धुनी, स्ववापी स्वरपगा, हरशेखरा, हिमाद्रिसुता, हैमवती ।

शिखाप०—केशपाशी, केशी, चूडा, शिखण्डिका, शिखा ।

मौलि (मुकुट) प०—उष्णीषम्, किरीटम्, कोटीरम् मकुट, मुकुटम्, मौलिः ।

जगत्प०— जगत्, भुवनम्, लोक, शेषस्त्वत्रैव ।

योनिप०—कारणम्, शेषस्त्वत्रैव ।

शिवस्य दशाऽव्ययभेदा —(१) ज्ञानम्, (२) वैराग्यम्, (३) ऐश्वर्यम्, (४) तप (अस्), (५) सत्यम्, (६) क्षमा, (७) धृति, (८) स्रष्टृत्वम्, (९) आत्मसम्बन्ध (१०) अधिष्ठातृत्वम्, इत्येते शिवस्य दशाऽव्यया स्यु ।

नरपर्याया —नर, मनुज, मानव, शेयस्तु देवे ।

अस्थिप०—अस्थि (न०), कर्कर, कीकसम्, कुल्यम् देहधारकम्, भारद्वाजम्, मज्जकृत् (त्), मांसपित्तम्, मेदस्तेज (अस्) (न०), मेदोजम्, श्वदयितम् सार, हड्डम् ।

मालिप०—मालावान् (मतु०), माली (इन्) ।

नाट्यप०—ताण्डवम्, नटनम्, नर्तनम्, नाट्यम्, नृत्तम्, नृत्यम्, लास्यम् ।

प्रिय०—प्रिय, वल्लभ, शेषस्त्वन्यत्र ।

कालपर्याया—काल, कृष्ण, नील, शेषस्तु शनौ

ग्रीवाप०—कन्धरा, ग्रीवा, धमनि, शिरोधरा, शिरोधि ।

भालप०—अलिकम् अलीकम्, गोधि. (स्त्री०) । भालम्, ललाटम् ।

१–२८ २९–५६

दृक्प०—अक्षि (न्) दृक् (श्), नयनम्, नेत्रम् शेषस्त्वन्यत्र ।

लुलाय(महिष) प०—कासरः महिषः, लुलायः शेषस्तु यमे ।

वाहप०—यानम्, वाहः, वाहनम्, शेषस्तु ब्रह्मणि ।

अरिप०—अरिः, रिपुः, शत्रुः, सपत्नः, शेषस्तु देवे ।

शिवशत्रुभेदाः—(१) कामः, (२) अन्धकः, (३) यमः, (४) गजः, (५) पुरः (त्रिपुरः), (६) पूषा (अन्), (७) मखः इत्यादयः शिवस्य शत्रुभेदाः स्यु ।

शिवजटापर्यायाः—कपर्दः, जटाजूटः, जटाबन्धः ।

शिवासनप०—खट्वाङ्गः, सुखंधुणः, सुखंसुण ।

शिवधनुःप०—अजकावम्, अजगवम, अजगावम्, अजीगवम्, आजगवम्, पिनाकम्, पुरयम् ।

शिवशक्तिभेदाः—(१) वामा, (२) ज्येष्ठा, (३) शिवा, (४) रौद्री, (५) चित्तोन्मादकरी, (६) सुखा, (७) काली, (८) कलेवरा, (९) भूतदमनी, इत्येताः शिवस्य नव शक्तयः स्युः ।

ब्राह्मयादिसप्तमातृभेदाः—(१) ब्राह्मी, (२) माहेश्वरी, (३) कौमारी, (४) वैष्णवी, (५) वाराही, (६) इन्द्राणी (ऐन्द्री), (७) चामुण्डा (नारसिंही), इत्येता ब्राह्मयाद्याः सप्तमातरः स्युः ।

ऐश्वर्यपर्याया—ऐश्चर्यम्, भूतिः, विभूतिः ।

ऐश्वर्य्य (सिद्धि) भेदाः—(१) अणिमा(अन्), (२) महिमा (अन्), (३)गरिमा(अन्), (४) लघिमा (अन्), (५) प्राप्तिः (स्त्री०), (६) प्राकाम्यम्, (७) ईशित्वम्, (८) वशित्वम्, इत्येता अष्टसिद्धयः स्युः ।।

शिवपारिषदपर्यायाः—गणः, परिषदः, पार्षदः, पार्षद्यः, प्रमथः ।

शिवगणविशेषप०—कृतालकः, भेलकः, हेलकः ।

शिवप्रतीहारप०—तण्डुः, ताण्डवतालिकः, तुण्डी (इन्), द्वाःस्थः, नन्दिः—कः, नन्दिकेश्वरः, नन्दिशः, नन्दी (इन्), नन्दीश्वरः ।

शिवगणदेवता—कुष्माण्डः—कः, कूष्माण्डः—कः केलकिलः, गणपतिप्रियः ।

शिवद्वारपालविशेषप०—अस्थिविग्रहः, चर्मी (इन्), नाडीदेहः, नाडीविग्रहः, भृङ्गरिटः—टिः, भृङ्गरीटिः, भृङ्गी (इन्), महाकायः, महाकालः, महाभीमः, श्टङ्गी(इन्), लूनदोः (ष्), लूनबाहुः, शलः ।

शरभरूपिशिवपर्यायौ—भैरवः, महाभैरवः ।

वीरभद्रप०—देवाजः, वीरभद्रः, ह्रीराजः ।

शिववाहनप०—दक्षः, वृषः ।

गोप०—अनड्वान् (डुह्), उक्षा (अन्), ऋषभः, ककुद्मान् (मतु०), गौः (गो), बलीवर्दः, भद्रः, वाडवेयः, वृषः—भः, शक्वरः, शाक्वरः, शाङ्करः, सौरभेयः ।

गोभेदाः—ग्रन्थान्तरे द्रष्टव्याः ।

पार्वतीपर्यायाः—अद्रिजा, अनन्ता, अपरुजा, अपर्णा, अमोघा, अम्बिका, अष्टादशभुजा, आर्या, इन्द्रभगिनी, इन्द्रस्वसा (सृ), ईश्वरा-री, उग्रचारिणी, उमा, एकपर्णा, एकपाटला, एकानंशा, करालिका, कर्बुरी, कलापिनी, कान्तारवासिनी,

कात्यायनी, कालञ्जमा, कालञ्जरी, कालदमनी, कालरात्री, कालायनी, काली, किराती, कुण्डा, कुन्द्रा, कुमारी, कुलदेवता, कुला, कुलेश्वरी, कुह्वती, कृष्णपिङ्गला, कृष्णभगिनी, कृष्णस्वसा (सृ), कृष्णा, केशी, कैटभी, कोटवी, कोटिश्री·, कौशिकी, क्षेमङ्करी, क्षेमा, गणनायिका, गदिनी, गान्धर्वी, गार्गी, गिरिजा, गोकुलोद्भवा, गोला, गौतमी, गौरी, घनाञ्जनी, चण्डिका, चण्डी, चारणा, जयन्ती, जया, जागुली, जारी, तामसी, त्र्यम्बका, दक्षकन्या, दक्षजा, दर्दुरा, दाक्षायणी, दुर्गा, दृषद्वती, नकुला, नन्दपुत्री, नन्दयन्ती, नन्दा, नन्दिनी, नारायणी, निरञ्जना, निशुम्भमथनी, नीलवस्त्रा, परमब्रह्मचारिणी, परमेष्ठिनी, पार्वती, पितृगणा, पुरजाः (ग्रस्), प्रकीर्णकेशी, प्रकूष्माण्डी, प्रगल्भा, प्रभा, बदरीवासा, बर्हिध्वजा, बलदेवभगिनी, बलदेवस्वसा (सृ), बहुपुत्री, बहुभुजा, बाभ्रवी, ब्रह्मचारिणी, भगवती, भद्रकाली, भवानी, भीमा, भूतनायिका, भ्रामरी, मन्दरवासिनी, मन्दरावासा, मलयवासिनी, महाकाली, महाजया, महादेवी, महानिशा, महामाया, महारात्री, महरौद्री, महाविद्या, महिषमथनी, मातृमाता (तृ), मानस्तोका, मृडानी, मेनकात्मजा, मेनाजा, मेनात्मजा, मैनाकभगिनी, मैनाकस्वसा (सृ), यमभगिनी, यमस्वसा (सृ), यादवी, योगिनी, रक्तदन्ती, रामभगिनी, रामस्वसा (सृ), रुद्राणी, रेवती, रौद्री, लम्बा, वरदा, वरा, वारालिका, वारुणी, विकचा, विकराला, विजया, विन्ध्यनिलया, विन्ध्यवासिनी, विन्ध्याचलनिवासिनी, विरजाः (ग्रस्), विलङ्का, विशालाक्षी, शक्तिः, शण्डिली, शतमुखी, शर्वाणी, शाकम्भरी, शिखरवासिनी, शिवदूती, शिवा, शिवी, शुम्भमथनी, शूलधरा, शूलधृत् (त्), शैला, शैलेयी, षष्ठी, सती, सर्वमङ्गला, सावित्री, सिंहयाना, सिंहरथा, सिंहवाहना, सिनीवाली, सुनन्दा, सौः, स्कन्दमाता, (तृ), ह्रासा, हिण्डी, हिमा, ह्रीरी, हैमवती ।

**पार्वतीसखीभेदौ**—(१) जया, (२) विजया, चैते, पार्वत्या द्वे सख्यौ स्याताम् ।

**पार्वतीवाहनपर्यायः**—मनस्ताल. । एष पार्वतीसिंहस्य नाम ।

**यानप०**—यानम्, वाहनम्, शेषस्तु ब्रह्मणि ।

**सिंहप०**—अगोकाः (ग्रस्), इभारि·, कण्ठीरवः, करिदारकः, करिमाचलः, केशरी (इन्), केशी (इन्), केसरी (इन्), क्रव्यात् (द्), क्रव्यादः, गजमोचनः, गणेश्वरः, गन्धोष्णीषः, गर्जितासह·, चित्रकायः, तुल्यविक्रमः, दशमीस्थः, दीप्तः, दीप्तपिङ्गलः, दृप्तः द्विरदान्तक·, नखरायुधः, नखी (इन्), नगौकाः (ग्रस्), नभ· क्रान्तः, पञ्चनख·, पञ्चमुखः, पञ्चशिख·, पञ्चाननः, पञ्चास्यः, पलङ्कषः, पारिन्द्र, पारीन्द्रः, पुण्डरीकः, बली (इन्), बहुबलः, भीमविक्रमः, भीमविक्रान्तः, मरुत्प्लवः, महानाद·, महावीरः, मानी (इन्), मृगदृष्टिः, मृगद्विट् (ष्), मृगपतिः, मृगराट् (ज्), मृगराजः, मृगरिपु·, मृगाधिप., मृगारिः, मृगाशनः, मृगेन्द्रः, रक्तजिह्वः, लग्नोकाः (ग्रस्), वनराज·, विक्रमी (इन्), विक्रान्तः, व्यादीर्णास्यः, शार्दूलः, शूरः, शृङ्गोष्णीष·, शैलाट·, श्वेतपिङ्गः, श्वेतपिङ्गलः

सकृत्प्रज, सटाङ्क, सिंह, सुगन्धि—क, हरि, हरित, हर्य्यक्ष, हस्तिशत्रु।

चामुण्डाप०—कपालिनी, कर्णमोटी, चण्डमुण्डा, चर्चिका, चर्चा चर्ममुण्डा, चामुण्डा, भैरवी, महागन्धा, महाचण्डी, मार्जारकर्णिका।

गणेशप०—आखुग, आखुयान, आखुरथ, एकदंष्ट्र, एकदन्त एकरद, गजवदन, गजानन, गजास्य, गणपति, गणाधिप, गणेश, चतुर्भुज, तुन्दिल निघातुक, द्विशरीर, द्वैमातुर, नागानन, परशुधर, परशुभृत (त्), पशुपाणि, पृश्निगर्भ, पृश्निशृङ्ग, प्रमथाधिप, मूषवाहन, मूषिकरथ मोदकवल्लभ, लम्वजठर, लम्बोदर, वक्रपाद, वक्रभुज, वक्रतुण्ड, विघ्ननायक विघ्ननाशक, विघ्ननाशन, विघ्नराज, विघ्नविनायक विघ्नहारी (इन्) विघ्नेश, विघ्नेशान, विघ्नेश्वर, विनायक, विषाणान्त, शिवपुत्र, सदामद, सिन्दूरवल्लभ हस्तिमल्ल, हस्तिमुख, हस्तिराज, हेरम्ब।

गजप०—अनेकप, अन्तःस्वेद, अन्तःस्वेदी (इन), अप्रस्वेद, असुर, इभ, कज, कटी (इन्), कपि, कम्बु, करटी (इन्), करि, करी (इन्), करेणु, कुञ्जर, कुम्भी (इन्), कुपी (इन), गज, गम्भीरवेदी, (इन), गर्ज जटी (इन्), जलकाङ्क्ष, जलकाङ्क्षी (इन्) जलकान्त, जलाकाङ्क्ष, जलाकाङ्क्षी (इन्), दन्तावल, दन्ती (इन्), दीर्घपवन, दीर्घमारुत, द्विदन्त द्विप, द्विपायी (इन) द्विरद द्विविषाणक, ध्वज, नाग, निर्झर, निर्लून, पद्मी (इन्), पिचिल, पिण्डपाद, पीलु, पुष्करी (इन्), पेचकी (इन्), पेचिल, मतङ्ग, मतङ्गज, मदवृन्द, महामद, महामृग, महाशय, मातङ्ग, मृग, रदी (इन्), राजिल, राजीव, लतारत, लतालक, वारण, वाराङ्ग, विलोमजिह्व विलोमरसन, वेतण्ड, व्याल, शुण्डाल, शुण्डाली (इन्), शूर्पकर्ण, षष्टिहायन, सामज, सामयोनि, सामोद्भव, सिन्धुर, सूचिकाधर, सूर्पकर्ण, सूर्पश्रुति, स्तम्बरम, हस्ती (इन्)।

गजभेदा—(१) ऐरावत, (२) पुण्डरीक इत्यादयो गजस्याष्टौ भेदा स्यु। शेषस्तु दिग्वर्गे।

द्वैमातुरभेदौ -(१) दुर्गा, (२) चामुण्डा। इति।

अथवा—

(१) दुर्गा, (२) हस्तिनी, चैते गणेशस्य द्वे मातरौ स्याताम्।

मूषकपर्याया—आखु, उन्दर, उन्दुर, उन्दुरु, खनक, मुषक, मूष—क, मूषिक, वज्रदशन, वृष, वृषलोचन, सूच्यास्य।

वाहनप०—यानम्, वाहनम्, शपस्तु ब्रह्मणि।

मोदकप०—मोदक, लड्डुक।

वल्लभप०—प्रिय, वल्लभ।

लम्बप०—दीर्घ, लम्ब।

उदरप०—उदरम्, कुक्षि, गर्भ, जठरम् तुन्दम्, तुन्दि (स्त्री०) पिचण्ड, मलुक, रोमलताधार।

स्कन्दप०—अग्निजन्मा (मन्), अग्निभू, अग्निसुत, उमासुत, करवीरक, कान्त, कामजित्, (त्), कामद, कार्तिकेय, कुक्कुटध्वज, कुमार,

कृत्तिकासुत, क्रौञ्चदारणः, क्रौञ्चवैरी (इन्), क्रौञ्चाराति, क्रौञ्चारि, गङ्गासुत, गाङ्गेय, गुह, गौरीपुत्र, गौरीसुत, गौरेय, चण्ड, जयन्त, तारकजित् (त्), तारकवैरी (इन्), तारकान्तक, तारकारि, दिगम्बर, देवसेनापति, द्वादशबाहुक, द्वादशाक्ष, नीलदण्ड, पवित्र, पार्वतीनन्दन, बर्हिणवाहन, बालचर्य्य, बाहुलेय ब्रह्मगर्भ, ब्रह्मचारी (इन्), भूतेश, मयूरकेतु, मयूररथ, महातेजा, (अस्), महासेन, महीपार्वन, महौजा (अस्), मातृवत्सल, रेवतीज, वासुदेवप्रिय, विशाख, विश्वामित्रप्रिय, वैजयन्त, शक्तिजन्मा (अन्), शक्तिधर, शक्तिपाणि, शक्तिभृत् (त्) शरज, शरजन्मा (अन्), शरभू, शरवणोद्भव, शिखिवाहन, शिशु, शीघ्र, शुचि, षडानन, षण्मुख, षष्ठीस्वामी, षाण्मातुर, सिद्धसेन, सुब्रह्मण्य, सेनानी (पु०), स्कन्द, स्वामी (इन्), स्वाहेय ।

तत्पत्नीप० –जयन्ती, देवसेना । शेषस्त्विन्द्रपुत्र्याम् ।

तदस्त्रप०—शक्ति (स्त्री०) ।

तत्पृष्ठजप०—नैगमेय, विशाख, शाख ।

तद्वाहनप०—केकी (इन्), खिलखिल्ल, गरघ्न, चन्द्रकी (इन्), चित्रपिङ्गल, नगावास, नीलकण्ठ, नृत्यप्रिय, बर्हिण बर्ही (इन्), बहुलग्रीव, मयुक, मयूर, मरुक, मार्जारकण्ठ, मेघनादानुलासक, मेघसुहृत् (द्), शिखावल, शिखी (इन्), शुक्लापाङ्ग, सर्पभुक् (ज्), स्थिरमद ।

तद्गण प०—बालग्रहा, पूतनाद्या ।



क्रौञ्चपर्वतपर्याया.—क्रौञ्च, क्रुञ्च, श्रौञ्च ।

दारणप०—दारणम्, विदारणम् ।

इति श्रीमुकुन्ददैवज्ञविरचिते ज्यौतिषशब्दकोषे चतुर्दशो देववर्गः समाप्तिमगमत् ।

— ० —

## दिग्वर्गः—

दिक्पर्याया—आशा, ककुप् (भ्), ककुभा, काष्ठा, गो (गो), दिक् (श्), दिशा, दीर्णी, देववधू, सरि, हरित् हरिता ।

विदिक्प०—अपदिशम् (अ०), अवान्तरदिशा, उपदिक् (श्), प्रदिक् (श्), विदिक् (श्) ।

दिग्भेदा—(१) पूर्वा, (२) आग्नेयी, (३) दक्षिणा, (४) नैर्ऋती, (५) पश्चिमा, (६) वायवी, (७) उत्तरा, (८) ऐशानी, (९) ऊर्ध्वा, (१०) अधरा, चैते दिशा दशभेदा स्युः ।

पूर्वापर्याया—अपरेतरा, अमरेड्दिक्, उदयाचलावच्छिन्नदिक्, ऐन्द्री, पुरः (स्) (अ०), पूर्वा, पौरन्दरी, प्राक् (अ०), प्राञ्च् (त्रि०), प्राग्भाग, प्राची, मघोनी, मङ्गला, माघवती, सूर्योदया, हरिदिक् (श्) ।

आग्नेयोप०—आग्नेयी, चराशा, वह्निदिक् । (श्),

दक्षिणप०—अगस्त्यपूता, अपाक् (त्रि०) । अवाक् (अ०), अवाञ्च् (त्रि०), अपाची, अवाची, उत्तरेतरा, दक्षिणदिक् (श्), दक्षिणा, यामी, याम्या, वैवस्वती, शामनी ।

निर्ऋतीप०—अन्यकी, निर्ऋती, निर्ऋतीदिक्,

(श्), नैऋती, रक्षोदिक्-(श्)।

पश्चिमाप०—अपरा, अस्ताचलावच्छिन्नदिक् (श्), चरमाद्र्यवच्छिन्नदिक् (श्), पश्चिमा, पूर्वेतरा, प्रतीची, प्रत्यक् (त्रि०), प्रत्यक् (अ०), वरुणदिक् (श्), वरुणदेश', वारुणी, सूर्यास्ता।

वायवीप०— अनन्ता, मारुती, वायवी, वायव्या, वायुदिक् (श्)।

उत्तराप०—अपाचीतरा अवाचीतरा, उत्तरा, उदक् (अ०), उदङ् (पुं०), उदीची, कौबेरी, दैवी, सप्तर्षिपूता।

ऐशानीप०—अपराजिता, ईशानः, ईशानदिक् (श्), ऐशानी, त्रिनेत्रदिक् (श्), शार्वी, शालाक्षा, शिवाशा।

ऊर्ध्वाप०—उपरिष्टाद्दिक् (श्), ऊर्ध्वा, ब्राह्मी।

अधराप०—अधरा, अधस्ताद्दिक् (श्), अधोदिक् (श्), नागी, नारकी।

दिग्भववस्तुप०—दिग्भवम् (त्रि०), दिश्यम् (त्रि०)।

प्राग्भवप०—प्राक् (अ०), प्राङ् (त्रि०), प्राचीनम् (त्रि०), प्राग्भवः (त्रि०)।

अपाग्भवप०—अपाग् (त्रि०), अपाग्भवः (त्रि०), अपाचीनम् (त्रि०), अपाच्यम् (त्रि०), अवाङ् (त्रि०), अवाचीनम् (त्रि०)।

प्रत्यग्भवप०—प्रत्यक् (अ०), प्रत्यक् (त्रि०), प्रत्यग्भवः (त्रि०), प्रतीचीनम् (त्रि०)।

उदग्भवप०—उदक् (अ०) उदक् (ञ्च्) (त्रि०), उदग्भवः (त्रि०) उदीचीनः (त्रि०)।

तिर्यग्भवप०—तिरश्चीनः (त्रि०), तिर्यक् (ञ्च्), (त्रि०), तिर्यग्भवः (त्रि०)।

दिग्गजभेदाः—(१) ऐरावतः, (२) पुण्डरीकः (३) वामनः, (४) कुमुदः, (५) अञ्जनः, (६) पुष्पदन्तः, (७) सार्वभौमः, (८) सुप्रतीकः, इत्येतेऽष्टौ पूर्वतः क्रमाद् दिग्गजाः स्युः।

दिग्गजपत्नीभेदाः—(१) अभ्रमुः, (२) कपिला, (३) पिङ्गला, (४) अनुपमा, (५) ताम्रकर्णी, (६) शुभ्रदन्ती (शुभदन्ती), (७) अङ्गना, (८) अञ्जना (अञ्जनावती), इत्येता अष्टौ ऐरावततः क्रमतो दिग्गजपत्न्यः स्युः।

दिगीशग्रहभेदाः—(१) रविः, (२) शुक्रः, (३) भौमः, (४) राहुः, (५) शनिः, (६) चन्द्रः, (७) बुधः, (८) बृहस्पतिः, इत्येते पूर्वदिशः क्रमाद्दिगीशा ग्रहाः स्युः।

तदुक्तममरसिंहेन—

'रविः शुक्रो महीसूनुः स्वर्भानुर्भानुजो विधुः। बुधो बृहस्पतिश्चेति दिशामीशास्तथा ग्रहाः।' इति।

चन्द्रदिक्चारपर्यायाः—चन्द्रदिक्चारः, चन्द्रदिङ्निवासः, चन्द्राशाचारः, चन्द्राशावासः।

चन्द्रदिक्चारभेदाः—(१) मेष-सिंह-धनुर्भगतचन्द्रस्य प्राच्यां वासः। (२) वृष-कन्या-मकरभगतचन्द्रस्यावाच्यां वासः। (३) मिथुन-तुला-कुम्भगतचन्द्रस्य प्रतीच्यां वासः। (४) कर्क-वृश्चिक-मीनभगतचन्द्रस्योदीच्यां वासः।' इति।

तदुक्तं मदीयबृहद्होडाचक्रे—

'पूर्वेऽजसिंहचापेषु याम्ये स्त्रीमकरोक्षसु। प्रतीच्यां मिथुनेजूके कुम्भे चन्द्रो वसेत्सदा॥ कर्कालि-

न्त्येषु कौबेर्य्यां धनाप्त्यं सम्मुखे विधौ ।। धन-हानिः पृष्ठचन्द्रे सम्पत्सुखं च दक्षिणे । मरणं वामचन्द्रे स्यादीरितं गणकोत्तमैः इति ।।

१।६७-६८, ६३।२६-७।

ग्रन्थान्तरे तु विशेषः—

'अजमुखहरिचापर्क्षादिचारक्रमेण भ्रमति हरि-दिशातश्चन्द्रमाश्चाष्टदिक्षु । धन"-तिथि"-शशिनेत्रे"-लेश"-मेघ"--भूनोन्दु"--नभु न"-तथि"घटीभिदक्षिणाग्रं शुभं स्यात् ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पू० | आ० | द० | नै० | प० | वा० | उ० | ई० |
| १७ | १५ | २१ | १६ | १७ | १४ | २० | १५ |

सर्वघट्य', आसां योगो वा (१३५) घट्यः दक्षिणे सम्मुखे चन्द्रे यात्रादिक शुभं भवेत् ।' इति ।

घातचन्द्रभेदाः- एक., पञ्च, नव, द्वौ, षट्, दिशः, त्रय', सप्त, वेदा, अष्टौ, रुद्रा', अर्काः, मेषभात् क्रमतो घातचन्द्रा' स्युः ।

तदुक्तं मदीयहोडाचक्रे—

'पृथ्वी पञ्च नगा युग्मौ षट् पङ्क्तिर्वह्नयो-ऽब्धयः । युगा गजेशमार्तण्डा घातचन्द्रा हि मेषभात् इति हो० १२।२८

तत्फलं तत्रैव—

'यात्रायां बन्धनं रोगे मृत्युर्भङ्गस्तु सङ्गरे । विधवा कन्यकोद्वाहे शंयं घातविधोः फलम् ।' इति । हो० च० ७२-२५

अस्य परिहार उक्तो ग्रन्थान्तरे—

'तीर्थयात्राविवाहान्नप्राशनोपनयादिषु । मान्गल्य-सर्वकार्येषु घातचन्द्रं न चिन्तयेत् ।।' इति ।

योगिनीदिक्चारपर्यायाः— योगिनीदिक्चार, योगिनीदिङ्निवास', योगिन्याशाचारः, योगिन्या-शावासः ।' इति ।

योगिनीदिक्चारभेदाः—प्रतिपदि, नवम्यां, च योगिन्यावासः प्राच्याम् । तृतीयायामेकादश्यां, चाग्निकोणे तद्वासः । पञ्चम्यां त्रयोदश्यां याम्यां तद्वासः । चतुर्थ्यां द्वादश्यां च निर्ऋतिकोणे तद्वासः । षष्ठ्यां, चतुर्दश्यां च प्रतीच्यां तद्वासः । सप्तम्यां, पूर्णिमायां, च वायुकोणे तद्वासः । द्वितीयायां, दशम्यां, चो-दिच्यां तद्वासः । अष्टम्याममायां, पेशकोणे तद्वासः ।' इति ।

तदुक्तं ग्रंथान्तरे—

'ब्रह्माणी संस्थिता पूर्वे प्रतिपन्नवमीतिथौ ।
माहेश्वरी चोत्तरे च द्वितीयादशमीतिथौ ।।
स्थिताऽग्नेये च कौमारी तृतीयैकादशीतिथौ ।
नारायणी च नैर्ऋत्ये चतुर्थीद्वादशीतिथौ ।।
पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे तथा ।
षष्ठ्यां चैव त्रयोदश्यामिन्द्राणी पश्चिमे स्थिता ।।
सप्तम्यां पौर्णिमास्यां च चामुण्डा वायुगोचरे ।
अष्टाम्यमावास्ययोश्च महालक्ष्मीशगोचरे ।।
इति ।

तत्रैव तत्फलम्—

'योगिनी सम्मुखे नैव गमनादि प्रकारयेत् ।' इति ।

अपि च—

'वामे सुखप्रदा पृष्ठे वाञ्छितार्थप्रदायिनी', दक्षिणे धनहन्त्री च सम्मुखे मृत्युदायिनी ।।' इति ।

दिक्शूलपर्यायाः —दिक्शूलम्, दिशाशूलम्, यात्रा-शूलम् क्लीबे (दिग्विशेषगमने निषिद्धवाराः) ।

तदुक्तं ग्रंथान्तरे—

'शुक्रादित्यदिने न वारुणदिशं, न ज्ञे कुजे चोत्तरां, मन्देन्द्वोश्च दिने न शक्रककुभं, याम्यां गुरौ न व्रजेत्। शूलानीति विलंघ्य यान्ति मनुजा ये वित्तलाभाशया भ्रष्टाशाः पुनरापतन्ति यदि ते शक्रेण तुल्या अपि ॥' इति ।

दिक्छूलभेदा —(१) रविशुक्रयोर्वारे प्रतीच्यां शूलम्, (२) बुधभौमयोरुदीच्यां शूलम्, (३) शनिचन्द्रयोः प्राच्यां शूलम्, (४) जीवेऽवाच्यां शूलम्। यत्र दिशिशूलमस्ति तत्र न गच्छेत् ।

विदिक्छूलभेदा.—(१) बुधमन्दयोर्वारे ईशानकोणे शूलम्, (२) जीवेन्द्वोरग्निकोणे शूलम्, (३) भौमवारे वायव्यां शूलम्, (४) रवौ शुक्रे च रक्षोदिशि शूलम्। यस्यां दिशिशूलं तत्र यात्रां वर्जयेत् ।

अस्य परिहार उक्तो मदीयहोडाचक्रे—
'पीत्वा घृतं रवौ, गच्छेत्पयश्चन्द्रे, कुजे, गुडम्। बुधे तिलान्, गुरौर्वारे दधि, शुक्रे यवांस्तथा ॥ भुक्त्वा माषान्नमर्को तु शूलदोषापनुत्तये ।' इति । हो० च० २६।३६।६७।

इति श्रीमुकुन्दवल्लभविरचिते ज्योतिषशब्दकोषे पञ्चदशो विषयः समाप्तः ।

—:०—

दिक्पालवर्गः ।

दिक्पालभेदाः—(१) इन्द्रः, (२) अग्निः, (३) यमः, (४) नैर्ऋतः, (५) वरुणः, (६) वायुः, (७) कुबेरः, (८) ईशः, इत्येते पूर्वदिशः क्रमादष्टौ दिक्पालाः स्युः ।

तदुक्तममरसिंहेन—

'इन्द्रो वह्निः, पितृपति, नैर्ऋतो वरुणो मरुत्। कुबेर ईश. पतयः पूर्वादीनां दिशां क्रमादिति ॥

इन्द्रपर्यायाः—अण्डीरः, अदितिपुत्रः, अद्रिद्विद् (ष्), अद्रिभित् (द्), अप्सरसांपतिः, अमरेट् (श्), अर्की (इन्), अर्हः, आखण्डलः, आतङ्कः, इन्द्रः, उग्रधन्वा (अन्), ऊर्ध्वधन्वा (अन्), ऋभुक्षा (अन्), ऋषभध्वज, ऐरावतः, कारुः, किणालातः, कोटीरः, कौशिकः, खदिरः गोत्रभित् (द्), गौरावस्कन्दी (इन्), घनाघनः, चन्दिरः, चित्ररथः, जम्भभेदी (इन्), जम्भरिपुः, जयः, जिष्णुः, तपः, तपस्तक्षः, तुरापाट् (ह्), तुलः, त्रिलोकीराज., दल्मी (इन्), दालिमः, दिवस्पतिः, दुश्च्यवनः, देवताधिप, देवदुन्दुभिः, देवराजः, देवश्रेष्ठः, धाराङ्कुरः, नमुचिनिषूदनः, नमुचिसूदनः, नाकनाथः, परमन्युः, पर्जन्यः, पर्यङ्गः, पर्वतारिः, पाकनिषूदनः, पाकशासन., पुरन्दरः, पुरुदशाः (अस्), पुरुहूतः, पुलोमनिषूदनः, पुलोमशत्रु, पुलोमारिः, पूतक्रतुः, पूर्वदिक्पति, पूर्वदिक्पालः, पूतनाषाट् (ह्), प्रयागः, प्राचीनबर्हिः, प्राचीपतिः, बलनिषूदनः, बलरिपुः, बलहा (न्), बलारातिः, बाणः, बाहुजशः, बाहुदन्तेयः,

बिडौजा (प्रस्), भूरिश्रवा. (प्रस्), मघवा (न्), मघवान् (मतु०), मरुत्वान् (मतु०), महेन्द्र, माहिर, मेघवाहन, मेषाण्ड, यामनेमि, युधिष्ठिर, रावण, लेखपभ, लोकपति, वज्र-दक्षिण, वज्रपाणि, वज्री (इन्), वन्दीक, व (वि) युन, वारण, वार्वाहवाह, वासव, वास्तोष्पति, विडोज, विभीषण, विश्वम्भर, वृष, वृत्रनिषूदन, वृत्रहा (न्), वृत्रारि, वृद्ध-श्रवा (प्रस्), वृषा (न्), वैकुण्ठ, शक्र, शची-पति, शतधृति, शतमन्यु, शयीचि, शुनासीर, शैलारि, सङ्क्रन्दनः, सहस्रनयन, सहस्राक्ष, सित-कुञ्जर, सुत्रामा (न्), सुनाशीर, सुनासीर, सुरपति, सुराधिप, सुरेश्वर", सूत्रामा (न्), स्वाराट् (ज्), हरिः, हरिमान् (मतु०), हरि-वाहन, हरिहय, हर्यश्व. ।

इन्द्रभेदा —(१) यज्ञ, (२) रोचन, (३) सत्यजित् (त), (४) चित्रशिख, (५) विभु, (६) मन्त्रद्रुम, (७) पुरन्दर, (८) बलि, (९) श्रुतः, (१०) शम्भु (११) वैधृत, (१२) ऋत-धामा (मन्), (१३) दिवस्पति, (१४) शुचि-श्चैते चतुर्दश इन्द्राः स्युः ।

इन्द्राणीपर्याया.—इन्द्राणी, गन्धोली, चारुधारा, चारुराधा, जयवाहिनी, परिपूर्णसहस्रचन्द्रवती, पुमोजा, पुलोमतनया, पूतक्रतायी, पौलोमी, महेन्द्राणी, शक्राणी, शचि,—ची, शतावरी, सचि.—ची ।

जयन्तप०—इन्द्रपुत्र, जय, जयदत्त, जयन्त, पाकशासनि, पाकसन्तान ।

जयन्तीप०—इन्द्रपुत्री, गुहप्रिया, जयन्ती, तविषी, ताविषी, देवसेना ।

इन्द्रपुरीप०—अमरा, अमरावती, इन्द्रपुरी, विश्वौकसारा, वृषभासा, सुदर्शनम्, सुदर्शना, सुदर्शनी, सुरपुरी ।

इन्द्रप्रासादप०—वैजयन्त ।

इन्द्रध्वजप०—वैजयन्त ।

इन्द्रसारथिप० इन्द्रसारथि, मातलि, शक्रसा-रथि, हयङ्कष ।

इन्द्रहयप०—उच्चैःश्रवा (प्रस्), देवाश्व, वृषणश्व, वृषणाश्व, श्वेतहय ।

इन्द्रगजप०—अभ्रनाग, अभ्रमातङ्ग, अभ्रमुप्रा-णेश्वर, अभ्रमुप्रिय, अभ्रमुवल्लभ, अभ्ररूप, अरिमर्दन, अर्कसोदर, ऐरावण, ऐरावत, चतुर्दंष्ट्र, चतुर्दन्त", भद्ररेणु, मदाम्बर, राम-न्तरि श्वेतगज, श्वेतद्विप, सदादान, सदामद, सुरामा (मन्), सूर्यभ्राता (तृ), सूर्यसोदर ।

इन्द्रा स्यप०— देवनन्दी (इन्) ।

इन्द्रक्रीडाभूप०—नन्दिका ।

इन्द्रक्रीडासर.प०—नन्दितर (प्रस्), नन्दीसर (प्रस्) ।

इन्द्रवनप०—ऐन्द्रम्, कन्दसारम्—कम्, नन्दनम्, पारुष्यम्, मिश्रकावनम्, वृषम्वम् ।

इन्द्रशान्तिकर्मकृत्प०—पुराज" ।

इन्द्रधनुःप०—इन्द्रधनु", इन्द्रायुधम्, देवायुधम्, शक्रधनु (उप्) शक्रशरासनम् ।

तदुत्पाताविना प्रवक्र सततपर्याया.—रोहितम् ।

वज्रप०—अब्जम्, अम्भोरयम्, अम्बुजम्,

अशनि —नी, आपोत्रम्, इन्द्रप्रहरणम्, कुलिश (पु० न०), कुलीशम्, गिरिकण्टक, गिरिज्वर, गो (गो), जम्भारि, जाम्बवि, त्रिदशायुधम्, दम्भ, दम्भोलि, पवि, भिदिरम्, भिदु, भिदुरम्, भिद्र, मेघभूति, वज्र (पु० न०), वज्राशनि, व्याधाम, शतकोटि, शतधारम्—कम्, शतारम्, शव, शम्ब, सम्ब, स्वरु (पु०), स्वरु (स्), ह्लादिनी (स्त्री०)।

वज्रध्वनिपर्याया —वज्रजनितशब्द वज्रनिर्घोष, वज्रनिष्पेष, स्फूर्जथु ।

वज्राग्निप०—इरम्मद, मेघज्योति (इष्), वज्राग्नि ।

वज्रज्वालाप०—प्रतिभी (स्त्री०)।

मेघप०—अभ्रम्, अब्द, अभ्रम्, अभ्रम्, अम्बुद, अम्बुभृत् (त्), अम्बुवाह अम्भोधर, अम्भोभृत् (त्), कद, कन्ध, कन्धर, कोश, क्षर, खतमाल, गगनध्वज, गडयित्नु, गडेर, गदयित्नु, गदामर, गदाम्बर, गवेडु, गाडव, घन, घनाघन, जलकरङ्क, जलद, जलधर, जलभृत् (त्) जलमसि, जलमुक् (च्), जलवाह, जोमूत तटित्पति, तडित्वान् (मतु०), तोयद दर्दुर, देव, धाराधर, धूमयोनि, नदनु, नभोगज, नभोध्वज, नभोहस्ती (इन)। नभ्राट् (ज्), नाग, पयोगर्भ, पयोधर, पयोमुक् (च्), पर्जन्य, पर्य्यन्य, पाथोद, पेचक, बलाहक, भेक, मदयीत्नु, मदाम्बर, मुदिर मेघ, वनद, वनमुक् (च्), वराहक, वलाहक, वातरथ, वायुदारु, वारिद, वारिधर, वारिमसि, वारिमुक् (च्), वारिवाह, वारिवाहनः, वार्मसि, वार्मुक् (च्), शम्बर, श्वेतनील, स्तनयित्नु ।

मेघभेदा—( ) आवर्त, (२) सवर्त, (३) पुष्कर, (४) द्रोण, इत्येते मेघस्य चत्वारो भेदा स्यु ।

तदन्यभेदा —(१) आवर्त, (२) सवर्त, (३) पुष्कर, (४) द्रोण, (५), काल, (६) नील, (७) वरुण (८) वायु, (९) तम, इत्येते मेघस्य नवभेदा स्यु ।

पुनस्तदन्यभेदा —ग्रन्थान्तरे द्रष्टव्या ।

विद्युत्प०—अचिरद्युति, अचिरप्रभा, अचिररोचि (इष्), अणुप्रभा, अणुभा, अशनि —नी, अस्थिरा, ऐरावती, क्षणप्रभा, क्षणाशु, क्षणिका, चञ्चला, चटुला, चपला चम्पा, चला, चिलमीलिका, चिलिमिली, जलदा, जलपालिका, जलवालिका, तटित् (त्), तडित् (त्) दीप्ता, नीलाञ्जना, मेघप्रभा, राधा, विद्युत् (त्), वीया, शतह्रदा, शतावर्ता, शम्पा, सम्पा, सर्जू, सौदामनी, सौदामिनी, सौदाम्नी, ह्रिस्वसा (सृ), ह्लादिनी ।

मेघमालाप०—कादम्बिनी, काली कृष्णनवाम्बुद, मेघमाला, मेघश्रेणी, (नवोमेघ)।

वृष्टिप०—वर्ष, वर्षम, वर्षणम वृष्टि (स्त्री०)।

वृष्टिनिरोधप०—अवग्रह, अवग्राह, वग्रह वग्राह ।

अग्निप०—अगिर, अग्नि, अग्निकोणपति,

अग्निशुष्मा (अन्), अग्निहोत्र, अञ्चति, अदेवताड, अनन्त, अनल, अनिलसख, अपपारिक, अपापित्तम्, अप्पित्तम्, अरणि, अर्चिष्मान् (मतु०), आज्यभुक (ज), आशयाश, आशिर, आशुशुक्षणि, आश्रयाश, ईर्षिर, उर्दचि (इष्), उपबुंध उपबुंद् (ध्) ऊर्ध्वंगति, एधतु, क, कपिल, कर्क, कुतप कृपाकु, क्रीटयोनि, कृशानु, कृष्णवर्त्मा (अन्), कृष्णार्चि (इष्), घसुरि, घासि, घृतार्चि, (इष्) चक्रवाड, चित्रभानु, चिरि, छागरथ, छागवाहन, छिदिर, जागृवि, जातवेदा (अस्), जुहुराण, जुहूवार, जुहूवाल. ज्योति (इष्), ज्वलन, ज्वालाजिह्व, तनूनपात् (द्) तमोघ्न, तमोनुत् (द), तमोवैरो (अन्), तुत्थ, तेजा (अस्), त्रिधामा (अन), दमुना, (अस), दमून, (अस), दस्म, दहन, दीप्र, दुरासद, दूत, धु, धनञ्जय, धमन, धिष्ण्य, धूमकेतु, धूमध्वज, नाचिकेत, पचि, पर्परीक, पवनवाहन, पवि, पशुपति पाचन, पावक, पावन, पिङ्गल पीथ, पृथु पृदाकु पृष्ठ, बभ्र बर्हि, वर्हि (इष्), वर्हि शुष्मा, (अन्), वर्हिरुत्क, वर्हिरुत्थ, वर्हिर्ज्योति (इष्), वलिदीप्त, बहल, बहुल, बृहद्भानु, भरथ, भास्कर, भुजि, भुवन्यु, भूमिकेतन मत्र मत्रजिह्व, महावीर यज्ञ रक्तवर्ण, रोहिताश्व, रोहिदश्व, लोहिताश्व वञ्चति वमि, वसु वसुरेता (अस्), वह्नि, वातसख, वातसारथि वायुवाहन वायुसख— खा, विभावसु, विरोचन, विश्वप्सा, (आकारान्त), वीतिहोत्र, वृषाकपि, वैश्वानर शमीगर्भ, शिखावान (मतु०), शिखी (इन) शिव, शुक्र, शुचि, शुचिपति, शुष्म, शुष्मा (अन) शोचिष्केश, शोण, श्रेष्ठ सप्ति, सप्तजिह्व, । सप्तदीधिति, सप्तार्चि (इष्), समन्तभुक् (ज) समित्पीथ, सर्वदेवमुख, सहुरि साचि, सुशिख सुशिरा (अस), सुदाकु, सृग्जिह्व, स्वनि, स्वणदीधिति, स्वाहापति, हर, हव, हवन, हविरशन, हव्य, हव्यभुक् (ज्) हव्यवाह, हव्यवाहन, हव्याश, हव्याशन, हिमाराति, हिरण्यरेता (अस्), हुतभुक् (ज्), हुतवह, हुताश, हुताशन, होमि ।

अग्निभेदा —(१) दक्षिणाग्नि, (२) गार्हपत्य, (३) आहवनीय, इत्येतेऽग्नेस्त्रयो भेदा स्यु ।

एकयोस्त्याऽग्निपर्याय —त्रेता (स्त्री०) ।

अग्निशिखापर्याया – अचि, अर्चि (ष्), (स्त्री० न०), कीला (पु० स्त्री०), जिह्वा (स्त्री०), ज्वाला (पु० स्त्री०), शिखा (स्त्री०) हेति (स्त्री०) ।

महाज्वालाप०—उलक्का उल्का, झलका, नीलक, प्रवर्ग्य, महाज्वाला ।

अग्निजिह्वाभेदा —(१) काली (कपाली), (२) मनोजवा, (३) सुलोहिता (४) सुधूम्रवर्णा (५) स्फुलिङ्गिनी (६) विश्वरुचि, (७) देवी लेलायमाना, इत्येता अग्नेर्जिह्वाया सप्तभेदा स्यु ।

तदभेदा मतान्तरे—(१) कराली (काली), (२) धूमिनी (कराली), (३) श्वेता (विस्फु-

लिङ्गिनी), (४) लोहिता (धूम्रवर्णा), (५) नीललोहिता (विश्वरुचिः), (६) सुवर्णा (लोहिता), (७) पद्मरागा (मनोजवा), इत्येता मतान्तरेऽग्नेः सप्तजिह्वाः स्युः ।

अग्निपितृपर्यायः—धर्मः ।

अग्निमातृप०—वसुः ।

अग्निपत्नीप०—अग्निप्रिया, अग्नायी, दहनप्रिया, स्वाहा, हुतभुक्प्रिया ।

अग्निपुत्रभेदा.—(१) पावकः, (२) पवमानः, (३) शुचिः, इत्येतेऽग्नेस्त्रयः पुत्राः स्युः ।

अग्निकणपर्यायाः—अग्निकणः, अपुञ्ज', खङ्गाङ्गः, स्फुलिङ्गः ।

अग्निसन्तापप०—सज्ज्वरः, सन्तापः ।

अग्निउल्काप०—अलातम्, अलातज्वाला, उल्का, उल्मुकम्, ऋमुकम्, (दीप्ताग्रं काष्ठम्) ।

अङ्गारप०—अङ्गारः, प्रशान्तार्चिः (स्) ।

अग्निविट्प०—अग्निविट् (श्), इङ्गालः, कारिका, 'कोयला' इति भाषा ।

भस्मप०—क्षारः, असितम्, भस्म (अन्), भूतिः, रक्षा, 'राख' इति भाषा ।

अग्न्युत्पातपर्यायाः—अग्न्युत्पातः, अनलोत्पातः, उपाहितः ।

स्थूलकाष्ठाग्निप०—स्कन्धाग्निः । 'मोटी लकड़ी की आग' इति भाषा ।

तृणाग्निप०—क्षामः, तरत्समः, तार्णः, समः । 'तिनके की आग' इति भाषा ।

तुषानलप०—कुकूलः, कूकलः, तुषानलः, मुर्मुरः । 'भूसे की आग' इति भाषा ।

१-२८

करीषाग्निप०—छगणः, छागणः, छागलः । 'उपले की आग' इति भाषा ।

समुद्राग्निप०—अब्धिकुक्ष्यग्निः, और्वः, काकध्वजः, कुक्ष्यग्निः, जलेन्धनः, वडवानलः, वडवामुखः, वाडवः, वाडवानलः, संवर्तकः, समुद्रवह्निः, सलिलेन्धनः ।

वनाग्निप०—दवः, दावः, दावाग्निः, दावानलः, दुधः, वनवह्निः, वनानलः, सहरक्षाः (अस्) ।

ज्वराग्निप०—आधिमन्यवः ।

मेघाग्निप०—इरम्मदः ।

प्रेतदाहाग्निप०—क्रव्यात् (द्), क्रव्यादः, चिताग्निः ।

मृतकाग्निप०—सव्यः ।

सूतकाग्निप०—अपसव्यः ।

पित्रग्निप०—कव्यवाहनः ।

देवाग्निप०—हव्यवाहनः ।

दैत्याग्निप०—सहरक्षाः (अस्) ।

यज्ञाग्निप०—अपोनपात् (द्) ।

ऋत्वग्निप०—अपान्नपात् (द्) ।

उत्तमहोमाग्निप०—पथिकृत् (त्) ।

पदहोमाग्निप०—अनीकवान् (मतु०) ।

आधानाद्यग्निप०—प्रहस्ततः ।

यूपकर्माग्निप०—सुरभिः ।

ब्रह्मौदनाग्निप०—भरतः ।

सवनाहुतिप०—यविष्ठः ।

विवाहाग्निप०—महिमान् (मतु०) ।

वैश्वदेवाग्निप०—अद्भुतः ।

व्रतान्ताग्निप०—बहुरत्नादः ।

२६-५६

पाकयज्ञिकवह्निप०—सुलभ ।
अध्वरे दक्षिणाग्निप०—अन्वाहार्यपचन, शुक्र ।
पश्चिमेऽग्निप०—गार्हपत्य, गृहपति, पवमान ।
पूर्वेऽग्निप०—आहवनीय, शस्य, हव्यवाहन ।
लौकिकाग्निप०—आवसथ्य, सभ्य ।
धूमपर्याया—अग्निवाह, अभ्रसू करमाल, जीमूतवाही(इन्), दहनकेतनम्, धूम, वायुवाह, स्तरी (स्त्री०)।
गन्धवासितधूमप० धूप ।
काष्ठप०—काष्ठम् दलिकम् दारु।
समित्प०—इन्धनम्, इध्मम् एध एधः, (अस्) तर्पणम्, समित् (ध्) (स्त्री०)।
समिद्भेदा ग्रन्थान्तरेद्रष्टव्या ।
होमप०—आहुति, देवयज्ञ, वषट्कार, हवनम् होत्रम्, होम ।
होमकुण्डप०—हवित्री, होमकुण्डम्।
धान्यभेदा—(१) यवा, (२) गोधूमा, (३) तिला, (४) कङ्गव, (५) मुद्गका, (६) श्यामाका, (७) चणका, इत्येते धान्याना सप्त भेदा स्यु ।
हव्यान्नप०—चरु, हव्यपाक, हव्यान्नम् ।
धाय्याप०—धाय्या, सामधेनी, अग्निसमिन्धने समित्प्रक्षेपणवह्निज्वलने या ऋक्प्रयुज्यते सा 'धाय्या सामधेनी' च।
अग्निवाहन (छाग) प०—अज, छग, छगल, छाग, तुभ पशु, वस्त, शुभ, स्तभ स्तुभ ।
अजाप०—अजा, गलस्तनी, छागिका छागी, मञ्जा सर्वभक्षा।
यमप०—अन्तक, अर्कपुत्र, अर्कसूनु उर्मिला पति, औडम्बर, औदुम्बर कङ्क, कर्मकर, काल, कालकुन्थ, कालकूट, कालिन्दीसोदर, कीनाश कृतान्त, चित्रगुप्त जीवितेश, दक्षिणदिक्पाल दक्षिणाधिप, दक्षिणाशापति, दण्ड, दण्डधर, दण्डधार दण्डयाम, दम्न धर्म, धर्मराज, धर्मराट, धूमोर्णापति प(पा) र्पर, पितृपति, पीयु पुराणान्त, प्रेतपति, प्रेतराट (ज्), भीमशासन मन्द महासत्व महिषध्वज, महिषवाहन मृत्यु, यम, यमन यमराज, यमराट् यमुनाग्रज, यमुनाभ्राता (तृ), लुनायवाह, विशीर्णपात् (द्) विश्वप्सा (आकारान्त), वैवस्वत शमन, शीर्णपाद शीर्णाङ्घ्रि, शीर्णाङ्घि, श्राद्धदेव, समवर्ती (इन्), सावित्रय, सूरसू, हरि, हृपण ।
यमपत्नीप०—उर्मिला, धूमोर्णा, विजया।
यमपुरीप०—यमपुरी, संयमनी।
यमलेखकप०—चित्रगुप्त ।
यमप्रतीहारप०—वैध्यत ।
यमविचारभूप०—कालीची, कालीमी।
यमपञ्जिकाप०—अग्रसन्धानी, पञ्जिका।
यमदूतप०—कीलालप, क्षपाट, खसात्मज नर विध्वण नृचक्षा, (अस्), पलाद, पलाशी (इन), रात्रिमट विखुर, शङ्कु, शमनीषद, सन्ध्याबल हनूप ।
यमदासनामनी—(१) चण्ड, (२) महाचण्ड, इत्येतौ यमस्य द्वौ दासौ स्याताम्।
मृत्युपर्याया—अन्त, काल, नाश निधनम्, मरणम् मृति, मृत्यु, शेषस्तु कामदेवे।

यमवाहन (महिष)प०—कटाह, कलुष, वासर, कृष्णशृङ्ग, गद्गदस्वर, जरन्त, दशभीरुक, धीरस्कन्ध, पिङ्ग, मह, महिष, यमरथ, यमवाहन, रक्ताक्ष, रजस्वल, लालिक, लुलाप, लुलाय, वाहद्विद् (ष्), वाहरिपुः, सैरिभ, स्कन्धशृङ्ग, हसकालीतनय, हेरम्ब ।

महिषीप०—कलुषा, काली, पयस्विनी, मन्दगमना, महाक्षीरा, महिषी, सैरिभी, हसकाली ।

निऋ'तकोणदिक्पालप०—निऋ'ति. (पु०) नैऋ'त (पु०), नैऋ'ती (स्त्री०) नैऋ'तकोणनैऋ'त दिक्पाल कोणाधिपति, पश्चिमदक्षिण॰कोणपाल, अवाचीप्रतीचीमध्यदिगीश ।

अलक्ष्मीप०—अलक्ष्मी, ज्येष्ठा, निऋ'ति (स्त्रियाम्) ।

राक्षसप०—अनुप, अललोहित, असृक्प, अश्रप, अस्रप, आशर, आशार, आशिर, आसर, उद्धर, उद्वर, कक्षासुत, कटप्रू कबर कर्बु'र, कर्बू'र, कल्माष, कषापुत्र, कीनाश, कीलालप, कीलालपा, कुणप, कैकसेय, कोणप, कौणप, क्रव्यात् (द्) क्रव्याद, क्षपाट, खसात्मज, खसापुत्र, जललोहित, जातुधान —क, त्रिशिरा (अस्), नक्तञ्चर, नरविष्कण, नरविष्वण, निकषात्मज निकसात्मज, नीलाम्बर, नृचक्षा (अस), नैकषेय, नैकसेय, नैऋ'त, पलप्रिय पलाद —न, पलाश —शी (इन्), पिशिताशन, पुण्यजन, पुरुषाद, पैशाच प्रवाहिक, भूत, रक्तग्रह, रक्तग्रीव, रक्ष (अस्) (न०), रजनीचर, रतविघ्वण, राक्षस, रात्रिचर, रात्रिञ्चर, रात्रिबल, रात्रिमट, विधुर, विथुर विधुर, शङ्कु, शमनीषद, सन्ध्यावल, समितीषद, स्तब्धमभार, हनुष, हनूष ।

रक्ष पुरोपर्याया —निरक्षदेश, पलभाशून्यस्थानम्, रक्ष पुरी, राक्षसीपुरी, रावणराजधानी, लङ्का (इय कुमध्यगा), व्यक्षदेश, अधुना 'सिलोन' इति नाम्ना प्रसिद्धो देश ।

रक्ष पितृप०—निऋ'ति (पु०) ।

रक्षोमातृप०—निकखा, निकषा, निकसा, निऋ'ती, नैकषेयी, नैकसेयी ।

पिशाचप०—अनृजु, कापिशेय, कापीशेय, दर्व पिङ्गक, पिण्डक, पिशाच ।

शरीरस्थधातुभेदा —(१) रस, (२) असृक् (ज्), (३) मासम, (४) मेद (स), (५) अस्थि, (६) मज्जा, (७) शुक्रम्, इत्येते शरीरस्था सप्तधातव स्यु । (१) रोम (न्), (२) त्वक् (च्) (३) स्नायुश्चैभि सहिता दश धातव स्यु ।

रसधातुप०—अग्निसम्भव, असृक्कर, आग्नेय, आहारतेज (स्), घनधातु, महाधातु, मूल धातु रस, षड्रसासव ।

रक्तप०—असृक् (ज्), अश्रम्, अस्रम्, आग्नेयम, आग्नुरम, कीलालम् क्षतजम्, प्राणदम्, मासकारि (इन्), रक्तम्, रसतेज (स), रसभवम्, रुधिरम्, लोहितम्, वाशिष्ठम्, विस्रम, शोणितम्, शोध्यम् ।

मासप०—आमिषम्, आरटम्, उद्घ, उद्घसम्, काश्यपम्, कीनम् क्रव्यम्, जङ्गलम्, तरसम्,

पलम्, पललम्, पिशितम्, मासम्, मेदस्कृत् (त्) (न०), रक्ततेज (स्), रक्तभवम्, लेपनम्। समारटम् ।

मांसलताप०—ग्रामिषलता, पेशी, पेश्य (स्त्री० ब०), मांसलता ।

मुख्यमांस (हृदय)प०— अग्रमांसम्, बुक्क (त्रि०), बुक्का (अन), मुरसम्, हृत् (द्), हृदयम् ।

शुष्कमांसप०—उत्तप्तम्, वल्लुरम्, वल्लूरम् ।

पूयप०—दूष्यम् पूयम 'पीप' इति भाषा ।

वसाप०—अस्थिकृत् (त्) (न०), गौतमम, मांसजम्, मांसतेज, (स्), मेद (स) (न०) वपा, वसा । 'चर्बी' इति भाषा ।

मस्तकस्नेहप०—गोदम् (पु० न०) गोर्दम्, मस्तकस्नेह, मस्तिष्क, मस्तुलुङ्क । 'मगज' इति भाषा ।

हड्डप०—अस्थि (न०), कर्कर, कीकसम्, कुल्यम्, देहधारकम्, भारद्वाजम्, मज्जकृत् (त्) (न०), मांसपित्तम्, मेदस्तेज (स्), मेदोजम्, व्यवधितम्, सार, हड्डम् । 'हड्डी' इति भाषा ।

मस्तकहड्डप०—किरीटि—टी (स्त्री०) । मस्तकहड्डम् ।

वरुणप०—अपान्नाथ, अपांपति, अप्पति, अब्धिसद्मा (अन्) अम्बुकान्तार, अम्बुवास, अर्णवमन्दिर, उद्दाम, कुण्डली (इन्), क्रव्याद, जम्बुक, जम्बूक, जलकान्तार, जलपति, जलभूषण, जलाधिदैवत जलेश्वर, जीवनावास, दुन्दुभि, दैत्यदेव, नन्दपाल, परञ्जन, परञ्जय, पश्चिमदिशापति, पाशपाणि, पाशी (इन्), प्रचेता, (स्), प्रतीचीश, प्रत्यगाशापति, मकरवाहन, मेघनाद, यादःपति, यादसान्नाथ, यादसाम्पति, यादोनाथ, राम, व, वरण, वरुण, वाम, वारिलोम, वारीश्वर, वार्य्याश्रय, विलोम, शीतल, सवृत सलिलेश्वर, सुखाश्र ।

वरुणवाहनप०—मालास्य, कुम्भी (इन्), कुम्भीर, गोमुख, जलसूकर, तालुजिह्व, नक्र, मकर, महामुख, शकुमुख, शस्त्रमुख । 'नाकू' मगर' इति च भाषा ।

वरुणपत्नीप०—काहली, गौरी, तल्लि—ल्ली ।

वारुणपुरीप०—गन्धवती, वरुणपुरी, सुखा ।

जलजन्तुप०—यादांसि (न० ब०) जलजन्तव. (पु० ब०) ।

जलप०—आप (स्त्री० ब०), अम्बु, जलम्, तोयम्, पानीयम्, शेषस्तु विष्णौ ।

समुद्रप०—अब्धि जलधि, वरुणगृह, वरुणावास, समुद्र, सागर, सिन्धु, शेषस्तु विष्णौ ।

नदीप०—अपगा, अब्धा, अर्णा, आपगा, इरावती, ऋषिकुल्या, कर्पू, कुल्या, कूलङ्कषा, कूलवती, कृष्णा, गिरिजा, चञ्चला, चम्पिला, जम्बालिनी, जलधिगा, तटिनी, तरङ्गिणी, तलोदा, द्वीपवती, धुनि—नी, धेना, नदी, निम्नगा, निर्झरिणी, निर्झरिणी पयस्विनी, पर्वतजा, पार्वती, माता (तृ), रुजाता, रोधवक्रा, रोधश्चक्रा, रोधस्वती, रोधोवक्त्रा, रोधोवक्रा, रोधोवती, वहा, वाहिनी, शिफा, शैवलिनी, शैवालिनी,

समुद्रकान्ता, समुद्रगा, समुद्रदयिता, समुद्रस्त्री, सरस्वती, सरित् (त्), सस्रुत् (त), सागरगा, सागरगामिनी, सिन्धु, सुनीरा, स्रवन्ती, स्रोता (अस्), स्रोतस्वती स्रोतस्विनी, स्रोतोवहा, स्रात्या, हिरण्यवर्णा, ह्लादनी ह्लादिनी।

मत्स्यप०—अण्डज, अनिमिष, आत्माशी (इन्), कण्टकी (इन्), कण्ठकाल, कण्ठी (इन्), जलचर जलविप्रक, जलपिप्पिक, जलेशय, झष, तिमि, पाठीन, पृथुरोमा (अन्), मच्छ, मत्स, मत्स्य, माङ्गल्यदर्शन, मीन, मूक, राहित, वल्कवान् (मतु०), विमार, वैसारिण, शवर, शकलि, शकली (इन), शकुनी (इन्), शकुली (इन) शम्बर शल्की (इन्), शेव, सघाचारी (इन), स्थिरजिह्व स्वकुनक्षय।

तदन्येऽपि पर्याया—अनिमप, अभ्ररसोका (अम्), घनरमचर, तुरस्क, नीरनिकेत, पाठीर, पुष्करागार, प्रोष्ठी (इन्), वनाहुकर साग र, शवली (इन्) शफर, शफरी (इन्)।

मदिराप० अब्जिजा, इरा, कल्यम्, कश्यम्, कादम्बरी कारिशम्, कारिशायतम, गन्धोत्तमा, देवसृष्टा, परिप्लुता परिस्रुत् (त्), परिस्रुता, प्रसन्ना, मदना, मदिरा, मदिष्ठा, मद्यम्, मधु, माध्वीकम मार्द्वीकम्, वारुणी, शुण्डा, सुरा, स्वादुरसा, हलिप्रिया, हारहूरम्, हाला।

वायुपर्याया—अक्षति, अग्निमस, अद्भुति, अजिर, अन्वति, अनवस्यात, अनिल, अवलीर, अहिकान्त, आत्मा (अन्), आवक, आशुग, उत्तरपश्चिमदिक्कोणाधिपति, क, कम्पलक्ष्मा (अन्), कम्पाक, कर्त्ता (तृ), क्षिपणु, क्षिपति, खग, खश्वास, गन्धवह, गन्धवाह ही (इन्), चञ्चल, चपल, चल, जगत्, जगत्प्राण, जगद्बल जलकान्तार, जवन, जलद्रूपण ?, जीवन, तरस्री (इन्), दैत्यदेव, धार धारावलि, धूनन, धूलिध्वज, ध्वजप्रहरण, नभ प्राण, नभ श्वास, नभ स्वर, नभस्वान् (मतु०), नभोजात, नि पाव, नित्यगति, निश्वासक, प, पञ्चलक्ष्मा (अन्), पवन, पवमान, पश्चिमोत्तरदिक्कोणपति, पुरन्याकुल, पृषताम्पति, पृषताश्व, पृषदश्व, प्रकम्पन, प्रधावन प्रभञ्जन प्रवह, प्राण, फणिप्रिय, बलदेव, भोगिकान्त, मरुव, मरुत् (त्), मर्क, मलिम्लुच, महाबल, मातरिश्वा (अन्), मारुत, मृगवाहन, मेघकारक, मेघारि, मोटन, य युजिन, लघुग, लोलघण्ट लोलपट, लोहघन, व, वह, वात, वातगुल्म, वाति, वातूल, वायु, वास वाह, वि, विश्वप्सा (आकारान्त), विहग, वेगी (इन्), शीघ्र, शीतल, शुचि, शुषिल, शुष्मि, श्वसन, श्वसिन, श्वसीनि, श्वेलोदर, सहर्व, सदागतिः समिर, समीर, समीरण, सम्भृत, सर, सरयु, सार, सुखाश, सुरालय, सृदाकु, सृमर, स्तनून, स्पर्श, स्पर्शन, स्वकम्पन, हरि।

वायुपुरीप०—गन्धवती, वातपू, वायुपुरी।

वायुवाहन (मृग)प०—अजिनयानि, कुरङ्ग, मृग, वनायु, वातायु, वानायु, शारङ्ग, सारङ्ग, हरिण।

वायुपुत्रभेदौ —(१) भीमसेन, (२) हनुमान् (मतु०) इत्येतौ वायोर्द्वौ पुत्रौ स्त ।
भीममातृप०—कुन्ती पाण्डुपत्नी, पृथा ।
हनुमन्मातृप०—अञ्जना, अञ्जनावती ।
वायुभेदा —(१) रूरू, (२) भूभू, (३) चण्ड, (४) प्रचण्डश्चेत्येते वायोश्चत्वारो भेदा स्यु ।
तदन्यभेदा —(१) आवह, (२) प्रवह, (३) सवह, (४) विवह, (५) उद्वह, (६) अतिवह, (७) प्राणवह, इत्येते वायो सप्त भेदा स्यु ।
'मतान्तरे तद्भेदा —(१) भूवायु, (२) आवह, (३) प्रवह, (४) उद्वह, (५) सवह, (६) सुवह, (७) परावहश्चेति । 'सिद्धान्तशिरोमणौ' तु—(१) आवाह, (२) प्रवह, (३) उद्वह, (४) सवह, (५) सुवह, (६) परिवह, (७) परावहश्चेति सप्त भेदा स्यु । अथ शरीरस्था प्राणादय पञ्चवायवस्तत्क्रियाश्च यथा—(१) प्राण (हृदि) (अन्नप्रवेशनम्) । (२) अपान (गुदे) (मूत्राद्युत्सर्ग) । (३) समान (नाभिमण्डले) (अन्नादिपचनम्) । (४) उदान (कण्ठदेशे) (भाषणादि) । (५) व्यान (सर्वशरीरग) (निमेषादि), इत्येते शरीरस्थवायो पञ्चभेदास्तत्क्रियाश्च । अथ तस्य कृकरादय पञ्च भेदास्तत्क्रियाश्च यथा—(१) कृकर (क्षुत्कर), (२) देवदत्त (जृम्भणकर), (३) नाग (उद्गारकर), (४) कूर्म (उन्मीलननिमीलनकर) (५) धनञ्जय (पोषणकर), इत्येते तस्य कृकरादय सक्रिया पञ्च भेदा स्यु ।
वातसहतिप०—आ सञ्जिनी, वातगुल्म वातमण्डली, वातसहति, वाताली, वातुल, वातूल, वात्या । भाषाया तु 'बवण्डर, 'बवूला, इति च लोकैरुक्तम् ।
मृदुवातप०—चिञ्चिलिक मृदुवात, लिट् (ह्), लेढा (ढ्), सोरत ।
शिशिरर्तुजवायुपर्यायौ—पुटानिल, शैशिर ।
वसन्तर्तुजवायुप०—अमलपालिक, दाक्षिणात्य, मलयानिल, वासन्त ।
ग्रीष्मर्तुजवायुप०—गरवायु, ग्रैष्म, चरवायु, चारवायु, निदाघज, निदाघसमयानिल ।
वर्षर्तुजवायुप०—कङ्कावात, झञ्झानिल, झञ्झावात, प्रावृषिज, सञ्झावात, सवृष्टिकप्रावृड्भवानिल,
शरदृतुजवायुप०—शर, शारद, सारण ।
हेमन्तर्तुजवायुप०—जारवायु, हैमन्त ।
कुबेरपर्याया —अर्हदुपासक, अलकाधिप, अष्टदन्त, इच्छावसु, इलविलापुत्र, ईशवयस्य, ईशसख, ईहावसु, उत्तराशापति, एककुण्डल, एकपिङ्ग, एलविल, ऐडविड ऐडविल ऐल, ऐलविल, किन्नरेश किन्नरेश्वर किम्पुरुषेश्वर, किराली (इन्), कुड, कुतनु, कुबेर, कुशरीर, कुह केकराक्ष, कैलासनाथ, कैलासौका, (अस्), गुह्यक, गुह्यकेश, गुह्यकेश्वर, त्रिपात् (द्), त्रिशिरा, (अस्), त्र्यम्बकसख, द्रुम धनकेलि, धनद, धनाधिप, धनाध्यक्ष, धनी (इन्), धनेश्वर॰, नन्दीवृक्ष नरवाहन, निधानाध्यक्ष, निधानेश, निधिनाथ, निधिपाल, निधीश्वर, नृधर्मा (अन्), पद्मलाञ्छन, पराविद्ध, पिशा-

चक्री (इन्), पुण्यजनेश्वर, पौलस्त्य, प्रमोदित., वक्र॰, मनुष्यधर्मा (अन्), मन्द, महासत्त्व, मायुराट (ज्),यक्ष, यक्षराज, यक्षराट् (ज्), यक्षेश्वर, रत्नकर, रत्नगर्भ, रत्नहस्त, राजराज, रुद्रसख, वक्रनेत्र॰, वटवासी (इन),वटाश्रय, वसु, वित्तेश, विल॰, वैश्रवण, शम्भुमित्रम, श्रीकण्ठसख, श्रीद, श्रेष्ठ, सत्यसङ्कर, सितोदर, सुप्रसन्न, सोम, स्वेश्वर.' हृय्यंश,

**अर्हत्पर्याया** —अर्हन् (त्), जिन, शेपस्तु देवे।

उपासकप॰—आराधनाकर, आराधनाकर्त्ता, उपासक।

कुबेरपुरीप॰—अलका, कुबेरपुरी, प्रभा, वसुप्रभा, वसुसारा, वसुस्थली, वस्वौकसारा, वस्वोकसारिका, वस्वौकसारा।

अधिपप॰—अधिप., नाथ, स्वामी शेपस्तु रवौ

अष्टप॰—अष्ट (अन्) (त्रि॰ व)।

दन्तप॰—दन्त, दशन, द्विज, रद, शेपस्त्वन्यत्र।

इच्छाप॰—अभिलाप, आशंसा आशा, इच्छा, ईप्सा, ईह, ईहा, काक्षा, काम, कामना, गर्द्ध, तृट् (प्), तृष्णा, धनाया, मनोगती, मनोरथ, मनोराज्यम्, रुचि, लिप्सा, लोभ, वश, वाञ्छा, स्पृहा।

वसु(धन)प॰—अर्थ, ऋक्णम्, ऋक्थम्, द्युम्नम्, द्रविणम, द्रव्यम् धनम्, पृक्थम्, रिक्थम्, रा (रै), वसु, विटप, वित्तम्, विभव, सारम्, स्वम् स्व पतेयम, हिरण्यम्।

घटिताघटितहेमरूप्यप॰—अकुप्यम्, कोशम्, कोश॰, कोप, हिरण्यम्।

ताम्रादिकप॰—कुप्यम्।

आहत (मुद्रित) कुप्याकुप्यप॰—रूप्यम्।

निधिपर्याया —कुनाभिः, गूढकोश, निधानम्, निधि., रत्नकोश, वर्णकवि, शेवधि, सेवधि।

निधिभेदा —(१) पद्म, (२) महापद्म, (३) शङ्ख, (४) मकर, (५) कच्छप, (६) मुकुन्द, (७) कुनन्द, (८) नील, (९) खर्व (चर्चा) (अस्), इत्येते निधेर्नवभेदा स्यु।

निक्षेपपर्याया —उपनिधि॰, निक्षेप, न्यस्तक, न्यास, स्थाप्य 'धरोहर' इतिभाषा।

कुत्सितप॰—कु (अ॰), कुत्सितम्।

बेर (शरीर) प॰—अङ्गम् कलेवरम्, काय. तनु. बेरम्, शरीरम्, शेपस्तु गरुडे।

कुबेरपत्नीप॰—ऋद्धि, कुबेरपत्नी, धनददारा।

कुबेरमातृप॰—इडविला, इलविला, कुबेराम्बा।

कुबेरपितृप॰—कुबरजनक, पौलस्त्य, विश्रवाः,

कुबेरभ्रातृप॰-दशकण्ठ, मेघनादजनक, रावण।

कुबेरस्थानप॰—कैलास, रजताचल, हराद्रि, शेपस्तु शिवे।

कुबेरविमानप॰—पुष्पम्, पुष्पकम्।

कुबेरसारथिप॰—मायुराज।

कुबेरोद्यानप॰—चैत्ररथम्।

कुबेरपुत्रभरौ—(१) नलकूबर, (२) मणिग्राव (मणिग्रीव), इत्येतौ कुबेरस्य द्वौ पुत्रौ स्त।

किन्नरप॰—अश्वमुख, किन्नर, किम्पुरुष, तुरङ्गवदन मयु।

यक्षप॰—खायेय, गुह्यक पुण्यजन, यक्ष, राजा

(८न), वटवासी (इन्) ।

गुह्यकप०— कुबेरनिधिरक्षक, गुह्यक, देवजन, मालिकार ।

तन्नामानि जीमूतवाहन, मणिभद्र इत्यादय ।

गन्धर्वपर्याया —गन्धर्व, नातु, गान्धव, गीतमर्दा (इन्) दिव्यगायन, देवगायन, सुरगायन, स्वर्गगायक हरिणवर्त्तक ।

गन्धर्वभेदा—(१) चित्ररथ, (२) तुम्बुरु, (३) वसुरुचि, (४) विश्वावसु, (५) वृषणाश्व, (६) हूहू (हाहा, हाहा,(स्)(७) हाहाहूहू, (८) हुहू (हूहू), इत्यादयो गन्धर्वाणां भेदा स्युः ।

कुबेरवाहन (मनुष्य) प०—नर, मनुज, मानव 'शवस्तु दव ।

ईशानपर्याया –ईश, ईशान, ईशानकोणाधिपति, रुद्र शङ्कर, शिव, शपरतु शिवे । प्रथमकारमरुद्रान्तानां रुद्रविशेष ।

ईशानपुरीप० –ईशपुरी, ईशानपुरी, यशोवती ।

इति श्रीमुकुन्दशर्मविरचिते ज्योतिषनामकोषे षोडशो विश्रामस्तम्भ समाप्तिमगमत् ।

★

## पुरवर्ग —

पुरपर्याया —अधिष्ठानम् द्रग, नगरम्, नगरी, निगम, निवसनम्, पटभेदनम्, पट्टनम्, पट्टनी, पत्तनम्, पुट, पुटभेदनम्, पू (र्) (स्त्री०), पुरम्, पुरि, पुरी, स्थानम् (शहर इति भाषा) ।

पण्यप०—क्रयविक्रयद्रव्यम् क्रयविक्रयवस्तु ।

पण्यभूप०–पारोह, क्रयविक्रयस्थानम्, क्रयारोह, ग्रामसुखम्, जन्यम्, पण्यभू, हट्ट, हट्टक, (गरीदने बेचने का स्थान इति भाषा) ।

पण्यशालाप०—हट्ट, आपण, निषद्या, पण्यविक्रयशाला, पण्यवीथिका, पण्यवीथी, पण्यशालम्–ला । विपणि —णी, प्रवाद, हट्ट, 'बाजार' 'दुकान' इति च भाषा ।)

पण्यापप०— क्रयविक्रयद्रव्यप, क्रयविक्रयवस्तप ।

वैश्यप०—पार्य, ऊरव्य, ऊरुज, भूमिस्पृक् (श्), विट् वैश्य, वनिया, इतिभाषा ।

तद्वृत्तिभेदा —(१) वाणिज्यम् (व्यापार), (२) पाशुपाल्यम् (जानवर पालना), (३) कर्षणम् (खेती), चति वैश्यानां तिस्रो वृत्तय स्यु ।

प्राजीविकाप०—आजीव, आजीविका, जीवनम्, जीविका, वार्ता, वृत्ति, वर्तनम् । 'रोजगार' इति भाषा ।

वणिक्प०—आपणिक, क्रयविक्रयक, क्रयविक्रयकर्ता (तृ), क्रयविक्रयी (इन्), नैगम, नागर, निगम, निमुंट, नैगम, पणि, पणी (इन्), पण्याजीव, आपणिक, वणिक् (ज्) वैदेहिक, वैदेह वैदेहक, व्यापारी (इन्), सार्थवाह, वनिया' 'वनजारा व्यापारी' इति च भाषा ।

वणिग्गृहप०—वणिज, वणिग्गृहम्, 'वनिय का घर इति भाषा ।

वाणिज्यप०—क्रयविक्रय, वणिज्या, वाणिज्यम्, सत्यानृतम् । वणज इति भाषा ।

क्रयप०—क्रय, क्रयुक, क्रेणी (इन्), प्रक्रय,

भेटकः। 'खरीदना' इति भाषा।

**विक्रयप०**—पण', विक्रयः, विपणः। 'बेचना' इति भाषा।

**क्रायकप०**-क्रयकर्त्ता (न्०), क्रयिकः, क्रयी (इन्), क्रायकः, क्रेता (तृ), 'मोल लेने वाला' 'खरीदने वाला' इति च भाषा।

**विक्रायकप**—विक्रयकर्ता (तृ०) विक्रयिकः, विक्रयी (इन्), विक्रायकः, विक्रेता (तृ)। 'बेचने वाला' इति भाषा।

**क्रयाणकप०**—क्रयाणकम्। 'खरीदी हुई वस्तु' इति भाषा।

**विक्रयाणकप०**—विक्रयाणकम्। 'बेचने के लिए रखी हुई वस्तु' इति भाषा।

**विक्रेयपर्यायाः**—पणितव्यम्, पण्यम्, विक्रेयम्। 'बिकने की वस्तु' इति भाषा।

**मूल्यप०**-अर्घः, अवक्रयः, भाटकः, मूल्यम्, वक्रयः, वस्नः, (पुं० न०), 'बिकने की वस्तुओं का मोल' इति भाषा।

**क्रेयप**—क्रेयम्(त्रि०), क्रेतव्यमात्रकम्। 'खरीदने योग्य वस्तु' इति भाषा।

**क्रय्यप०**—क्रय्यम् (त्रि०) 'बेचने के लिए (प्रसारित) बाजार में फैलाई हुई वस्तु' इति भाषा।

**विनिमयप०**—निमयः, निमेयः, नैमेयः, परावर्तः, परिदत्तम्, परि(री)दानम्, परि(री)वर्त्तः, परिवर्त्तनम्, परिवृत्ति, परीवर्त्तः-नम्, प्रतिदानम् प्रतिहारः विनिमयः, विमयः, विमेयः, वैमेयः, व्यतिहारः, 'हेरा फेरी' 'अदला-बदली' इति च भाषा।

**सत्यापनप०**—सत्यङ्कारः, सत्याकृतिः, सत्यापनम्, 'बयाना' 'साई' इति च भाषा।

**मूलधनप०**—नीविः, नीवी, पण्यद्रव्यम्, परिपणः, भाण्डम्, मूलद्रव्यम्, मूलधनम्, वणिङ्मूलधनम्, 'पूंजी' 'मूलधन' इति च भाषा।

**लाभप०**—अधिकम्, फलम्, लाभः, 'लाभ' 'नफा' 'मुनाफा' इति च भाषा।

**निक्षेपप०**—उपनिधिः, निक्षेपः, न्यासः। 'धरोहरि' 'थाती' इति च भाषा।

**न्यासार्पणप०**—तदर्पणम्, न्यासार्पणम्, प्रति (ती)दानम्, परि (री)दानम्। धरोहरि लौटाना' इति भाषा।

**महर्घप०**—महर्घः। 'महंगा' इति भाषा।

**महर्घताप०**—महर्घता, महर्घत्वम्। 'महंगाई' इति भाषा।

**महर्घ्यताप०**—महर्घ्यता, अधिकमूल्यत्वम्।

**महार्घप०**—महार्घः (त्रि०), महामूल्यम्।

**महार्घ्यप०**—महार्घ्यः (त्रि०), मूल्यवान्, 'बेश कीमती' इति भाषा।

**समताप०**—तुल्यता, समता, समत्वम्, समानता, सादृश्यम्, साम्यम्।

**समर्घप०**—समर्घः (त्रि०), 'सस्ता' 'मंदा' इति च भाषा।

**समर्घताप०**—समर्घता (स्त्री०), समर्घत्वम् (न०), 'सस्ताई' मंदगी' इति च भाषा।

**ऋणप०**—अपमित्यकम्, उद्धारः, ऋणम्, पर्युदञ्चनम्, 'उधार' 'कर्ज लेना' इति च भाषा।

वृद्ध्याजीवप०—कुसीदिक, द्वैगुणिक, वार्धुषि, वर्धुषिक, वार्धुषी (इन्), 'व्याजखोर' इति भाषा।

कुसीदप०—अर्थप्रयोग, कुशीदम्, कुषीदम्, कुसीदम्, वृद्धिजीवनम् वृद्धिजीविका। 'व्याज का धन्धा' 'व्याज का व्यापार' इति च भाषा।

वृद्धिप०—वृद्धि (स्त्री०), कलान्तरम् (न०), 'सूद' 'लाभ' 'व्याज' इति च भाषा।

चयप०—उपचय, ऋद्धि एधा चय, चिति, वृद्धि।

क्षतिप०—अपचय, अपहार अपाय, क्षति, क्षय, नाश, विरति, हानि।

बन्धकप०—आधिः (स्त्री०) आधिक, प्रणय, बन्ध, बन्धक। 'गिरवी' 'बन्धक' इति च भाषा।

इति श्रीमुकुन्ददैवज्ञविरचिते ज्योतिषशब्दकोषे सप्तदश पुरवग समाप्तिमगमत्।

---

## प्रकीर्णवर्गः—

उक्तप०[1]—अभिहित, आख्यात ईरित उक्त उच्चारत, उच्चारित, उदाहृत, उदित, उदीरित उद्दिष्ट उपदिष्ट कथित कलित, कीर्तित, ख्यात, गदित जल्पित, निगदित निरुक्त, निर्दिष्ट परिकीर्तित, परिगदित, परिजल्पित, प्रकीर्तित, प्रजल्पित प्रणिगदित, प्रदिष्ट प्रोक्त भणित, भाषित लपित, विनिर्दिष्ट, विहित, सकीर्तित, समीरित, समुदाहृत, समुदित, समुदीरित, समुद्गीर्ण, सम्प्रोक्त। एते त्रिलिङ्गाः स्युः।

कथनप०[2]—अभिधानम्, उच्चारणम्, कथनम, कथा (स्त्री०), गदनम्, जल्पनम्, भणनम्, भाषणम्, लपनम् वचनम्, वदनम् वाचनम्। एते क्लीबलिङ्गाः स्युः।

वाच्यप०[3]—अभिधेय, उच्चारणीय, उच्चारितव्य, उच्चार्य्य, कथनीय, कथितव्य, कथ्य, गदनीय, गदितव्य, गद्य, जल्पनीय, जल्पितव्य, जल्प्य निदशनीय, निर्देश्य, निर्देष्टव्य, भणनीय, भणितव्य, भण्य, भाषणीय, भाषितव्य, भाष्य, लपनीय, लपितव्य, लप्य, वक्तव्य, वचनीय वदनीय, वदितव्य वद्य, वाच्य, विनिर्देश्य। एते त्रिलिङ्गाः स्युः।

वाचकप०[4]—अभिधायक, वक्ता (वक्तृ), वाचक। एते त्रिलिङ्गाः।

उक्त्वावाचकाव्ययप०[5]—उक्त्वा, उच्चार्य्य, उदित्वा कथयित्वा, जल्पित्वा, प्रकथ्य, प्रजल्प्य, प्रलप्य भणित्वा, भाषयित्वा, लपित्वा समप्य, समुच्चार्य्य समुदर्य, सम्भण्य, सम्भाष्य। एते ऽव्ययाः।

उच्चार्य्यमाणप०[6] उच्चार्य्यमाण गद्यमान, जल्प्यमान, निर्दिश्यमान भण्यमान भाष्यमाण, लप्यमान, वक्ष्यमाण। एते त्रिलिङ्गाः।

प्रजगतवाचकशब्दाः[7] अवगत, अवमित, मान-

१–२५ | २६–२१

(१) कहा कहा हुआ (२) कहना (३) कहने योग्य (४) बोलने वाला (५) कह कर (६) उच्चारण किया जाने वाला, कहा जाने वाला (७) जाना, जाना हुआ।

क्षितः, ज्ञातः, परिगतः, परिज्ञातः, प्रतिपन्नः, प्रतीतः, प्रमितः, बुद्धः, बुधितः, मतः, मनितः, विज्ञातः, विदितः, सितः, एते त्रिलिङ्गाः।

**ज्ञातव्यवाचकप०**[1]—अवगन्तव्यः, ज्ञातव्यः, ज्ञातुमर्हः, ज्ञातु योग्यः, ज्ञानकर्म, ज्ञानविषयम् ज्ञेयः, प्रतिपाद्यम्, प्रत्येतव्यः[2], बोधनीयः, बोधयोग्यः, बोधितव्यः, बोद्धव्यः, बोध्यः, विज्ञातव्यः, विज्ञेयः, वेदनीयः, वेदितव्यः, वेदितुंयोग्यः, वेद्यः, संवेद्यः। एते त्रिलिङ्गाः ।

**ज्ञात्वाव्ययवाचकशब्दाः**[3]—अवगम्य, ज्ञात्वा, प्रबोध्य, बुद्ध्वा, विज्ञाय। एतेऽव्ययाः।

**ज्ञापितप०**[4]—ज्ञापितः, प्रबोधितः, बोधितः, वेदितः, सूचितः (त्रि०)।

**ज्ञापितव्यप०**[5]—ज्ञापनीयः, ज्ञापितव्यः, ज्ञाप्यः एतेत्रि०।

**स्मृतपर्यायाः**[6]—कृतस्मरणम्, संस्मृतः, स्मृतः, स्मृतिविषयः।

**स्मरणीयप०**[7]—सस्मरणीयः, संस्मर्तव्यः, संस्मार्यः, स्मरणीयः, स्मर्तव्यः स्मार्यः। एते(त्रि०)।

**स्मृत्वाव्ययप०**[8]—संस्मृत्य, स्मृत्वा। एतावव्ययौ।

**स्मृतिप०**[9]—आध्यानम् (न०), चर्चा (स्त्री०), चिन्तनम् (न०), चिन्ता (स्त्री०), चिन्तिया (स्त्री०), ध्यानम् (न०), स्मरणम् (न०), स्मृतिः (स्त्री०)।

**विचारप०**[10]—चर्चा (स्त्री०), चिन्तनम् (न०), ज्ञानम् (न०), विचारः,(पुं०), विचारणम् (न०), विचारणा (स्त्री०) विचिन्तनम् (न०), वित्तिः (स्त्री०), संख्या (स्त्री०)।

**चिन्तितप०**[11]—चिन्तितः, विचारितः, वित्तम्, विन्नम् (त्रि०)।

**चिन्तनीयप०**[12]—चिन्तनीयः, चिन्तितव्यः, चिन्त्यः, निरूपणीयः, निरूपितव्यः, निरूप्यः, परिचिन्तनीयः, परिचिन्तितव्यः, परिचिन्त्यः, विचारणीयः, विचारितव्यः, विचार्य्यः, विभावनीयः, विभावितव्यः, विभाव्यः, सञ्चिन्तनीयः सञ्चिन्तितव्यः, सञ्चिन्त्यः (त्रि०)।

**चिन्त्यमानप०**[13]—चिन्त्यमानः, निरुप्यमाणः, विचार्य्यमाणः, विचिन्त्यमानः, विभाव्यमानः (त्रि०)।

**चिन्तयित्वाव्ययप०**[14]—चिन्तयित्वा, परिचिन्त्य, प्रविचार्य्य, विचार्य्य, विचिन्त्य, सञ्चिन्त्य (अ०)।

**कल्पितप**[15]**०**—कल्पितः, परिकल्पतः, प्रकल्पितः (त्रि०)।

**कल्पनीयप०**[16]—कल्पनीयः, कल्पितव्यः, कल्प्यः,

१–२२ २३–४४

(१) जानने योग्य (२) 'द्व्यामरे पामरव्योमयासे प्रत्येतव्या नुः क्षतिर्द्रविणस्य'। इति ग्रन्थकारः। (३) जान कर। (४) सूचित, जनाया हुआ, बतलाया हुआ। (५) जो बतलाने के योग्य हो, समझाने योग्य (६) याद किया हुआ (७) स्मरण (याद) करने योग्य (८) याद कर (९) स्मरणशक्ति, याददास्त। (१०) सोचना, विचारना, खयाल। (११) सोचा हुआ, विचारा हुआ (१२) सोचने योग्य, (१३) विचारने योग्य। (१४) विचार कर, (१५) कल्पना किया हुआ। (१६) कल्पना करने योग्य।

परिकल्पनीय·, परिकल्पितव्यः, परिकल्प्य, प्रकल्पनीय, प्रकल्पितव्य·, प्रकल्प्य (त्रि०)।

ऊहप०[1]—अध्याहारः (पुं०), उन्नयनम् (न०), ऊहः (पु०), ऊहनम् (न०), ऊहा (स्त्री०), तर्क, (पु०), परामर्श. (पु०), वितर्क (पु०), वितर्कणम् (न०), विमर्शनम् (न०)।

ऊहितप०[2]—ऊहित, तर्कितः (त्रि०)।

ऊहनीयप०[3]—ऊहनीय, ऊहितव्य, ऊह्य, तर्कणीयः, तर्कितव्य, तर्क्य. (त्रि०)।

तर्कयित्वाप०[4]—तर्कयित्वा, प्रोह्य, सन्तर्क्य, समुह्य (अ०)।

अपोहप०[5]—अपोह (पु), तर्कनिराकरणम् (न०), वितर्काभाव· (पु०)।

गतप०[6]—अतीत., इत·, गतः, प्रगत·, प्रयात.। यातः, विगतः, वीत., व्यतीत (त्रि०)।

[7]गन्तव्यप०—गन्तव्य·, गन्तुमर्ह· गन्तुंयोग्य·, गमनीय·, गम्य·, गम्यमान. (त्रि०)।

[8]गत्वाप०—इत्वा, गत्वा यात्वा (अ०)।

[9]गमनप०—गमनम् (न०), प्रयाणम् (न०), यात्रा (स्त्री०)।

शेषस्त्वन्यत्र।

दानप०[10]—अहति (स्त्री०), अपवर्जनम् (न०), उत्सर्जनम् (न०), त्याग. (पुं), ददनम् (न०), दानम्, निवपणम्, निर्वापणम्, प्रदेशनम्, प्रादेशनम्, वितरणम्, विश्राणनम्, विसर्जनम्, विहायिनम्, स्पर्शनम्। इह ददनत उत्तरे सर्वे क्लीबलिङ्गाः।

[11]दत्तप०—दत्तः, दिष्टः, प्रदत्त, वितरितः (त्रि०)।

हेयप०—हेय. पात्य. हातव्यः, त्याज्यः, (त्रि०), (छोड़ने योग्य)।

[12]दातव्यप०—दातव्यः, दानः, दानीय· देय·, प्रदेय., वितरणीय·, वितर्तव्यः वितर्यः (त्रि०)।

[13]दत्वाव्ययप०—दत्वा, वितर्य, सदाय (अ०)।

[14]समाप्तप०—अवसित., वसितः, समापन्नः, समाप्तः समाप्तिङ्गतः, सितः (त्रि०)।

[15]समाप्तिप०—अवसानम् (न०), समापन्नम् (न०), समाप्तिः (स्त्री०), समाप्तिका (स्त्री०)।

[16]समापनीयप०—समापनीय., समापितव्यः, समाप्य. (त्रि०)।

[17]समाप्याव्ययप०—समाप्य (अ०), समाप्ति प्रापय्येत्यर्थः।

[18]प्रदर्शितप०—दिष्ट., प्रदर्शित. प्रदिष्ट. (त्रि०)।

[19]उपोद्घातप०—उदाहारः, उपक्रमः, उपोद्घातः (पु०)।

१–२२ २३–४४

(१) अनुमान, अटकल। (२) अटकल किया हुआ अनुमान किया हुआ। (३) अनुमान के योग्य, अटकल के योग्य (४) अटकल कर, अनुमान करके। (५) तर्क को दूर करना। (६) गया, गया हुआ। (७) जाने योग्य।(८) जाकर।(९)जाना।(१०)देना। (११) दिया, दिया हुआ, बांटा हुआ। (१२)देने योग्य। (७-क) नयकवान (देवे) विशोपनाम्याम्, इ० जा० अ०। (७-ख) 'वर्तमानार्थके देया, न० ज०। 'देपाः। स्वशो-प्रफलवत्स्फुटस्यो., इति। 'देय तच्चरमरुणे विलिप्तकाशु, इति च य०सा०। देये=ययापन धनर्थ कार्यमित्यर्थः। (१३)देकर। (१४) समाप्त हुआ, पूरा हुआ। (१५)पूर्ति, सम्पूर्ण। (१६)समाप्ति के योग्य। (१७) समाप्त कर। (१८) दिखलाया हुआ। (१९) ग्रन्थ का आरम्भ या कार्यारम्भ।

[1]उदाहरणप०—उदाहरणम् (न०), उदाहृतिः (स्त्री)।

[2]नित्यप० अजस्रम्, अनवरतम्, अनारतम्, अनिशम्, अविरतम्, अश्रान्तम, असक्तम, नित्यम्, समस्तम्, सततम्, सन्ततम्। क्रिया विशेषणत्वे एषां क्लीबत्वम्। द्रव्यविशेषणत्वे तु वाच्य(त्रि०) लिङ्गत्वम्, इति यनिति।

[3]अतिशयप०—अतिमर्यादम्, अतिमात्रम्, अतिवेलम् अतिशयः (पुं०), अत्यर्थम्, उत्कर्षः (पुं०) उद्गाढम्, एकान्तम्, गाढम्, तीव्रम्, दृढम्, नितान्तम्, निर्भरः (पुं०) बाढम्, भरः (पुं) भृशम्।

अत्रविशेषः—

अतिमर्यादमित्यारभ्य भृशशब्दपर्यन्तं नपुंसकलिङ्गे यदुक्तं तत्तु असत्त्वे द्रव्यवृत्तित्वाभावे एव ज्ञेयम्। यथा—शीघ्रं जुहोति। शीघ्रं कृतवान्। भृशं मूर्खः। भृशं याति। सततं भुंक्ते, इति क्रियाविशेषणत्वे एषां शीघ्रादीनां मध्ये यत्सत्त्वगामि द्रव्यवृत्ति तत् त्रिषु। तस्य द्रव्यस्य यल्लिङ्गं तदेवास्येत्यर्थः। यथा—शीघ्रा धेनुः, शीघ्रा जरा। शीघ्रो मृत्युः, शीघ्रो वृषः। शीघ्रं वयः, शीघ्रं गमनम्। अतिशयोत्कर्षनिर्भरभराणां सत्त्वगामित्वं नास्ति। नित्य पुंस्त्वम्।

[4]क्रमपर्यायाः—अनुक्रमः (पुं०), अनुपूर्विका (स्त्री०), आनुपूर्वी (स्त्री०) आनुपूर्व्यम् (न०), आनुवृत् (त्)(स्त्री०) आनुवृत्तिः (स्त्री०), क्रमः (पुं०), परिपाटिः—टी (स्त्री०), पर्याय (पुं०),

[5]उत्क्रमप०—अक्रमः, उत्क्रमः, क्रमविपर्ययः, व्यतिक्रमः, व्युत्क्रमः एते पुंल्लिङ्गाः।

[6]अतिक्रमप०—अतिक्रमः, अतिपातः, उपात्ययः, पर्ययः।

व्यतिक्रमप०[7]—विपर्ययः (पुं०), विपर्यायः (पुं०), विपर्यासः (पुं०), वैपरीत्यम् (न०), व्यतिक्रमः (पु०), व्यत्ययः (पुं०), व्यत्यस्तः (त्रि०), व्यत्यासः (पुं०)।

विपरीतप०[8]—अपष्ठु, अपष्ठुरम्, अपसव्यम्, प्रतिकूलम्, प्रतिलोमम्, प्रतीपम्, प्रसव्यम्, वामम्, विलोमम्, एते क्लीबलिङ्गाः। व्यस्तः (त्रि०)।

शरीरस्य वामभागप०[9]—वामम्, सव्यम्।

शरीरस्य दक्षिणभागप०[10]—अपसव्यम्, दक्षिणाङ्गम्।

प्रथमप०[11]—अग्रम्, आदिः, आदिमम्, आद्यम्, पूर्वः, पौरस्त्यम्, प्रथमम्, एते त्रिलिङ्गाः। अग्रे (अ०)।

मध्यमप०[12]—मध्यम्, मध्यन्दिनम्, मध्यमम्, मध्यमीयस्, माध्यन्दिनम्, माध्यमम्।

१–२१

२४–४६

(१) गणित की क्रिया या दृष्टान्त (मिसाल)। (२) नित्य, निरन्तर, सतत, सर्वदा। (३) अधिकता (बहुतायत)। (४) यथाक्रम (सिलसिला), (५) विपरीतभाव, नियमबद्धता। (६) विरुद्ध व्यवहार, नियम या मर्यादा उल्लङ्घन (७) विपर्यय, क्रमानुसार न होने वाला। (८) विरुद्ध (उलटा)। (९) बायाँ अंग, (१०) दाहिना अंग। (११) पहला, (१२) बीच।

[1]अन्त्यप०—अन्त, अन्तिमम्, अन्त्यम्, चरमम्, जघन्यम्, पश्चिमम्, पाश्चात्यम।

अन्तरालप०—अन्तरालम्, विचालम्, शेपस्त्व-न्यत्र।

अन्तरप०—अन्तरम्, मध्यम्, शेपस्त्वन्यत्र।

[2]निरन्तरप०—घनम् निबिडम, निरन्तरम् सान्द्रम्।

पङ्क्तिप०—आलि ली, आवलि ली, तति धोरणी, पङ्क्ति माला, राजि, लेखा, वीथी, श्रेणि णी।

सलग्नप०—अनन्तरम्, अपटान्तरम्, अपदान्तरम्, अव्यवहितम्, सलग्नम्, ससक्तम्।

अधीनप०—अधीन, आयत्त, गृह्यक, नाथ-वान् (मतु०), निघ्न, परच्छन्द, परतन्त्र, परवश परवान् (मतु०), पराधीन परायत्त, वश। एते त्रिलिङ्गा स्यु।

समीपप०—अन्तिकम् अभित (स) (अ०), अभ्यग्रम्, अभ्यर्णम्, अभ्याशम् अभ्यास, आस-न्नम् उपकण्ठम्, उपान्तम्, निकटम्, पार्श्वम, सदेशम्, सनीडम्, सन्निकर्प, सन्निकृष्टम्, सन्नि धानम्, सन्निधि, समर्यादम्, समीपम्, सविधम्, सवेश, ससीमम्।

विरलप०—तनु, पेलवम्, विरलम्।

ह्रस्वप०—कुब्जम्, खर्वम् नीच, नीची (स्त्री), न्यक् (ञ्च्) (न०) चान्न। मन्यरम्, लघु, ह्रस्व।

उन्नतप०—उच्चम् उच्छ्रितम्, उदग्रम्, उद्धुरम् उन्नत, तुङ्ग प्रांशु।

दीर्घप०—आयतम्, दीर्घम।

विस्तीर्णप०—उरु, गुरु ततम, पृथु पृथुलम् बहु, बृहत् (त्) (न०), महत (न) (न०), वड्रम्, वरिष्टम् विकटम् विपुलम् विशङ्कटम्, विशा-लम् विस्तीर्णम स्फारम्।

स्थूलप०—पीन, पीवा (मन्), स्त्रीपुंसयोस्तु पीवा पीवर, स्थूल।

अधिकप०—अतिरिक्त, अधिक, पुष्ट, प्रपुष्ट, समधिकश्चैते त्रिलिङ्गा स्यु।

अल्पप०—अल्प क्षुल्लम्, क्षुल्लकम्, स्तोक।

अत्यल्पप०—अणीय (अस), अल्पिष्ठ, अल्पीय (अस्), कनीय (अस्)।

सूक्ष्मप०—अणु, कण, कृशम्, क्षुद्रम्, तनु, तलि-नम्, तुच्छम्, त्रुटि टी, दभ्रम् पेलवम्, मात्रा, लव, लेश, श्लक्ष्णम्, सूक्ष्मम्।

बहुलप०—अदभ्रम् पुरहम्, पुरु, पुरुहम्। पुरुहू पुरुह्वौ। क्लीबे तु पुरुहु। पुष्कलम्, प्रचुरम्, प्रभूतम्, प्राज्यम्, बहु, बहुलम्, भूय (अस्), भूयिष्ठम् भूरि, स्फारम्, स्फिरम्।

अनेकप०—अनेक, उच्चावचम्,, नैक, नाना-प्रकारम्, बहु, नैकविधम्, बहुविधम्।

नानारूपप०—नानारूप, नानाविध, पृथ-ग्रूप, पृथग्विध, बहुरूप, बहुविध, विविध.। एते त्रिलिङ्गा।

समान(तुल्य)प०—तुल्य, सदृक् (श्), सदृश, सदक्ष, सधर्मा (र्मन्), सन्निभ, सम, समान, सरूप, सवर्ण, साधारण, अमी वाच्य-



(१) आखिर। (२) घना, अन्तर रहित।

लिङ्गाः सन्ति।

**उत्तरपदस्थसदृशप०**—उपमा, कल्पः, निभः, नीकाशः, प्रकारः, प्रकाशः, प्रख्यः, प्रतिकाशः, प्रतिमः प्रतीकाशः, भूतः, रूपम्, सङ्काश,श्चैते उपमादय उत्तरपदस्था वाच्यलिङ्गाः स्युः।

यथा—पितृनिभः पुत्रः नित्यसमासोऽयं पित्रा सदृश इत्यर्थः। मातृनिभा कन्या मातुः सदृशोऽयर्थः। पितृभूतः, पितृरूपः, पितृकल्पो वा पुत्र.। 'चन्द्रप्रख्यम्' मुखम्। 'काशसङ्काशकेशाः' इति।

**तुलितप०**—उन्मितम्, तुलितम्, तुल्यम्, परिमितम्, प्रमः, प्रमाणम्, प्रमितम्, समानम्, सम्मितम्।

**दोषप०**—दूषणम् (न०), दोषः (पुं०)।

**दूषितप०**—अभिशस्तः, क्षारितः, प्राप्तदोषः, वाच्यम् (त्रि०),

**दूष्यप०**—दूषणीयः, दूषितव्यः, दूष्यः (त्रि०)।

**दुष्टप०**—दुष्टम्, दोषभाक् (ज्), दोषयुक्तः, दोषवान् (मतु०), दोषी (इन्) (त्रि०)।

**त्याज्यप०**—त्याज्यम्, परिवर्जनीयम्, परिवर्जितव्यम्, परिवर्ज्यम्, वर्जनीयम्, वर्जितव्यम्, वर्ज्यम्, विवर्जनीयम्, विवर्जितव्यम्, विवर्ज्यम् (त्रि०)।

**वर्जनप०**—निषिद्धिः, निषेधः, निवर्त्तनम्, प्रतिषेध, वर्जनम्।

**वर्जितप०**—निषिद्धम्, नेष्टम्, वर्जितम्, विवर्जितम्।

**निन्दाप०** अपवादः, अवर्णः, उपक्रोशः, कुत्सा, क्षेपः, गर्हः, गर्हणम्, गर्हा, जुगुप्सनम्, जुगुप्सा, धिक्क्रिया, निन्दा, निर्वादः, परि (री) वादः।

**निन्दितप०**—गर्हितम्, धिक्कृतम्, निन्दायुक्तम्, निन्दितम् (त्रि०)।

**निन्द्यप०**—निन्दनीयः, निन्दितव्यः, निद्यः (त्रि०),

**अधमप०**—अणकम्, अधमम्, अपकृष्टम्, अपशदम्, अर्वन् (न्), अवधम्, अवद्यम्, आणकः, कपूयः, काण्डम्, कुत्सितम्, कुपूयम्, खेटम्, गर्ह्यम्, चेलम्, निकृष्टम्, पापम्, प्रतिकृष्टम्, ब्रुवम्, याप्यम्, याव्यम्, रेपः, रेपः (अस्), रेफः।

**मध्यवर्तिप**—मध्यः, मध्यमः, मध्यवर्ति (इन्), समः, समानः एते त्रिलिङ्गाः।

**गौणप०**—अप्रधानम्, अप्राग्र्यम्, अमुख्यम्, उपसर्जनम्, उपाग्रम्,गुणम्। एते त्रिलिङ्गाः।

**प्रधानप०**—अग्रम्, अग्रणीः, अग्रिमम्, अग्रिमः, अग्रेसरम्, अग्र्यम्, अनवरार्ध्य-र्ध्यम्, अनुत्तमम्, अनुत्तरम्, उत्तमम्, ग्रामणीः, आस्यम्, परम्, परार्ध्य-र्ध्यम्, पुरोगम, प्रकृष्टम्, प्रधानम्, प्रमुखम्, प्रवरम्, प्रवर्हम्, प्रवर्हणम्, प्रवेकम्, प्रष्ठम्, प्राग्रम्, प्राग्रहरम, प्राग्र्यम्, मुख्यम्, युक्तम्, वरम्, वरेण्यम्, वर्य्यम्, श्रेष्ठम्, स्पर्ध्यम्, एते त्रिलिङ्गाः स्युः।

**श्रेष्ठवाचकप०**—व्याघ्रः, पुङ्गवः, ऋषभः, कुञ्जरः सिंहः, शार्दूलः, नागः, आद्यशब्दात्-सोमः, चन्द्रः मुखम्, इत्यादयः। एते उत्तरपदे पुंसि श्रेष्ठार्थगोचराः, (वाचकाः)।

उदाहरण यथा—

पुरुषव्याघ्रः, मुनिपुङ्गवः, पुरुषर्षभः, मनुष्यकुञ्जरः, नृपसिंहः, नृपशार्दूलः, नृपनागः, गोनागः

गोवृन्दारक, नृसोम, नरचन्द्र, चन्द्रमुख। इति।

तदुक्तम्—

'स्युरुत्तरपदे व्याघ्र-पुङ्गव-र्षभ-कुञ्जरा सिंह-शार्दूल-नागाद्या पुंसि श्रेष्ठार्थगोचरा (वाचका)। इत्यमर।

प्रशस्तवाचकप०—मतल्लिका (स्त्री०) मर्चचिका (स्त्री०) प्रकाण्डम (पु० न०), उदघ (पु०) तल्लज (पु०)। इत्येतेऽजहल्लिङ्गा स्यु। एते पञ्चनियतलिङ्गा, अव्युत्पन्नाश्चेति प्राञ्च। अथवा नित्यमेते पञ्च द्रव्यवाचिन स्यु। गोमतल्लिका, गोनाग, गोवृन्दारक, गोतल्लज, गोमर्चचिका, गोप्रकाण्डम्, गवोदघ, इति। अन्यत्र तु ब्राह्मणमतल्लिका, ब्राह्मणमर्चचिका, गोप्रकाण्ड, मनुष्योद्घ, कुमारीतल्लज। समासस्तु—प्रशस्तो ब्राह्मणो ब्राह्मणमतल्लिका, प्रशस्तो ब्राह्मणो ब्राह्मणमर्चचिका, प्रशस्ता गौर्गोप्रकाण्ड, प्रशस्तो मनुष्यो मनुष्योद्घ, प्रशस्ता कुमारी, कुमारीतल्लज। इति।

सुन्दरप०—अभिरामम्, कमनीयम्, कम्रम, कान्तम्, काम्यम् चारु चोक्षम्, च्युक्षम् पेशलम् प्रियम्, बन्धुरम् मञ्जु, मञ्जुलम, मधुरम, मनोज्ञम्, मनोरमम् मनोहरम् मनोहारि रमणीयम् रम्यम्, रुचिरम्, रुच्यम्, लडहम्, वल्गु वामम् शोभनम् साधु सुन्दरम, सुषमम, सौम्यम्, हारि हृद्यम् (त्रि०)।

प्रवीणप०—अभिज्ञ, कुशल, कृतकर्मा (मन्), कृतकृत्य, कृतमुख, कृतहस्त, कृतार्थ कृती (इन्), कृष्टि क्षेत्रज्ञ, चतुर दक्ष, नदीष्ण, निपुण, निष्ण निष्णात, पटु, अकृष्टसार, प्रवीण, विज्ञ, विज्ञानिक, वैज्ञानिक, शिक्षित. (त्रि०)।

दक्षप०—उष्ण, चतुर दक्ष, पटु, पेशल, सूत्थान (त्रि०)।

अतिचतुरप० छइल्ल, छेक, छेकाल, छेकिल, विदग्ध (त्रि०)।

प्रतिभाशालिप०—प्रगल्भ, प्रतिभान्वित, प्रतिमुख, प्रौढ (त्रि०)।

दूरदर्शिप०—दीर्घदर्शी (इन्), दूरदर्शी (इन्), (त्रि०)।

तीक्ष्णबुद्धिमत्प०—कुशाग्रीयमति, सूक्ष्मदर्शी (इन) (त्रि०)।

प्रत्युत्पन्नमतिप०—तत्कालधी, प्रत्युत्पन्नमति (त्रि०)।

पण्डितप०—(१) ज्ञ, वित् (द्), सन् (त्), (२) कवि, कृती (इन्), कृष्टि, धीमान् (मतु०), धीर, प्रज्ञ, प्राज्ञ, बुध, विद्वान् (क्वसु), व्यक्त, सुधी, सूरि, (३) कविता (तृ), कृतीन्द्र, कोविद, दोषज्ञ, पण्डित, प्रबुद्ध, मतिमान् (मतु०), मनीषी (इन्), मेधावी (इन्), विपश्चित् (त्), विबुध, संख्यावान् (मतु०), (४) अभिरूप, कोविदोत्तम, दीर्घदर्शी (इन्), दूरदर्शी (इन्), धीरधर्य, पण्डिताग्र्य, प्राप्तरूप, लब्धवर्ण, विचक्षण, विशारद, सुमतिमान् (मतु०), (५) बुधाग्रगण्य।

क्वचित्तु—(२) आप्त, ऋषि, ज्ञानी, (इन्), पूर्व, महान् (मतु०), मुनि, श्रेष्ठ, (३) अजड,

दिव्यदृक् (श्), पुराणः, प्राक्तनः, प्राचीनः, बहुज्ञः, महर्षिः, महात्मा (अन्), विधिज्ञः, शास्त्रवित् (द्), श्रुतिवित् (द्), सज्जनः, सुमतिः, सुविद्वान् (वस्), (४) चिरन्तनः, ज्ञानदोहः, पुरातनः, भव्याशयः, महान्मुनिः, शास्त्रवेदी (इन्), श्रेष्ठमुनिः, सत्यवादी (इन्), (५) आचार्यमुखः, उदारचित्तः, धिषणालयः, पुराणदृष्टः, पुराणविज्ञः, प्रमाणपटु, बुधाग्रगण्यः, महानुभावः, मुनिपुङ्गवः, मुनिप्रवर्य्यः, शास्त्रप्रवरः, शास्त्रप्रवीणः, पुराणविग्रहः, श्रुतघनजनः, (५) पूर्वमुनिप्रवर्य्यः, श्रुतवारपारगः, (८) वाचाविचारचतुरः, शास्त्रान्तरपारगम्यः (१२) विकसितधिषणाप्रभाभासुरः।

ज्योतिर्वित्प०—(२) ज्ञानी (इन्), (३) आदेशी (इन्), कालवित् (द्), क्षणदः, गणकः, गतिज्ञः, ग्रहज्ञः, ज्योतिर्वित् (द्), दैवज्ञः, दैववित् (द्), नैमित्तः, भार्गवः ? मौहूर्त्तः, होरावित् (द्), हौरिकः, (४) ईक्षणिकः, कार्तान्तिकः, कालप्रियः, गाणतिक, जातकज्ञः, ज्योतिषिकः, दैववेदी (इन्), निमित्तवित् (द्), नैमित्तिकः, फलितज्ञः, मौहूर्तिकः, विप्रश्निकः, सांवत्सरः, साहितिक, हौरिकेन्द्रः, (५) कालवित्तम, ग्रहग्रन्थिविद् (द्) दैवचिन्तकः, दैवज्ञवर्य्यः, प्रश्नार्थवादी (इन्), लग्नलग्नधीः, सुजातकविद् (द्) होरागमज्ञ, होराविचित्र, (६) जातकाकोविदः, ज्योतिषपण्डित, द्रष्टवेधसत्यः, निखिलागमज्ञः, हौरिकाग्रगण्यः, (७) गणकमुनिवरः, प्राक्तनजातकज्ञः, (८) जातकागमदर्शनः, (९) फलितागमबोधवृद्धः, (१०), (१०) जातकार्णवनियाममुख्यः, प्रवरमतियुतहौरिकः (११) होरागमज्ञानविराजमानः होरापारावारपारप्रयातः, होराविधानार्णवपारयातः, (१४) होरागमार्णवतरङ्गविहारदक्षः।

तत्त्वार्थज्ञातृप० –( ) तात्त्विकः, (४) सिद्धान्तज्ञः, सैद्धान्तिकः, (५) ज्ञातसिद्धान्तः, शास्त्रतत्त्वज्ञः।

शकुनशास्त्रप०—निमित्तशास्त्रम्।

[1]शकुनप०—निमित्तम् (न०), शकुनम् (न०)।

शकुनज्ञप०—शकुनज्ञः (त्रि०) शकुनवित् (द्), शकुनवेदी (इन्), शाकुनः, शाकुनिकः।

[2]प्रश्नप०—अनुयोगः, अनुयोजनम्, कथङ्कथिकता, पृच्छा, प्रश्नः।

[3]पृच्छकप०—कथङ्कथिकः, पृच्छकः, प्रश्नकर्त्ता (तृ), प्रष्टा (ष्टृ), प्राश्निकः। एते त्रिलिङ्गाः।

[4]प्रश्नलग्नप०–पृच्छितनुः (स्त्री०) प्रश्नलग्नम् (न०)।

पृष्टप०—पृष्टः (त्रि०)।

[5]पृष्टव्यप०—पृच्छ्यम् (त्रि०), प्रष्टव्य (त्रि०)।

गोचरप० –गोचरः, गोचारः, ग्रहगोचरः, ग्रहगोचारः।

गोचरफलप०—गोचरफलम्, गोचारफलम्, ग्रहगोचरफलम्, ग्रहगोचारफलम्।

१–२६ २७–५२

(१) शुभाशुभलक्षण, शकुन, (२) पूछना (३) पूछनेवाला, (४) पूछने के समय का लग्न, (५) (६) पूछाजाने योग्य।

यथा—जन्मराशेः सकाशाद् ग्रहाणां सञ्चारवशेन शुभाशुभफलं यत्तद् ग्रहगोचरफलं ज्ञातव्यमिति । जन्मचन्द्राधिष्ठितराशितस्तत्काले (वर्तमानसमये) रव्यादयो ग्रहा यस्मिन् यस्मिन् तन्वादिभावे वर्त्तन्ते तज्जन्यगोचरफलानि ते नराणां प्रयच्छन्तीत्यर्थः ।

**सामुद्रप०**—देहलक्षणम्, शरीरचिह्नम्, सामुद्रम्, समुद्रोक्तशास्त्रम् ।

**सामुद्रिकप०** सामुद्रकः, (त्रि०), सामुद्रिकः (त्रि०), स्त्रीपुंसयोश्चिह्नवेत्ता (तृ) (त्रि०) ।

तदुक्तम्—

'वेत्ता स्त्रीपुंसयोश्चिह्नं सामुद्रिक उदाहृतः ।' इति हारावल्याम्, ३६१।६१

**फलप०**—फलम् (न०), व्युष्टिः (स्त्री०), परिणामः (पुं०), 'प्रयोजन' इति भाषा ।

**फलितप०**—फलितः (त्रि०), सफलसञ्जातफलम्, 'ज्योतिश्शास्त्र का फलित' (होरा) भाग । इति भाषा ।

**स्फुरणप०**—स्पन्दः, स्पन्दनम्, स्फुरणम्, स्फारणम्, स्फुरः, स्फुरणम्, स्फुरणा, स्फुरितम्, स्फुननम्, स्फोरणम् । 'शरीर का फड़कना' इति भाषा ।

अस्य फलम्—

'अङ्गस्य स्फुरणं भवेच्छुभतरं पार्श्वे सदा दक्षिणे भागे वामं इहाप्रशस्तमुदितं स्त्रीणां विलोमं मतम् ।' इति ज्योतिस्तत्त्वे ४३।१३५६।४४

**छिक्काप०**—क्षवः (पुं०), क्षुत् (स्त्री०), क्षुतम् (न०), छिक्का (स्त्री), 'छींक' इति भाषा ।

अस्य फलम्—

'छिक्का कलिश्चेत्पुरतोऽस्य मध्ये छिक्काऽऽत्मनोऽतीवभयं तदूर्ध्वम् । स्वप्ने क्षणे भोजनदानपीठे वामाङ्गपृष्ठे शुभदाः क्षुतः षट्' इति ज्योतिस्तत्त्वे ४३।१३५६।८२

**स्वप्नप०**—प्रसुप्तविज्ञानम् (जाग्रद्वासनामय.), स्वप्नः ।

अस्य भेदाः—

(१) दृष्टः, (२) श्रुतः, (३) अनुभूतः, (४) प्रार्थितः, (५) कल्पितः, (६) भावितः, (७) दोषजश्चेत्येते स्वप्नस्य सप्तभेदाः स्युः ।

अस्यान्ये प्रभेदाः—

(१) स्पष्टस्मृतिः, (२) अस्पष्टस्मृतिः (३) अस्मृतिश्चेत्येतेऽन्ये त्रयः प्रभेदाः स्युः ।

**उपश्रुतिप०**—आकाशवाणी (स्त्री०), उपश्रुतिः (स्त्री०), चित्तोक्तिः (स्त्री०), देवप्रश्नः (पुं०), पुष्पशकटी (स्त्री०), 'आकाशवाणी' इति भाषा ।

तदुक्तम्—

'अथस्यात्पुष्पशकटी देवप्रश्न उपश्रुतिः ।' इति कल्पद्रौ ६६।६७। 'चित्तोक्तिः पुष्पशकटी देवप्रश्न उपश्रुतिः ॥' इति त्रिकाण्डशेषः । तज्ज्ञानप्रकारमाह 'पुरुषोत्तमदेवः—'नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा देवप्रश्नमुपश्रुतिम् ॥ इति हारावल्याम् ३६८।२२

**सांहितिकप०**—संहिताशास्त्रज्ञः, संहिताशास्त्रवेत्ता (तृ), सांहितिकः ।

**ईतिप०**—ईतिः (स्त्री०), नृपेः षट् (सप्तवा) प्रकारोपद्रवविशेषः । अजन्यम्, उत्पातः (विप्लवः), कलहभेदः (नृपतिरहितयुद्धम्),

डिम्ब', प्रवासः, इति।

कृपेः षट्प्रकारोपद्रवभेदा—अतिवृष्टिः, (२) अनावृष्टिः, खण्डवृष्टिः, (३) शलभाः, (४) मूष (षि) काः, (५) शुका (खगाः), (६) अ (प्र) त्यासन्नाश्च राजानः इत्येताः षट्ईतयः स्यु। अथवा स्वचक्रम्, (७) परचक्रम्, इत्येताः सप्त ईतय' स्युः।

उक्तं च—

'अतिवृष्टि-रनावृष्टिः शलभा मूष (षि) का शुकाः (खगाः)। अ (प्र) त्यासन्नाश्च राजानः षडेता ईतयः स्मृताः॥ अथवा—स्वचक्र परचक्र वा सप्तैता ईतयः स्मृता'।' इति पाठान्तरम्।

अजन्यप०—अजन्यम् (न०), १ उत्पातः, उपद्रवः, उपप्लवः, उपसर्गः, शुभाशुभसूचकमहाभूत-विकारः। २ रोगप्रभेदः।

तदुक्तम्—

'विदुरजन्यमुत्पातम्' इति हारावल्याम्। ४०६।२१०

उत्पातभेदाः—(१) दिव्योत्पातः, (२) आन्त-रीक्ष्योत्पातः, (३) भौमोत्पातः। इत्युत्पातस्य त्रयो भेदाः स्युः। तत्र दिव्यो यथा—अपर्वणि चन्द्रादित्यग्रासः। आन्तरीक्ष्यो यथा—उल्कापात-निर्घातादिः। भौमो यथा—भूकम्पादिः।

उल्कापातपर्यायौ—उल्कापात., अग्निशिखा-वर्त्तज. पात.।

निर्घातप०—निर्घातः (पु०), व्योममुद्गरः (पु०)।

तदुक्तम्—

'निर्घातो व्योममुद्गर.।' इति हारावल्याम्। ४०६।२१ साभ्र्वानिहतवायुप्रपतनजन्यशब्दविशेषः। यथाऽऽहवराहः'—'पवनः पवनाभिहतो गगना-दवनौ यदा समापतति। भवति तदा निर्घातः स च पापो दीप्तविहगरुतः॥' इति श. चि० २।१४०

भूकम्प०—(पु०) भूकम्पनम् (न०), भूचलः, (पु०), भूचलनम् (न०), उत्पातविशेषः। 'भूचाल' इति भाषा।

तदुक्तं शब्दार्थचिन्तामणौ-२-२४८

'क्षितिकम्पमाहुरेके वृहदन्तर्जलनिवाससत्त्वकृतम्। भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये॥ अनिलोऽनिलेन निहतः क्षितौ पतन् स स्वनं करोत्यन्ये। केचित्त्वदृष्टकारितमिदम॰ये प्राहुरा॰चार्य्या॥' इति॥

तत्रैवास्य फलमाह-वशिष्ठः—

'यामक्रमाच्च भूकम्पो द्विजादीनामनिष्टदः। अनिष्टद', क्षितीशाना सन्ध्ययोरुभयोरपि॥ इति श० चि० १-४४८।

दिग्दाह-(पु०) उत्पातविशेष.। यथाऽऽहास्य लक्षणं वराहाचार्य्यं—तत्र वर्णभेदेन तस्य फलम्—'दाहो दिशा राजभयाय पीतो देशस्य नाशाय-हुताशवर्णः। यश्चारुणः स्यादपसव्यवायुः सस्यनाश च करोति दृष्टः॥ योऽतीवदीप्त्या कुरुते प्रकाश छायामभिव्यञ्जयतेऽर्कवद्यः। राज्ञो महद्वे दयते भय स शस्त्र-प्रकोपं क्षतजानुरूपः॥' इति श० चि० १-११६९।

केतुप०—केतुः (पु०), शिखी (इन्) (पु०), स चोत्पातरूपः। अत्र केतुरित्येकवचनं जात्यभि-प्रायेण। इति।

इति श्रीमुकुन्दवल्लभविरचिते ज्योतिषशब्दकोशे॰ऽष्टादश प्रकीर्णवर्गः समाप्तिमगमत्।

## शब्दव्युत्पत्तिवर्गः—

तत्रादौ शब्दपर्यायानाचष्टे–

'शब्दो, व्योमगुण, स्वनिर्नादि, रसो, घोषो, न ना
गर्जना ध्रूणा, क्ष्वेडविरावरावरवणा, गानाभि-
धाने, स्वन । कान, कूजित-कूजने,च मशन, गर्जा
द्वयो,-गुञ्जन, निर्घोषो, निनद, स्वर, कुहरित,
निह्लादको, निस्वन ॥१॥ सरावाऽऽरववाचका
श्च रणको, ध्वानो, भिधा, मुञ्जन, ह्लादो, गञ्ज
नरेभणे, क्वणनक, क्वाण, क्वणो, निक्वण ।
निक्वाणोऽपि च कोरण, नदि, कणि ह्लासाभिलापा,
वपि स्वानाऽऽरावकवा, ध्वनिनदि, तथा नादो,
निनादो, रव. ॥२॥

अनयोर्व्याख्या – शब्द इति । सरावेति च । शब्द', व्योमगुण स्वनि, रस, घोष, गर्जना, ध्रूणा, क्ष्वेड, विराव, राव, रवण, गानम्, अभिधानम्, स्वन, कानम्, कूजितम् कूजनम् मशनम्, गर्जा, गुञ्जनम्, निर्घोष निनद, स्वर, कुहरितम्, निह्लादक निस्वन, सराव, आरव, वाचक, रणक, ध्वान, अभिधा, मुञ्जनम्, ह्लाद, गञ्जनम्, रेभणम्, क्वणनकम्, क्वाण, क्वण, निक्वण, निक्वाण, कोरणम् कणि ह्लास, अभिलाप', स्वान, आरव, कव ध्वनि, नाद', निनाद, रव ।' इति शब्दमात्रस्य द्विपञ्चाशन्नामानि स्यु । तत्र गर्जना स्त्रीक्लीबयो । गर्जा स्त्रीपुंसयो'। स्वनि, कणि, ध्वनिश्च पुंसि । क्वणनम्, नि स्वन, नि स्वान निस्वान, रण, इत्यन्ये शब्दा अपि शब्दपर्यायेषु दृश्यन्ते ।



अथेदानीं शब्दभेदान्व्याचष्टे–

'रूढश्च यौगिको योगरूढाख्य पारिभाषिक ।
एव चतुर्विधा शब्दास्त्रिविधा इति केचन ॥३॥
रूढयौगिकमिश्रास्ते मण्डपाखण्डलौ मणि ।
व्युत्पत्तिवर्जिता रूढा अथो योगोऽन्वयश्च
स ॥ ४ ॥ गुणात क्रियाया सम्बन्धात्सञ्जा-
तोऽत्र ततो गुणात् । श्यामाङ्ग पीतवासाश्च
क्रियाया कर्त्तृतुल्यका ॥५॥

एषा व्याख्या—रूढ इति । रूढेति । गुणादिति च । (१) रूढ, (२) यौगिक, (३) योगरूढ, (४) पारिभाषिकश्च । एव शब्द प्रकारार्थं । चतुर्विधा शब्दा, भवेयुरिति शेष । केचन शब्दवेदिनस्तु रूढ, यौगिक, मिश्रश्च ते त्रिविधा इत्याहु । 'तत्र रूढाञ्छब्दान्व्याचष्टे – प्रकृति प्रत्ययविभागेनान्वयवर्जिता व्युत्पत्तिरहिता शब्दा रूढा स्यु । मण्डप—आखण्डल—मणि—नूपुरादय इत्युदाहरणम् । "यौगिकशब्दान्व्याचष्टे—शब्दानामन्योन्यमयनुगमनमन्वय सयोग । स च पुन योगो गुणात्, क्रियाया सम्बन्धाच्च भवति । गुण श्यामपीतादि । क्रिया करोत्यादिका । सम्बन्धो वक्ष्यमाण सञ्जातो यस्य स तथ ।" गुणक्रियासम्बन्धयोगेन यौगिकानामुदाहारणम्–गुणतो गुणनिबन्धनो येषा योगस्ते शब्दा श्यामाङ्ग, पीतवासा इत्याद्या । श्याम अङ्गमस्य इति गुणप्राधान्याद् श्यामाङ्ग 'बुध'। पीत वासाऽस्य इति गुणप्राधान्यात् पीतवासा 'बृहस्पति'। एव कौसुम्भवासा 'सूर्य' इत्यन्येऽप्यूहनीया । सख्याऽपि गुण एव इति । एकदन्त 'गणेश.'।

तेन—एकदेह 'बुध'। द्विरद हस्ती। द्विरेफ भ्रमर। त्रिलोचन 'शिव'। त्रिशिरा 'असुर विशेष। चतुर्मुख ब्रह्मा'। चतुर्बाहु 'विष्णु'। पञ्चबाण काम'। पञ्चार्चि 'बुध' षडङ्घ्रि भ्रमर। षण्मुख स्कन्द। सप्तपर्ण सातवण' इति ख्याता वृक्ष। सप्तार्चि शनि। सप्ताश्व सूर्य। अष्टमूर्ति शिव। अष्टश्रवा ब्रह्मा। नवार्चिष शिव। नवार्चि भौम। दशकण्ठ रावण। दशाश्व चन्द्र। एकादशद्वारशरीरारव्य पुरम्। द्वादशभुज स्कन्द। द्वादशार्चि बृहस्पति। षोडशाङ्घ्रि कर्कट। षोडशार्चि शुक्र। विंशतिभुज रावण। शतक्रतु इन्द्र। शताङ्गुलि, रावण। दशशतकर सूर्य। सहस्रनयन इन्द्र। सहस्रबाहु कार्तवीर्य। सहस्रवदन शेष। सहस्रांशु सूर्य इत्यादि सगृहीतम्। क्रियाया क्रियानिबन्धनो योगो येषा ते कर्तृप्रभृतय। करोति इति करणप्राधान्यात्कर्त्ता ब्रह्मा एव धाता विधाता इत्यादय।

अथ साम्प्रत सम्बन्ध व्याचष्टे—

निजेशत्वादिसम्बन्धो नामाहुस्तत्रतद्वताम्। स्वान्नाथा-धीश-नेतार इन्द्रश्च नायक प्रभु ॥६॥ स्वामी-शानो-ऽधिभू-पाल-पति-भर्त्तार ईशिता। क्वचिदत्र धरो माली पाणिर्मत्वर्थपूर्वका ॥७॥ अनयोर्व्याख्या—निजेति। स्वामीति च। निजम् आत्मीयम्, ईश स्वामी यस्तत्र प्रभविष्णु उत्पत्तिकाले सर्वस्य प्रभवनशील इत्यर्थ। तयोर्भावो निजेशत्वम्। तदादिसम्बन्ध। आदिशब्दात्कार्यकारणभावादि परिग्रह। इति। 'तत्र निजेश-भावसम्बन्धे नाथादय शब्दा निजात्(मूलशब्दात्) परे नियोजिता तद्वता ईशाना स्वामिना नाम आहु ब्रुवन्ति। मत्वर्थपूर्वका इति। मतुस्तद्धित। तस्यार्थोऽस्त्यर्थविशिष्टप्रकृत्यर्थेन सह देवदत्तादे सम्बन्ध। तदाधारो वा 'तदस्यास्त्यस्मिन्निति मतु' इति मतुप्रत्ययविधानात्। मतोरर्थो यस्य स मत्वर्थकस्तद्धितो मतुना समानार्थ इत्यर्थ। स च इन्नणिकादि। स यथाव्यभिचारान्मतुरपि। आदिशब्द दर्शितादयोऽपि। 'नामाहुस्तत्र तद्वताम्' इति उत्तरेष्वप्यनुवर्तनीयम्।

अत्र क्रमेणोदाहरणानि व्याचष्टे—

'ग्रहनाथो ग्रहाधीशो ग्रहेन्द्रो ग्रहनायक। ग्रहप्रभुर्ग्रहस्वामी ग्रहेशानो ग्रहाधिभू ॥८॥ ग्रहपालो ग्रहपतिर्ग्रहभर्ता ग्रहेशिता। अंशुमाली चांशुधरोऽप्यंशुपाणिस्तथांशुमान् ॥९॥ इति रूढया कवीन्द्राणा स्मृतोदाहरणावली।' इति

अनयोर्व्याख्या—ग्रहनाथ इति। ग्रहपाल इति। इतीति च। ग्रहनाथ, ग्रहाधीश, ग्रहेन्द्र ग्रहनायक, ग्रहप्रभु, ग्रहस्वामी (इन्), ग्रहेशान, ग्रहाधिभू, ग्रहपाल, ग्रहपति, ग्रहभर्ता (तृ), ग्रहेशिता (तृ), क्वचित्—अंशुमाली (इन्), अंशुधर, अंशुपाणि, अंशुमान् (मत्वन्त), 'सूर्य'। इतिशब्द प्रकारार्थ। तेन ग्रहाधिपादयोऽपि। कवीन्द्राणा कविश्रेष्ठाना रूढि परम्परा तया न तु कविस्वरपतिक्रमण। एषा उदाहरणावली उदाहृति श्रेणी स्मृता ज्ञेया।' इति।

अथात पर रव्यादीनां यौगिकशब्दानाह—

'क्रमेण यौगिकाञ्छब्दान्स्वानिनादीनां प्रवक्ष्यहम्।

अस्यार्थं —क्रमेणेति । क्रमेण क्रमत इनादीनां सूर्यादीनां यौगिकान् शब्दान् योगजशब्दान् अहम् प्रवच्मि प्रवीमि ।

तत्राऽऽदौ रवेर्यौगिकशब्दानाह—

'पति-र्जलजिनी-छाया सञ्ज्ञा-वडवा राज्ञीभ्यश्च । स्वामी, गो-द्यु-प्रहतो, गोविन्दपदत-स्तिलक-मणी कम-जगद्भ्या साक्षी, चक्रवाका-ऽम्बुज लोकेभ्य । बन्धु, प्रभाया करो, दिनात्स्वामी कर-कृ-न्मणयश्च । अम्बरतो ध्वज-मार्गगा,-वश्व-ब्जाभ्या हस्तो, ध्वान्ताद् द्विट् । तेजो-महोभ्या राशि-र्निधी, सहस्र-तिग्मो-ष्णतो रश्मि । मतुबन्ताश्च विवस्वद्-भानु-ज्योति-रर्चिषो, विज्ञेया । जगतश्च नेत्र-दीपौ, शनि-कर्ण-यम-सुग्रीवेभ्यश्च सू ॥१४॥ नामान्येतानि रवे'-रिति ।

एषा व्याख्या—रविरिति । कर्मेति । अम्बरत इति । मतुबन्ता इति । नामानीति च । जलजिनी, छाया, सञ्ज्ञा, वडवा, राज्ञी, चेभ्य शब्देभ्य परत पतिशब्दो नियोज्यस्तदा रविनामानि स्यु । यथा-जलजिनीपति, छायापति, सञ्ज्ञापति, वडवापति, राज्ञीपति ।' इति । गो, द्यु, प्रहश्चेभ्य शब्देभ्य परत स्वामिशब्दो नियोज्यस्तदा रवेर्नामानि स्यु । यथा—गोस्वामी, 'द्युस्वामी, प्रहस्वामी तदा तद्वत् । गोविन्दपदत आकाशशब्दादुत्तरे तिलक-मणीचेत्तदा तद्वत् । यथा—गोविन्द-पदतिलक, गोविन्दपदमणि ।' इति । कर्म-जगच्चाभ्यामुत्तरे साक्षिशब्दश्चेत्तदा तद्वत् । यथा—कर्मसाक्षी, जगत्साक्षी ।' इति । चक्रवाक अम्बुजम्, लोकश्चेभ्य परतश्चेद्बन्धुशब्दस्तदा तद्वत् । यथा—चक्रवाकबन्धु, अम्बुजबन्धु, लोकबन्धु, इति । प्रभाया उत्तरे यदि करशब्दस्तदा तद्वत् । यथा-प्रभाकर, इति । दिनात्परत स्वामी, कर, कृन, मणि-श्चैते शब्दा स्युस्तदा तद्वत् । यथा—दिनस्वामी, दिनकर दिनकृत्, दिनमणि, इति । अम्बरत उत्तरे यदा ध्वज-मार्गगशब्दौ स्याता तदा तद्वत । यथा अम्बरध्वज, अम्बरमार्गग । इति । अशु, अब्ज, चाभ्यामुत्तरे यदा हस्तस्तदा तद्वत् । यथा—अंशुहस्त, अब्जहस्त । इति । ध्वान्तादुत्तरे यदा द्विट् तदा तद्वत् । ध्वान्त-द्विट् । इति । तेज, महश्च भ्यामुत्तरे यदा राशिनिधिशब्दौ स्याता तदा तद्वत् । यथा-तेजो-राशि, तेजोनिधि, महोराशि, महोनिधि, इति । सहस्रम् तिग्मम्, उष्ण चेभ्य परतो यदा रश्मिशब्दस्तदा तद्वत् । यथा-सहस्ररश्मि, तिग्मरश्मि, उष्णरश्मि ।' इति । विवस्वद्, भानु ज्योति अर्चिश्चैते शब्दा यदा मतुप्प्रत्य-यान्तास्तदा तद्वत् । यथा—विवस्वान्, भानुमान् ज्योतिष्मान्, अर्चिष्मान् ।' इति । जगत उत्तरे यदि नेत्रदीपौ शब्दौ स्याता तदा तद्वत् । यथा जगन्नेत्र, जगद्दीप ।' इति । शनि, कर्ण, यम, सुग्रीव, श्चैभ्य उत्तरे यदि सूशब्दस्तदा तद्वत् । यथा-शनिसू, कर्णसू, यमसू, सुग्रीवसू । इत्येतानि रवेर्नामानि स्यु ।

अथ सम्प्रति चन्द्रस्य यौगिकशब्दानाह—

'अथ विधो,—हिम-सित सुधाभ्यो दीप्ति । पीयूषस्सू श्चाङ्ग, हरिण-शश-च्छायाभ्योऽङ्क-धर, भृत ॥१५॥ राका-रात्रि—कौमुदी-तारा—

